THE

# PRINCESS OF WALES SARASVATI BHAVANA TEXTS SERIES



*( Published under the authority of the Government of the United Provinces )*



*General Editor*

DR. MANGAL DEVA SHASTRI

M. A., D. PHIL. ( OXON )

PRINCIPAL

GOVERNMENT SANSKRIT COLLEGE

BENARES

No. 82

Title THE

# VIKRAMĀṄKADEVACARITA

## MAHĀKĀVYA of Bilhana

महाकविश्रीबिल्हणविरचितम्

# विक्रमाङ्कदेवचरितम्

महाकाव्यम्

---

THE

# VIKRAMĀṄKADEVACARITA

MAHĀKĀVYA

---



*Edited by*

SHASTRI MURARI LAL NAGAR

SĀHITYĀCHĀRYA

SADHO LAL RESEARCH SCHOLAR

SARASVATI BHAVANA, BENARES.



---

1945

---

# FOREWORD

I have great pleasure in introducing the present edition of the Vikramāṅkadevacarita Mahākāvya to the scholars of Sanskrit. The *raison d'ētre* of the edition has been set forth in detail by the learned editor in his Introduction. The reader of the book will readily discover the great usefulness of the edition, from the point of view of not only its critical apparatus, but also the glossary of the difficult and unusual words, mostly based on the notes given in the scribe's own hand on the ancient Jaïsalmer Manuscript on which the present edition of the work is mainly based.

This is the third edition of the book, the first two editions being those of Dr. Bühler and Pt. Rāmāvatāra Sharmā respectively. Pt. Ramāvatāra Sharmā's edition, for the reasons explained in the Introduction, strictly speaking, does not deserve to be called an edition at all. One wonders how he condescended tc associate his name with it. Dr. Bühler deserves every credit for bringing this great literary work, for the first time, in the printed form, to the notice of the learned world. His edition was based on the single Jaisalmer Manuscript, the only Manuscript available at that time. But it would seem that owing to some reasons he could not make the fullest use of that Manuscript.

For the reasons stated above a new edition of the work was a long desideratum. It was all the more keenly felt when the

book was prescribed, for the first time in 1940, for the Sāhitya Āchārya Examination of the Govt. Sanskrit College Examinations, U. P., Benares. The editorial duties, on his own request, were assigned by me to Pt. Murāri Lāl Nāgar, Sāhityāchārya, then working as a Sādholāl Research Scholar in the Sarasvati Bhavan Library, Benares. I am glad that through his perseverance, close study and hard labour, lasting for about five years, he has been able to bring the difficult task to a successful conclusion. He has spared no pains, not only in properly utilizing to the fullest extent possible the available Manuscript material, but also in carefully studying the work itself from the literary point of view. I am sure the merit of the edition, with its Introduction, foot-notes, various indexes and appendices, will be properly appreciated by the learned public.

Sarasvati Bhavana,
Benares.
1-3-45

M. D. Shastri

भुजवनतरुच्छायां येषां निषेव्य महौजसाम्

जलधिरशना मेदिन्यासीदसावकुतोभया ।

स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहम्

प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥

**कल्हणस्य.**

# विषयानुक्रमणी





श्रीः

# प्रस्तावना



अथेदमारभ्यते महाकविबिल्हणप्रणीतविक्रमाङ्कदेवचरितमहाकाव्यस्य प्रस्तुतसंस्करणविषयकं प्रास्ताविकं किञ्चित् । तत्र तावदादौ —

## काव्यमूलसंशोधनोपयोगिनां पुस्तकानां साङ्केतिकचिह्नविवरणसहितः परिचयः ।

### ज. पुस्तकम् ।

जैसलमेरबृहज्ज्ञानकोशभाण्डारस्थं १२८६ ई० वत्सरतोऽपि प्राचीनमतितमां शुद्धं, सुलिखितं, सुरक्षितं चारुतमं चैतत्पुस्तकं प्रत्नपुस्तकानां साधुत्वस्य शुद्धत्वादिकस्य च नूनं निदर्शनीभूतम् । अस्याक्षरलिपिः प्राचीना जैनदेवनागरीति नास्त्यनभ्यासिनां सुवाच्या । डा० ब्युह्लरमहोदयैः केषुचिदक्षरेषु वस्तुतोऽविद्यमानमपि भृशमन्योन्यसाम्यं प्रतिपादितम्, परं तेषु भेदो दृश्यत एव । १६ × २″ आकारात्मकेषु १५८ तालपत्रेष्वत्युज्ज्वलमसीलिखितेऽस्मिन् पुस्तके पत्रसंख्याङ्काष्टिप्पण्यश्च स्वर्णमय्या मस्या लिखिता आसन्, या मसी सांप्रतं घर्षणादिना कृष्णेवावलोक्यते ।

समस्तेऽपि पुस्तके पञ्चषाणि पत्राणि विहाय लिपिः सर्वथा स्पष्टास्ति । डा० ब्युह्लरमहोदयावलोकनकालादद्य पुस्तकं किञ्चित्परिवर्तितं स्यादित्यनुमातुं शक्यते, परं पट्टणजैनभाण्डारस्थेन १४८५ ई० वत्सरीयेण ज. पुस्तकप्रतिलिपिरूपपुस्तकेन प्रमाणीक्रियते यदितः शतकचतुष्टयादपि प्राक् पुस्तकमिदमीदृगेवावर्त्तत, तत्रत्याश्च घर्षणादिजन्या दोषास्ततोऽपि प्राक्तनाः सन्तीति ।

शुद्धतमेऽपि पुस्तके प्रमादवशाज्जातेषु लेखनस्खलितेषु साधु संशोधनं, सर्वत्र सरलरेखाभिः पदच्छेदसूचनं, सवर्णदीर्घेषु पदच्छेदपुरःसरम् ऽ ( = अ ), ऽ। ( = आ ) प्रभृतिचिह्नैरर्थानां स्पष्टीकरणं, सन्धिवशात् संयुक्तवर्णानां, पृथक्कृत्य ( म् अ ) ( = म ) इत्येवमुपरि लेखनं, ३ ( = तृतीया ), ४ ( = चतुर्थी )

इत्याद्यङ्कैः समासविभक्तीनां निर्देशः—एवमादयो बहवोऽद्भुतविषया अवलोक्यन्ते। उत्प्रेक्षाद्यलङ्कारसूचनाय ( ° ) प्रभृतिचिह्नानां प्रयोगो दृश्यते। अन्यच्च न केवलं कर्तृकर्मादिपदैः कारकाण्येव बोधितानि, प्रत्युत परस्परसंबद्धानां दूरस्थानामपि पदानां ˘, ˘ प्रभृतिविविधचिह्नैः सम्बन्धो निर्दिष्टः। क्रियाविशेषणानि पुनः क्वचन नाम्ना, क्वचन पुनः यथाभ० ( यथा भवति ) इति सूचितानि।

पुस्तकेऽस्मिन् विषमस्थलार्थावबोधिका टिप्पणी सर्वविषयेभ्योऽपि विशिष्यते। = ईदृशचिह्नद्वयान्तरवस्थापिताः संक्षिप्ताः संगताश्चार्थाः पत्राणां प्रान्तचतुष्टयेऽपि सूक्ष्माक्षरैर्लिखिताः। परं पत्रपङ्क्त्यङ्काभावेन स्थानविशेषस्यावगन्तुमशक्यत्वात्क्वचन भ्रान्तिरुत्पद्यते। पुस्तकलेखनकाले प्रमादपरित्यक्ता वर्णास्तत्र तत्रेदृशं ‸ चिह्नं विधाय, ×–× ईदृशचिह्नद्वयान्तःस्थापिताः सन्निधावेव लिखिताः। तानीमान्युपकरणानि काव्यार्थं नितान्तं सारल्येनावगमयन्ति।

प्र. पुस्तकम्।

पुण्यपत्तनस्थभाण्डारकरप्राच्यगवेषणासंस्थायाः ( Bhandarkar Oriental Research Institute, Poona ) अधिगतं पुस्तकमिदं डा० व्युहूलरयाकोबी-महोदयाभ्यां, १८७४ ई० वत्सरे स्वहस्तलिखिता ज. पुस्तकप्रतिलिपिः। स्थूलेष्व-तिमहत्सु ( १२॥ × ८″ ) कर्गलेषु नातिसुन्दराक्षरैर्लिखिता सेयं प्रतिलिपि-र्नास्ति निर्दोषा सुवाच्या वा। दुर्गमोद्भसे जैसलमेरनगरे कृततत्पुस्तकप्रथमपरिचयै-स्त्वरातुरैः डा० व्युहूलरमहोदयैः, प्रगुणगुणभूयिष्ठस्यापि ज. पुस्तकस्य कृतेयं प्रति-लिपिस्तदीयलिपेरतिप्राक्तनत्वेन बहुविधहेत्वन्तरैश्च प्रभूताशुद्धिबहुलाभूत्।

अत्र बह्वक्षराणामन्योन्यं परिवर्तनं,[1] अनुस्वाराणामस्पष्टत्वं, विंशत्यधिकबह्वक्षर-रिक्तस्थानानि, संख्यातीता एकाक्षरलोपाः—एवमादयो बहवो दोषा दृष्टिपथं प्रयान्ति। सेयं प्रतिलिपिरीदृशविविधदोषभूयिष्ठेति मुद्रणावसरे तत्प्रतिलिपिकर्तुर्भ्रमोत्पा-दिका भवेदत्र किं चित्रम्। परं सोऽपि स्वबुद्धिवैभवेन काश्चन नूतनाशुद्धीरसृजत्।[2]

---

१ च-व, प-य, न-त, म-भ, न-म, क-व प-म, न-भ-प्रभृति )।

२ यथा प्र. पुस्तके विद्यमानमपि पद्यद्वयं ( चतु० ११३; अष्ट० ६९, ) ब. पुस्तके नास्ति।

सत्यमेव ज. पुस्तकं क्वचिदशुद्धम्, परं प्र. पुस्तके ततोऽप्यधिका अशुद्धयः सन्ति। ज० पुस्तके परमार्थतो दोषास्त्वल्पा एव, भूयांसस्तु तथाविधा एव सन्ति येषु लेखकस्य लिपेश्च जैनत्वमेव हेतुः। यथा य-ज, प-व, न-ण, द-ड, स-श, ल-ड प्रभृत्यक्षराणां, शेखर-षण्डप्रभृतिपदेषु ष-खयोः, स्वगादिशब्देषु स्व-श्वयोरन्योन्यं परिवर्तनानि दृश्यन्ते। समस्तेऽपि पुस्तके 'ब'वर्णस्य, 'च्छ' इतिसंयुक्ताक्षरस्य च प्रयोग एव नास्ति। यद्द्वित्वानि सन्ध्यभावश्च क्वचिद्दोषमादधते। किञ्च ग्रन्थस्य प्राचीनत्वेन पाठानामस्पष्टत्वमपि दोषवृद्धावेकं महत्कारणमभूत्।

सर्वथाऽस्पष्टान्यद्यादृश्यान्यक्षराणि तु डा० ब्युह्लरमहोदयैः प्रतिलिपिकालेऽवगतानि, अद्यापि स्पष्टानि तूपेक्षितानीति महच्चित्रम्। ज. पुस्तके लुप्तप्रायं 'तेन वारिनिधि' इत्यक्षरषट्कं ( पञ्च० १६ ) डा० ब्युह्लरमहोदयैः संग्रथ्य ब. पुस्तके निवेशितम्। तदिदं तेषामनुपमप्रतिभावत्त्वं साधयदस्माकं विस्मयं जनयति। परमितोऽधिकं विस्मयावहानि बहूनि विपरीतस्थलान्यपि पुर उपतिष्ठन्ति। तथाहि— प्र. पुस्तके 'बृहद्वारवास्ते' ( षोड० ५१ ) इत्यशुद्धः पाठोऽस्ति, ज. पुस्तके त्वद्यापि 'बृहद्वाराग्रघण्टारवास्ते' इति स्पष्टमेवास्ते। डा० ब्युह्लरमहोदयैः ( ) इदं दीर्घचिह्नं क्वचिद्रेफत्वेनावगतम् ( सप्तद० १० )। क्वचन पुनः, रेखाणामूर्ध्वं लिखिता टिप्पणी एव मूले निवेशिता ( अष्टाद० १०१ )। एवञ्च ज. पुस्तकात् प्र. पुस्तकमपकृष्टमिति निष्प्रपञ्चम्।

## ब. पुस्तकम्।

डा० ब्युह्लरमहोदयसंपादिते, मुम्बापुरीसंस्कृतग्रन्थमालायां १८७५ ई० वत्सरे मुद्रिते, प्र. पुस्तकावलम्बिन्यस्मिन् पुस्तके प्र. पुस्तकाद् बहुत्र पाठपरिवर्तनानि सन्ति। तेषु प्रायशः शतचतुष्टयसंख्याकेषु न्यूनन्यूनं सपादत्रिशतान्यसंगतानि ज. पुस्तके मिथ्यादोषमारोपयन्ति। प्र. पुस्तकस्थापपाठेष्वत्र क्वचित् संशोधितेष्वपि, बहुत्र शुद्धमपि प्र. पुस्तकं विपर्यासितं दृश्यते। पुस्तकप्रकाशने श्री० पं० वामनाचार्यझळकीकरमहोदयानां श्री० पं० भीमाचार्यमहोदयानां च सहयोग आसीदिति डा० ब्युह्लरवचनं विस्मयास्पदमेव प्रतिभाति।

पुस्तकमिदमशुद्धिबहुलमास्ते। तथाहि-प्र. पुस्तके विद्यमानमपि पद्यद्वयं ( चतु० ११३; अष्ट० ६९ ) पुस्तकेऽस्मिन्नास्ति। डा० ब्युह्लरमहोदयो बहुत्र

पाठानां संगतं संशोधनं कुर्वन्नपि, नैकत्र शतशो नवीना अशुद्धीरसृजत्। क्वचन पुनरस्पष्टस्थलेषु साम्येन निकटस्थान् पाठान् परित्यज्य दूरस्थानयुक्तान् पाठान् स्वबुद्ध्याघटयत्। ( षष्ठ० ४९, अष्ट० १४; चतुर्द० २ प्रभृति )। अन्यत्र पुनः संगतानपि पाठानसंगतान्मत्वा स्वकल्पितानयुक्तपाठान् मूलेऽस्थापयत्। ( सप्त० ३; अष्ट० ४१; त्रयोद० ७२ प्रभृति )। क्वापि च रिक्तस्थानेषु साधु पाठान् पूरयन्नपि बहुत्रासाधून् मनसाघटयत्। ( प्रथम० ७९; द्विती० ४५, ९१; पञ्च० ८८; षोडश ४९; सप्तद० ५८; अष्टाद० १०६ )।

### ब. टि.।

डा० ब्युह्लरमहोदयेन स्वसंस्करणे प्र. पुस्तकात् कृतानि पाठपरिवर्तनानि पादटिप्पण्यामुल्लिखितान्यपि न तत्र साकल्येनोपलभ्यन्ते। क्वचित्तु प्र. पुस्तकस्थः शुद्धोऽपि पाठः टिप्पण्यां विपर्यासितो दृश्यते। किञ्चान्यथापि टिप्पणी प्र. पुस्तकाद्भिद्यत एव।

### अ.।

अमदावादनगरेऽस्माभिरवलोकितमेतत्पुस्तकं सप्तसर्गमात्रं नातिशुद्धञ्चेति नाधिकमुपयोगि। परमेतन्न ज. पुस्तकप्रतिलिपिरिति चरितस्य पुस्तकान्तराणामप्यस्तित्वमनुमीयते। किञ्च यत्र ज. पुस्तकं घर्षणादिनाऽस्पष्टमस्ति तत्रैतेन मूलसंशोधनं कर्तुं शक्यते।

### अ. प्र.।

डा० रामकृष्ण गो० भाण्डारकरमहोदयैः कारिता, प्र. पुस्तकेन सार्द्धं पुण्यपत्तनादधिगता सेयम् अ. पुस्तकप्रतिलिपिः स्वमूलादप्यशुद्धतरेति नोपयोगिनी। अस्य पुस्तकस्य अन्ते इदमुपलभ्यते—लिपिकृतं जोसि परसुराम ज्ञाती पुष्करणा ब्राह्मण मारवाडि अमदावादमध्ये संवत् १९४१ रामीति जेठवद ३ बुधवासरे श्री श्री। तदिदं लेखकस्य लेखकमात्रत्वं प्रमाणयति।

### भ. रि.।

डा० रा० गो० भाण्डारकरमहोदयैः अ.-अ. प्र. पुस्तकद्वयमवलोक्य मूलतुलनापुरःसरं ब. पुस्तकाच्छुद्धतरा अ. पुस्तकपाठभेदाः स्वीये विवरणग्रन्थे (Report on the Search for Sanskrit MSS. for the year 1894 A. D.)

प्रकाशिताः । परं क्वचिद् अ.-अ. प्र.-भ.रि. पुस्तकेषु त्रिष्वपि मिथो भेदो दृश्यते। अ. प्र. पुस्तकाद् अ. पुस्तकं साधुतरं शुद्धतरं चेति तत्पर्यालोचनं फलवदभूत्।

## रा. पुस्तकम्।

स्व० म० म० श्री० पं० रामावतारशर्मणां नाम्ना संस्कृतं, १९२७ ई० वर्षे काशिकज्ञानमण्डलात् प्रकाशितं संस्करणमिदं दोषेषु प्रथमं सत्यमेवातिशेते। अत्र प्रथमसंस्करणस्थाशुद्धिषु क्वचिदंशतः शोधितास्वपि, नैकत्र नूतनाशुद्धिपरंपरासृष्टिरेव दृष्टिपथं प्रयाति। एतत्संस्कर्त्रा प्रथमसंस्करणस्थशुद्ध्यशुद्धिपत्रमपि न व्यलोकीति चित्रम्। एतन्मुद्रणादिकं तथा विशृङ्खलमस्ति, यथा तदवलोक्य चिरं चेखिद्यते चेतः।

प्रथमसंस्करणे ग्रन्थजीवितायमाना भूमिकाप्यत्र तथा तानवमगच्छद्यल्लेशोऽपि नावशिष्टः। एवञ्च संस्करणमिदं निश्चेतनमिवाभाति। याप्यस्ति सार्द्धपत्रात्मिका ( भूमिका ) सापि बह्वसंगतिमयीति वस्तुविप्लवमेव जनयति। एवञ्चेदं प्रथमसंस्करणादत्यर्थं हीनमिति को नु न स्वीकुर्यात्।

## रा. टि.।

रा. पुस्तके तत्संस्कर्त्रा क्वचित् स्वेच्छाकल्पिताः पाठाष्टिप्पण्यामुल्लिखिताः, ये चात्र रा. टि. इति निर्दिष्टाः सन्ति।

## पुस्तकान्तरं नास्ति।

विहाय प्रागुक्तपुस्तकानि क्वाप्युपयुक्तं पुस्तकान्तरं नास्तीति निश्चितम्। सकलेषु भारतीयप्रत्नपुस्तकालयेषु पत्रप्रेषणादिभिः कृतान्वेषणैरप्यस्माभिरन्यत्पुस्तकं नासादितम्। पट्टणस्थजैनभाण्डारे विक्रमाङ्कदेवचरितस्य पुस्तकद्वयमस्तीति सी० डी० दलालमहोदयेन निर्दिष्टेऽपि ( Catalogue of the Sanskrit MSS. in the Jain Bhandaras of Patan, p. 45 ), तत्रास्माभिरेकमेव समासादि। तच्च ज. पुस्तकप्रतिलिपिभूतमपि गुणेषु मूललिपेः सर्वथा विपरीतं दोषपूर्णं चेति नोपयोगि। ( यथा ज० पुस्तके यत्राक्षराण्यस्पष्टान्यप्यच सुवाच्यानि सन्ति तत्रापि तत्पुस्तके......ईदृशचिह्नानि सन्ति। ) एवमेतेन वयं लेशतोऽपि नोपकृताः।

## विक्रमाङ्कदेवचरितस्य
## ऐतिहासिकतत्त्वनिरूपणे सहायका ग्रन्थाः ।

( 1 ) **A. I.** Ancient India, K. Krishnaswami Aiyangar, Madras.
( 2 ) **A. S. I.** Annual Reports of the Archaeological Survey of India.
( 3 ) **Bom. Gaz.** Bombay Gazetteer.
( 4 ) **Buh. Intro.** Introduction to the edition of Vikramankadevacharita, by Dr. George Buhler.
( 5 ) **Class. Lit.** Classical Literature, K. Krishnamachariar.
( 6 ) **D. H. N. I.** Dynastic History of Northern India, H. C. Ray, Calcutta.
( 7 ) **D. K. D.** Dynasties of the Kanarese Districts, J. F. Fleet.
( 8 ) **E. H. D.** Early History of the Deccan, R. G. Bhandarkar.
( 9 ) **E. I.** Epigraphia Indica.
( 10 ) **Epi. Car.** Epigraphia Carnatica.
( 11 ) **H. I. S. I.** Historical Inscriptions of Southern India, Sewell & Aiyangar.
( 12 ) **H. P. D.** History of the Paramara Dynasty, D. C. Ganguly.
( 13 ) **H. San. Lit.** History of the Sanskrit Literature, A. B. Keith.
( 14 ) **I. A.** Indian Antiquary.
( 15 ) **I. H. Q.** Indian Historical Quarterly, Calcutta.
( 16 ) **J. B. B. R. A. S.** Journal of the Bombay Branch of Royal Asiatic Society.
( 17 ) **J. R. A. S.** Journal of the Royal Asiatic Society, London.
( 18 ) **K. K.** Kadamba Kula, J. M. Moraes, Bombay.
( 19 ) **Life.** The Life and Times of Chalukya Vikramaditya VI, A. V. Venkataram ( Tamil ), Translated in Hindi by Shri Ramnatha Dikshit, Sahitya Shiromani, Sadholal Research Scholar, Benares.

( 20 ) **Raj. Stein.** Kalhana's Chronology of Kashmir.

( 21 ) **इ० प्र०** इतिहास प्रवेश, श्रीयुत जयचन्द्र विद्यालङ्कार ।

( 22 ) **चर्चा**-विक्रमाङ्कदेवचरितचर्चा, आचार्य श्री० पं० महावीरप्रसाद द्विवेदी ।

( 23 ) **राज०** राजतरङ्गिणी, महाकवि कल्हण ।

( 24 ) **सो० प्रा० इ०** सोलंकियों का प्राचीन इतिहास, म० म० श्री० पं० गौरीशङ्कर हीराचन्द ओझा, अजमेर ।

## *प्रस्तुतसंस्करणवैशिष्ट्यम् ।*

## मूलसंशोधनम् ।

विक्रमाङ्कदेवचरितसंशोधने सहायका ग्रन्थाः प्रागेव प्रत्यपाद्यन्त । इदं नो दुर्भाग्यं सौभाग्यं वा यत्प्राचीनतमं शुद्धतमं च ज. पुस्तकं सर्वथाऽन्ते, नवीनतममशुद्धतमं च रा. पुस्तकं सर्वतः प्रथममवालोक्यत । अन्यथा मूलसंशोधनेऽस्मत्कृतश्चिरपरिश्रमः कष्टाद्यनुभवश्च अभावकोटावेव तिष्ठेत् । यतो हि ज. पुस्तकावलोकनात्पूर्वमेव मूलसंशोधनं जातप्रायमेवासीत् । चरितस्य संशोधने संपादने च प्रागुक्तग्रन्थानां बहूनां विदुषां च साहाय्यमेव हेतुः । ज. पुस्तकाच्छुद्धतरं पुस्तकमाविर्भवति चेदितोऽप्यधिकं शोधनं नासंभवि ।

## विषमस्थलार्थावबोधिका टिप्पणी

## 'चरितचन्द्रिका' ।

चरितमेतत्पुरातनं सकललोकापरिचितञ्चेति प्रसादमधुरमप्यन्तरेण काञ्चन व्याख्यां नाभूत्सारल्येन साकल्येन च परिज्ञेयम् । ज. पुस्तकस्थां नितान्तमुपादेयां टिप्पणीं सर्वथैवोपेक्षमाणो डा० ब्युह्लरमहोदयः काव्यार्थं जिज्ञासमानान् सहृदयांश्चिराय तन्माधुरीवञ्चितानेवावास्थापयदिति मन्यामहे । अन्तर्भावितटिप्पणीका सैषा 'चन्द्रिका' तनीयस्यपि ग्रन्थार्थमुज्ज्वलयिष्यतीति विश्वसिमः । किञ्च गीर्वाणवाणीनिबद्धापि सा प्राचीनटिप्पणी क्वचित् गुर्जरमरुदेशभाषात्मिकेत्यनधिगतसकलार्थैरप्यस्माभिः सा तथैवोपस्थापिता । नेयं मूलवस्तुवाच्येति बहुत्रास्माभिर्नैवावगन्तुमपारि, कुतस्तावत्प्रतिलिपिविषयीकर्तुम् । तथापि सेयमतिप्राचीनेति सद्भाषागवेषणायां साधनं स्यादित्यवधार्यते ।

## ऐतिहासिकवृत्तानां वैशद्येन निरूपणम् ।

चरितीयैतिहासिकवृत्तनिरूपणे सहायका ग्रन्था अपि पूर्वमेव निरदिश्यन्त । चरितसम्बद्धं सकलमपि वस्तुजातं विशेषत आंग्लभाषायां निबद्धं सर्वतो विकीर्णं चावलोक्यते । अस्माभिस्तु तत्सकलं संक्षिप्य संस्कृतभाषायां च विनिबध्य स्वीयोपोद्घाते न्यवेशि । सोऽयं मधुसंचयः काव्यार्थमामोदयन् सहृदयानाह्लादयिष्यतीत्याशास्महे ।

नवगवेषणाभिर्वितथीभूतानां प्राचीनमतानां विवेचनपुरःसरं क्वचिन्नवीनानि स्वमतान्यप्यस्माभिर्न्यरूप्यन्त । तानि युक्तान्ययुक्तानि वेति तु गवेषणाचणाः पण्डिता एव प्रमाणम्, परं तेष्वेकमपि तत्र भवद्भिर्विद्वद्भिरभ्युपगम्यते चेदस्मत्प्रयाससाफल्यं स्यात् ।

## काव्येतिहासतत्त्वयोर्भेदनिरूपणम् ।

अद्यावधि महाकविबिल्हणकाव्यं समालोचितवतां विपश्चिद्पश्चिमानां भेदद्वये प्रथमस्तावदितिहासमात्रनिपुणः पण्डितः, अपरश्च तदनुसरणपटुः साहित्यिकोऽवलोक्यते । अस्माभिस्तु कवित्वमैतिहासिकत्वञ्च पृथग् विविच्य, तयोर्नितान्तं विभिन्नं पन्थानं विचारसरणिं च प्रतिपाद्य, बिल्हणस्य कवित्वप्रतिपादनपुरःसरं, तमितिहासमात्रपण्डितं मन्यमानानां, तद्रचनायां च नैकविधान्पक्षपातित्वादिदोषानुद्भाव्य तमाक्षिपतां पूर्वविदुषां मतानि पूर्वपक्षकोटाववास्थाप्यन्त । महाकविकाव्यानां समालोचना हि कविमार्गानुरूपैव संगतेत्यपि चास्माभिर्न्यरूपि । डा० ब्युहलरमहोदयैस्तन्मतानुयायिभिरन्यैश्चेतिहासकोविदैरितिहासं काव्ये, काव्यसौन्दर्यानुकूलं यथारुचि परिवर्त्य निवेशयन्, नितान्तमावश्यकानि काव्याङ्गानि च वर्णयन् बिल्हणो भृशमुपहासपात्रतां प्रापितः । सहृदयानुयायिनो वयं पुनस्तेषां मतं नैवान्वमोदयामहि । नवमार्गानुयायीदमस्मत्समालोचनं कदाचिदैतिहासिकानां वैरस्यावहमपि काव्यमर्मज्ञान्नूनमनुरञ्जयिष्यति ।

## तदानीन्तनभारतमानचित्रम् ।

अत्रोपोद्घाते ऐतिहासिकवृत्तानि साधु व्याख्याय, तत्तथ्यानि च विशदीकृत्य विविधघटनाः सक्रमं संनिवेशिता इति काव्यगतेतिहासो नितान्तमवदातीभूतः ।

किञ्च भूगोलपरिज्ञानसापेक्षमितिहासज्ञानमिति तदानीन्तनभारतीयं मानचित्रमप्यत्र समावेशितम्। तच्चाधोनिर्दिष्टग्रन्थेषु तत्तद्विबुधप्रदत्तमानचित्राण्यवलम्ब्य निर्मितम्।

( 1 ) Ancient India, K. Krishnaswami Aiyangar, p. 142.

( 2 ) Kalhana's Chronology of Kashmir, M. A. Stein.

( 3 ) Epigraphia Indica, Vol. IX, Rai Bahadur Hiralal B. A. ( चक्रकोटार्थम् )

( 4 ) Atlas of India, no. 11, W. W. Hunter (गाङ्गकुण्डार्थम्)

( 5 ) इतिहास प्रवेश, श्रीयुत पं० जयचन्द्र विद्यालङ्कार, पृ० २५६.

## परिशिष्टानि।

किञ्च परिशिष्टात्मकानि राजवंशविवरणपत्रकाणि ( Genealogical Tables), समकालं प्रशासितवतां राजवंशानां निरूपणपत्रकाणि च ( Synchronistic Tables ) वंशानुक्रमं तात्कालिकमितिहासं च विशदीकरिष्यन्ति । तथा च, विक्रमराज्यकालिकं तदीयताम्रशासनं काव्यगतेतिहासपरिज्ञाने सौकर्यं संपादयत्, भव्यां भाषां सुशोभनां रचनाशैलीं च परिचाययत् सहृदयान्नूनं सुखाकरिष्यति ।

## पद्यानुक्रमणिका।

द्विवारं मुद्रितस्याप्यस्य चरितस्य पद्यानुक्रमणिकात्र प्रथममेव प्रकाश्यते। एवञ्चेयं प्रागुक्तसामग्री प्रस्तुतसंस्करणस्य वैशिष्ट्यायालं कल्पेतेति निःसंशयम्।

## कृतज्ञताप्रकाशनम्।

यदीयदयादृष्टिलेशोऽपि मूकं वाचालयितुं पंगुं च गिरिं लङ्घयितुमलम्, स एव जगन्नियन्ता जगदीश्वरः प्रभुरत्र निदानं यदस्माभिरीदृशमहाकार्यं निर्विघ्नं समाप्यत। ननु तदीयवाञ्छां विना पल्लवस्पन्दनमप्यसंभवम्, कुतः पुनरीदृशमहाकार्यनिर्वाहः। कथं वा तं स्तुमः, किमिति वा स्वकृतज्ञतां प्रकाशयाम इति न जानीमहे।

काशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणां एम्० ए० डी० फिल्० ( ऑक्सन् ) इति पदवीविभूषितानां श्रीमतां डा० मङ्गलदेवशास्त्रिमहोदयाना-

मनुपहराशिरेव मूर्तिमङ्गीकृत्य प्रस्तुतसंस्करणतामगादिति निर्विचिकत्सं ब्रूमः । ई० १९४० वर्षात् का० रा० सं० म० परीक्षायां पाठ्यत्वेन निर्द्धारितमितीदं चरितं लोकानां विशेषतो नयनगोचरतामगच्छत् । तदैवास्माभिरेतत्काव्यं पाठयद्भिरस्य माहात्म्यमितिहासज्ञानसापेक्षत्वमुपलब्धसंस्करणस्य च दोषबाहुल्यमभ्युपगम्यैतद्विषयकविशिष्टाध्ययनादेरावश्यकत्वमन्वभावि । किञ्च काव्यमूलसंशोधनादावपि प्रावर्त्यत । सरस्वतीभवने साधोलालरिसर्चस्कॉलररूपेणावसरे समुपलब्धे, विक्रमाङ्कदेवचरितविषयकगवेषणामनोरथोऽस्माभिस्तेषां पुरतः प्रत्यवास्थाप्यत ।

स्वानुपमगुणप्रेरितास्ते तु न परं तत्कार्यमन्वमोदयन्त, अपि तु साधु संपादिते तस्मिन् , मुद्रणाश्वासनमप्यदुः । ततः प्रभृति सकलकार्येषु तेषां कोटिकोटिगुणितं साहाय्यमनुमोदनं च समासाद्यत । एतद्विषयकसकलसाधनोपलब्धिः, जैसलमेरपाटणामदावादनगरेषु तत्रत्यपुस्तकाद्यवलोकनमेतदीयगवेषणाश्च सर्वाण्यपि तेषामेवानुकम्पाफलानीति को नु सन्दिह्येत् । महायुद्धकाले सकलवस्तुष्वतिमूल्यवत्सु प्रस्तुतग्रन्थप्रकाशनादिमहाव्ययस्तेषामेवानुग्रहसाध्य आसीत् । तेषां ह्येवंविधसाहाय्येष्वलब्धेष्वेतत्कार्यं कथमपि न समापितं स्यात् ।

स्वातुलबहुलोपकारकार्यैः सकलमपि संस्कृतसमाजं चिरायाधमर्णभावं नीतवतां संस्कृतभाषाभ्युत्थानभावनामयानां तेषामीदृशबहुविधकार्येष्विदमप्येकमिति किमत्र चित्रम् । परमस्मासु चिराद्बहुधा प्रदर्शितौ तदीयावनुग्रहोपकारौ शब्दगोचरतामतीत्य वर्तेते । तदिदं तेषां साहाय्यदानं कविताकलाकमलिनीभास्वतेर्महाकवेर्भारवेरिमामुक्तिं नूनमेव चरितार्थयति:—

'निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वम्...............॥

अस्मत्सुहृद्वरा भट्टभट्टकुलावतंसाः पण्डितप्रवराः श्रीमन्तो राजारामशास्त्रिणः कोटिसाधुवादानर्हन्ति, येषां साहाय्यमन्तरेण प्रस्तुतग्रन्थस्येदृशं संपादन-मुद्रणादिकमसंभवप्रायमेवासीत् । चरितविषयकगवेषणाप्रभृतिकार्यं तस्य मुद्रणयोग्यत्वं च १९४२ ई० वत्सरीयचैत्रमासात्प्रागेवाभवत् । तत्र सर्वत्र तेषां साहाय्यं संमतिप्रदानं चास्माकमवलम्बनं पथप्रदर्शकं चाभूत् । ग्रन्थमुद्रणकार्यं तु १९४२ ई० वत्सरीयचैत्रमासादारब्धं मुद्रणालयाधिकारिणामनुग्रहेण बहुविधहेत्वन्तरैश्च प्रायशो

वर्षत्रयानन्तरं समाप्तिमगात्। तावति समयेऽस्मासु काश्या बहिः संस्कृताध्यापनकार्यं कुर्वत्सु, मुद्रणं काश्यामभूदित्यवकाशदिवसान्विहाय सकलोऽपि पूर्वपत्रावलोकनादिकार्यभारस्तैरेव निरवाह्यत। तच्च तेषाममितं साहाय्यादिकमस्मान् भृशमधमर्णीभावमनयत्। नास्ति तद्वचो वस्तु वा यदुक्त्वा दत्त्वा वा तेषामानृण्यं संपादयेम।

प्रस्तुतग्रन्थावलोकनेन तत्पर्यालोचनेन च प्रमाणीभविष्यति यदत्र विद्यमानो विषयार्णवो नैवास्मादृशजनानामेकाकिनां सन्तरणसाध्यभूतः। अत्र येषां विदुषां ग्रन्थानवलम्ब्य, तेषां सहयोगादिकं संमतिदानादिकञ्चाश्रित्य कार्यमिदं निरवाह्यत, तेषां सर्वेषां चिराय कृतज्ञास्तान् कोटिसाधुवादैरभिनन्दामः।

तेषु विद्वत्सु—सरस्वतीभवनपुस्तकालयाध्यक्षाः श्रीमन्तः पण्डितप्रवराः श्रीशिवनाथझाडखण्डी एम्० ए०, एम्० एस्सी० महोदयाः—इतिहासविषयकगवेषणाकार्ये, सरस्वतीभवनपुस्तकालयोपाध्यक्षाः कविमण्डलीमण्डनायमानाः श्रीमन्तः साहित्याचार्यश्रीनारायणशास्त्रिखिस्तेमहोदयाः—मूलसंशोधनादिकार्ये, का०रा०सं० महाविद्यालयाध्यापकाः पुराणविद्यानिष्णाताः श्रीमन्तो व्याकरणाचार्याः श्रीमदनन्तशास्त्रिफडकेमहोदयाः—उपोद्घातसंशोधनादिकार्ये, जैसलमेरस्था राजगुरवः श्री० पं० हरिदत्तगोविन्दव्यासमहोदयाः—तत्रत्यपुस्तकासादनादिकार्ये, पट्टणस्थजैनोपाश्रयमुकुटायमाना जैनधर्माचार्या यतिवराः श्रीमन्तः पुण्यविजयमहोदयाः—तत्रत्यपुस्तकोपलब्धिप्रभृतिकार्ये, अमदावादनगरस्था ज्यौतिषिकमूर्धन्या विपश्चिदपश्चिमाः श्रीमन्तो हिम्मतराममहाशङ्करयाज्ञिकमहोदयाः—तत्रत्यपुस्तकप्राप्त्यादौ, साहित्याचार्यपदवीविभूषिता अस्मदग्रजवराः श्रीमन्तः पं० श्री मनोहरलालद्विवेदिमहोदयाः—पद्यसूचीनिर्माणपूर्वपत्रसंशोधनादिकार्ये—काले काले नैकविधं साहाय्यमदुरिति तत्कृतज्ञताप्रकाशनपुरःसरमभिनन्दन्तस्तान् भूयोऽपि सभाजयामः।

अन्ते पुनरियं विज्ञप्तिर्यदस्मिन् प्रस्तुते संस्करणे बहूनां विदुषां समवेतं साहाय्यमेवेदृशप्रकाशने साधनमभूत्। अत्र कश्चिदपि गुणोऽस्तीति न वक्तुं शक्नुमः। परं विद्वद्भिर्गुणलेशोऽप्युपलभ्यते चेत्तत्र पूर्वे विद्वांस एव हेतुः। दोषास्तु सन्त्येवेति निश्चितम्, ते त्वस्मत्प्रमादजन्या इति तान् गुणैकपक्षपातिनस्तत्र भवन्तो विद्वांसः क्षमेरन्निति दृढोऽस्माकं प्रत्ययः।

समासौ भूयोऽपि जगदीश्वरं प्रभुं स्मारं स्मारं तदीयकरुणावरुणालयदृष्टिबिन्दुपातमभ्यर्थयमानाः पुनरपि सहायकविदुषां सप्रशंसनसाधुवादपुरःसरमिमामेवोक्तिं ब्रूमः—

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥

इति शम् ।

वाराणसी
वसन्तोत्सवः
सं० २००१ वि.

शास्त्री मुरारि लाल नागरः


भारत वर्ष
ई० ११श शतक
तुखार
दरद
प्रवरपुर
लोहर
खोनमुष
राजपुरी
वितस्ता
चम्पा
त्रिगर्त
कैलास
कुरुक्षेत्र
कान्यकुब्ज
अयोध्या
गंगा
प्रयाग
कालंजर
वाराणसी
सोन
कामरूप
गौड
अणहिल्लपाटन
मालव
धारा
नर्मदा
सोमनाथ
देवगिरि
नासिक
महाराष्ट्र
कल्याण
ओरंगल
एतगिरि
भीमा
कोल्हापुर
बीजापुर
मान्यखेट
काकतीय
वैरागढ़
चक्रकोट
जगदलपुर
महानदी
वेंगि
वातापी
कृष्णा
कुडलसंगम
तुंगभद्रा
गोवा
कोप्पल
कंपिली
हंगल
कोप्पु
बनवास
नोलम्बवाडि
नेल्लूर
येडतोरे
कोल्हार
कांची
मद्रास
गंगवाडि
गांगकुण्ड
त्रिचनापल्ली
तांजोर
कावेरी
मदुरा
पाण्ड्य
कुमारी
सिंहल
विक्रमाङ्कदेव-कुलोत्तुङ्गचोलाधिकृत-
चालुक्य-चोल-साम्राज्य
-सीमा —·—·—
प्रमाण अं. मील
० ५० १०० १५० २००
KRIPA

श्रीः

# उपोद्घातः

ननु संस्कृतवाङ्मये सत्स्वप्यतिभूयःसु विषयान्तरग्रन्थेष्वैतिहासिकप्रबन्धाः किमित्यल्पीयांस एवोपलभ्यन्त इति प्रश्नो विबुधैः कैश्चिदित्थं समाधीयते यत्पुरा संस्कृतविदुषामितिहासविज्ञाने नासीदाभिमुख्यमैतिहासिकप्रबन्धाश्च तैर्नाग्रथ्यन्त। किञ्चाधुनिका इतिहासविदः संस्कृतभाषामेवेतिहासशून्यामामनन्ति।[1]

परं कालक्रमेण वस्तुस्थितौ परिवर्तितायां मतमेतत्तेषां मिथ्याभावं भजते। संस्कृतवाङ्मयनिबद्धा गणनातीताः शिलालेखास्ताम्रादिशासनानि प्रशस्तयो बह्वश्च निबन्धाः पुरातनसंस्कृतविदुषां विषयान्तरवदितिहासविषयिणीमपि दृढाभिरुचिं परमोन्नतिं च प्रमाणयन्ति।[2]

सत्यप्येवं साम्प्रतमितिहास इति प्रसिद्धस्य सश्रृङ्खलस्येतिहासस्य संस्कृतेऽभाव इव प्रतीयते। पुरा निबद्धेष्वपीतिहासेषु सांप्रतं तेषामनुपलब्धेः को हेतुरित्यत्रास्ति बहुलं मतवैषम्यम्। कालक्रमप्रभावादत्याचारिणां नृशंसाक्रमणश्रेणीभिश्च गणनातीतानि भारतीयग्रन्थरत्नानि विनाशगर्ते विलीनानीति निश्चप्रचम्। तेषु खलु नष्टग्रन्थरत्नेष्वैतिहासिकग्रन्था नैव स्युरल्पीयांसः। किञ्च जातविजयोन्मादा लोका विजितलोकेतिहासं सर्वात्मना निर्मूलयितुमत्यर्थमयतन्तेत्यर्थः प्रमाणीक्रियते पुरातनेतिहासेन। अन्यच्चेतिहासो व्याकरणदर्शनादिशास्त्रवन्न शास्त्रार्थवादविषय इति कारणान्तरैर्वा परंपरया नैव संरक्षितः सोऽस्माभिर्नाधुनाधिगम्यते।[3]

एवं स्थिते भारतपुरातनेतिहासनिबद्धारः स्वाभिमतसिद्धये केवलं प्राचीनशिलाताम्रलेखान्प्रशस्तिप्रभृतींश्च मूलावलम्बतयाधिगच्छन्ति।[4] लब्धतन्मात्रसहायाः प्राच्यपाश्चात्यविबुधा अद्भुतविधया जग्रन्थुरितिहासमिति भारतं चिराय तेषामधमर्णम्।

प्राक्प्रतिपादितपदार्थपर्यालोचनं चरितकाव्यान्यतिमहापदेऽधिष्ठापयति। स्वप्रतिभैकवशीभूतः कविरितिहासमनङ्कुशं परिवर्तयन्नपि स्वकाव्यान्तर्निहितं प्रभूतमैतिहासिकवस्तु पुरस्तादाविष्करोत्येव। संस्कृतकवयः प्रायशो भूपाश्रिता अभवन्। साधारणा अपि भूपतयो द्वित्रान्कवीनाश्रयन्ति स्म। एवं स्थितेऽपि चरितानामयमभावो नूनं विस्मापयति। इतो वर्षशतकात्प्राङ्नासीदैतिहासिकविदुषां पुरस्तादेकमपि चरितम्। ऐतिहासिकचरितानि नैव निबद्धानीति ते तदा खलु मेनिरे। परं तन्मतं भ्रान्तमेवेति प्रमाणीक्रियते।[5]

---

1 सो. प्रा. इ. उपोद्घातः प. १-२. 2 I. A. V 324. 3 Buhler Intro. pp. 1-2. 4 Buhler Intro. pp. 4-5. 5 Buhler Intro. p. 3.

केचिदिदं मन्यन्ते यन्न श्रद्दधाति लोको लौकिकजनान् रामकृष्णनलप्रभृतिपौराणिकपुरुषानिवेति कवयोऽपि रामकृष्णचरितरचनाभिः स्वपावनीकरणमेव श्रेय इति निरधारयन् । तन्मतेन रामकृष्णादीनां शिवराज (शिवाजी)–प्रतापादीनाञ्चेतिहाससंमतत्वं तुल्यमासीत् । तत एव रघुवंशनैषधीयचरितादिकाव्यान्यध्ययनाध्यापनादिष्वासक्षलं प्रचलितानि, ऐतिहासिकनायकचरितकाव्यानि च तत्पदं न प्रापुः । शनैः शनैस्तान्यलुम्पन् ।[1]

सांप्रतिकविद्वांसस्तावदादौ हर्षचरितं ततश्च विक्रमाङ्कदेवचरितमन्वैषयन् । तदनन्तरं तु बहून्युपलब्धान्यैतिहासिककाव्यानि । परमद्य यावदुपलब्धेषु पद्यात्मकचरितेषु विक्रमाङ्कदेवचरितमेव सर्वात्मना विशिष्यत इति निर्विवादोऽर्थः ।

जर्मनदेशीयः पाश्चात्यो विपश्चित् डा० जॉर्ज ब्युह्लरमहोदयश्चरितमेतत्प्रकाशपथमानीय परां कीर्तिमविन्दत । स खलु ई० १८७४ वर्षे स्वसुहृदा डा० एच्० जेकोबीमहोदयेन सार्कं राजपुतानाप्रदेशं परिभ्रमन्, जैसलमेरस्थजैनबृहज्ज्ञानकोशभाण्डारेऽस्य काव्यस्यातिपुरातनीं तालपत्रलिखितामेकां प्रतिलिपिमवाप । स हि तस्मिन् सरस्वतीमन्दिरेऽनल्पामवरोधक्लेशबाधां विषह्य प्रवेशानुमतिमलभत । अवलोकिततत्काव्येनात्यन्तं प्रभावितेन च तेनासत्यप्यवसरे डा० जैकोबीमात्रसहायेन सप्तदिवसाभ्यन्तर एवैतावन्महाकाव्यस्य प्रतिलिपिरकारि ।[2] तदग्रिमे च वर्षे स्वविस्तृतभूमिकासंवलितं तत्प्रकाशितवान्मुम्बापुरीसंस्कृतग्रन्थमालायाम् । अतिपरिश्रममुच्चकोटिकगवेषणां सततानुशीलनं च परिचाययन्त्यां तद्भूमिकायां काव्यगतसकलविषयाणामस्ति विशदं विवेचनम् । भूमिकायाश्चालुक्यविक्रमविषयकोंऽशः ई० १८७६ वत्सरे प्रकाशिते 'इण्डियन एण्टिक्वेरी' पत्रेऽपि प्राकाश्यमानीयत । तत्रैव विदुषस्तत्पत्रसंपादकस्य तत्संस्करणसमालोचनमप्यासीद्यस्मिन् डा० ब्युह्लरमहोदयस्य पाण्डित्योत्साहानुशीलनादिगुणानां विक्रमाङ्कदेवचरितमहत्त्वस्य च सप्रशंसनं निरूपणं विद्यते ।[3]

ततः परं श्री रामकृष्णगोपालभाण्डारकरमहोदयैः स्वीये 'Early History of the Deccan' ग्रन्थे जे० एफ्० फ्लीटमहोदयैश्च स्वीये 'Dynasties of the Kanarese Districts' ग्रन्थेऽन्यैश्च पण्डितैः स्वस्वग्रन्थेषु सोऽयं चालुक्यवंशेतिहासो विस्तृतविवेचनपुरःसरं भृशं किल पल्लवितः । एम्० ए० स्टाइनप्रभृतिपण्डितै राजतरङ्गिण्यादिग्रन्थान् संपाद्य काश्मीरेतिहासोऽत्यन्तं परिष्कृतः । श्री म. म. गौरीशंकर हीराचन्दमहोदयः ई० १९०७ वत्सरे स्वीयं 'चालुक्यप्राचीनेतिहासं' ( सोलंकियों का प्राचीन इतिहास ) प्राकाशयत । लघुकायेऽप्यस्मिन् ग्रन्थे चालुक्येतिहासोऽस्ति साधु

---

1 Buhl r Intro. pp. 1-2. 2 Buhler Intro. pp. 44-46. 3 I. A. V p. 324.

विशदीकृतः प्रपञ्चितश्च। तस्मिन्नेव वत्सरे पं० श्री महावीरप्रसादद्विवेदिमहोदयस्य "विक्रमाङ्कदेवचरितचर्चा' प्रादुरासीत् । डा० ब्युह्लरमहोदयभूमिकाप्रतिपादित-वस्तुनोऽत्रानुवादमात्रमेव दृश्यते। किञ्च श्री एस्० के० कृष्णस्वामी ऐयंगर, श्री डी० सी० गाङ्गुली, श्री ए० वी० वेंकटरामप्रभृतयो विद्वांसः स्वस्वग्रन्थेषु बहुषु च गवेषणा-पत्रेषु चालुक्यबिल्हणसम्बद्धान् बहून्नूतनानपि विषयान् सयुक्तिविवेचनपुरःसरं प्राकाशयन्।

चालुक्येतिहासस्य विक्रमाङ्कदेवचरितस्य च विषये जातास्वप्यनल्पविवेचनासु काव्यमूलरूपं तथैव दुर्दशाग्रस्तमभवत्। डा० ब्युह्लरसंस्करणे कालवशाद्दुर्लभीभूते काशिकज्ञानमण्डलयन्त्रालयात् स्व० श्री पं० रामावतारशर्मणां नाम्ना काव्यमिदं पुनः प्राकाश्यत, यदद्य सुलभम्।

विलीने गुप्तमहासाम्राज्ये चालुक्यसाम्राज्यमिव सप्रतापं सुमहच्चान्यत्साम्राज्यं नाभवत्। ( १ ) वातापिचालुक्याः ( २ ) वेंगिचालुक्याः ( ३ ) कल्याणचालुक्याः ( ४ ) गुर्जरचालुक्याश्चेति चालुक्यानां शाखाचतुष्टयमासीत्। विक्रमाङ्कदेवचरित-नायको विक्रमादित्यः ( षष्ठः ) कल्याणचालुक्यवंशं जन्मनालञ्चकार। चालुक्यवंशजा भूपतयो विद्यानुरागौदार्यदानशीलत्वादिगुणैरन्यानत्यरिच्यन्त। तस्मादेव हेतोस्तद्राज्य-कालिका गणनातीतास्ताम्रशासनशिलालेखादय उपलभ्यन्ते।[1] ई० १८७४ वत्सरादपि-पूर्वं विक्रमादित्यमात्रराज्यसम्बद्धलेखानां प्रायः सार्द्धशती प्रादुरासीत्।[2] अद्यत्वे तु द्विशती तेषामुपलब्धुं न दुष्करेत्यनुमीयते।

अष्टादशसर्गात्मके विक्रमाङ्कदेवचरिते, आद्यसप्तदशसर्गेषु चालुक्यवंशविक्रमा-दित्यचरितादिकं निबध्यान्तिमेऽष्टादशे सर्गे कविः काश्मीरदेशं तन्नृपतींश्च वर्णयित्वा जग्रन्थात्मवृत्तान्तम्। एवञ्चेदं काव्यं द्वेधा विभज्यते।

डा० ब्युह्लरभूमिकाप्रणयनावसरे विभागद्वयसंपादनाय यदपि साधनमासीत्त-त्तत्कालानुसारेणातिभूयोऽतिप्रबलं चासीत्। तदाधारेण तेन यान्यपि मतान्याविष्कृतानि, यच्चापि प्रत्यपाद्यत तत्सकलमपि तत्कालानुकूलतयानल्पं संगतं चासीत्। युक्तमुक्तम् 'इण्डियन एण्टिक्वेरी' पत्रसंपादकेन यन्मूलग्रन्थपर्यालोचनायां डा० ब्युह्लरप्रति-पादितमतेषु कदाचिदेवानौचित्यं प्रतीयेत परिवर्तनं वापेक्ष्येत' इति।[3]

भारतप्राचीनेतिहासक्रमिकविकासो नूनं चमत्करोत्यस्मच्चेतांसि। ई० १८७४ वत्सरी-यपरिस्थित्यपेक्षयाद्यतनीयायां परिस्थितौ महदन्तरं वर्तते। डा० ब्युह्लरभूमिका-प्रतिपादितविषयाणामद्य नास्ति पुरेव वैशिष्ट्यम्। ऐतिहासिकविदुषां चालुक्य-

1 सौ. प्रा. इ. प. १-२  2 Bom. Gaz. p. 448.  3 I. A. V p. 324.

विक्रमाङ्कविषयकगवेषणाश्चेतांसि विस्मापयन्ते । तथाप्यद्य यावदनेके विषया अन्धकारगह्वर एव सन्ति विलीनाः । डा० ब्युह्लरप्रतिपादितानि बहूनि मतान्यद्य यावद् वेदवाक्यानीव निःशङ्कमनूद्यन्ते ।

चालुक्यानां काश्मीरिकाणां चाद्य यावज्जाता गवेषणाः साधनान्तराण्येवाधारतयावलम्बन्ते । परं मूलकाव्यं पुनः कोऽपि न पर्यालोचयदिति प्रतीयते । नापि च काव्यमूलस्वरूपं केनापि समशोध्यत । 'इण्डियन एन्टिक्वेरी' सम्पादकमहोदयस्त्वेवमाह :— 'काव्यमूलं तथास्ति संशोधितं यत्कदाचिदेवापेक्ष्येत विसर्गोऽनुस्वारो वा ।'[1] परं तस्येदं मतं भ्रान्तमेवासीत् । यतो डा० ब्युह्लरसंस्करणे व्याकरणसाहित्यदृष्ट्याऽस्ति द्विशतमशुद्धयोऽसंगताश्च पाठाः ।

परमत्र न विशेषदोषभाजनं डा० ब्युह्लरमहोदयः । तेन यदप्यकारि तदस्त्यत्यधिकम् । तस्य विद्याव्यासङ्गगवेषणासक्तिप्रभृतिगुणाः प्रशंसाकोटिमतीत्य वर्तन्ते । परमलङ्कारशास्त्राचार्य–वामनाचार्यझलकीकरमहोदयस्याप्यत्र सहयोग आसीदिति डा० ब्युह्लरवचसि[2] चिन्त्यमाने काव्यस्याशुद्धिबहुलत्वं नूनमेव विस्मयजनकं भवतीति तस्य सहयोगोऽपि सन्देहास्पदम् । यथार्थमाह डा० ब्युह्लरमहोदयः— जैसलमेरग्रन्थो नितान्तं संशोधितः सुरक्षितश्चासीत् । किञ्च स बिल्हणजीवनद्विशतवर्षाभ्यन्तर एव लिखित इति नावकाशस्तत्र बहुलपाठभेदानाम्' इति ।[3]

खनिप्रादुर्भूतं रत्नं सद्यो मलिनमेव जायते । परं याथार्थ्येन कलानिष्णातो जनस्तं कषणादिना मनोज्ञीकृत्य लोकसमक्षमुपस्थापयति । डा० ब्युह्लरसंस्करणदोषा न खलु न सोढव्याः । स त्वासीत्प्राथमिकः प्रयासः । परं दोदूयतेऽन्तःकरणं यद्रामावतारशर्मणां संस्करणे तद्रत्नं पङ्ककलङ्कितमेव दृष्टिगोचरमायाति, कुतस्तावत्पुनरुज्ज्वलीकृतिः । तत्र खलु डा० ब्युह्लरसंस्करणाशुद्धयस्तु नाम्नैव संशोधिताः, परं ततोऽप्यधिकाः सृष्टा नूतनाशुद्धयः । प्रथमसंस्करणस्थाशुद्धिसंख्या द्वितीये द्विगुणीभूय ४०० अङ्कं भजते ।

पं० श्री रामावतारशर्मणां नाम्ना प्रकाशितेऽप्येतद्द्वितीयसंस्करणे तेषां सहयोग आसीदित्युक्तिर्लोकान्तरगततदात्मावमाननमेवेति मन्यामहे । वस्तुतस्तेषां लेशतोऽपि नासीत्तत्र सहयोग इत्यनुमीयते ।

काव्यमिदं ई० १९४० वत्सरात्काशिकराजकीयसंस्कृतमहाविद्यालयीयपरीक्षायां पाठ्यत्वेन निर्धारितमिति विशेषतः प्रचलितम् । तदर्थमधिकारिणो नूनं साधुवादानर्हन्ति । परं यल्लक्ष्योद्देशपुरःसरं तैरिदं तत्र न्यवेशि तल्लक्ष्यमद्य यावन्नासिद्ध्यत् । दिव्यम-

---

1. I. A. V pp. 326-27. 2 Buhler Intro. p. 46. 3 Buhler Intro. p. 45.

प्येतत्काव्यं छात्रादिभिस्तथा निराद्रियत यथा तदवलोक्य दुर्मनायन्ते स्म विद्वांसः। सत्यमेवोक्तं कादम्बरीकर्त्रा बाणभट्टेन—"अपरिगतानि दैवतान्यप्यनुचितपरिभवभाञ्जि भवन्ति" इति।

काव्येऽस्मिन्नैतिहासिकसाहित्यिकविषयाणां तथास्त्यद्भुत एकीभावो यत्तयोरुभयोः कतरोंऽशो विशिष्ट इति निश्चेतुमशक्यम्। सामान्यतः सुखबोध्यस्यापि काव्यस्य तत्त्वं केवलं परिशीलितेतिहासस्य सर्वात्मना सहृदयस्य च विदुषो बोधविषयीभवति। इतिहासानभिज्ञः केवलसाहित्यिकः कथमेतद्व्याख्यायेतेत्यनुमातुं शक्यते।

एतत्काव्यविषयकं डा० ब्युह्लरमहोदयस्याध्ययनमननविवेचनादिकमतिश्रेष्ठमासीत्, तस्य हृदि कविस्तत्काव्यञ्चादरास्पदमासीत्। किञ्च तस्यानैकानि मतान्युक्तयश्चाद्यापि सन्ति मान्यानि। परमैतिहासिकदृष्टिप्रभावात्साधनबाहुल्याभावात्कारणान्तरैश्च बहवोऽसंगता विषयास्तेन प्रत्यपाद्यन्त। तस्य कानिचन मतानि सहृदयानां विषायन्ते।

अप्रकाशितेऽपि विक्रमाङ्कदेवचरिते चिरादेव बिल्हणो महाकविषु सादरं गीयते। स हि चौरपञ्चाशिकां कर्णसुन्दरीनाटिकां चापि प्रणिनाय। सुभाषितसंग्रहग्रन्थेषु बिल्हणनामाङ्कितान्युपलभ्यन्ते बहूनि पद्यानि।[1] जह्लणगुम्फितसूक्तिमुक्तावल्यामेव बिल्हणस्याष्टोत्तरशतपद्यानि सन्ति। क्षेमेन्द्रराजशेखरकालिदासेष्वन्यतमस्य कस्यापि श्लोकसंख्या तावतीं कोटिं न तत्र भजते। आदिकवी वाल्मीकिव्यासौ सर्वानप्यतिशयाते। तत्कथैवापरथा। परं प्रसादे माधुर्ये गुणान्तरेषु च कालिदाससाम्यं भजति चेत्कोऽपि स हि बिल्हण एव।

बिल्हणकविः स्वजन्मना काश्मीरानलंचकार। कुङ्कुमकेसराणि कविताविलासाश्च काश्मीरेभ्य एवोद्भवन्तीति तद्गर्वोक्तिर्नहि संगततेरा। काव्यं निबद्ध्य स हि स्वकृतेः स्वकीर्तेश्च शाश्वतीकृतिमैच्छत्। तदानीन्तनपरःसहस्रप्रबन्धेभ्योऽधिकं सचमत्कारं स्यात्तत्काव्यमिति कविरादावेव प्रत्यज्ञास्त। राज्ञां यशसोऽपयशसो वा कविप्रतिभैव निदानम्, नतु तेषां सुकृतदुष्कृतादीनीति स विश्वसिति स्म। कविः स्वच्छन्देनालौकिकसृष्टिं सृजति। ईदृश्यन्वानस्य कवेः काव्यं कीदृक् स्यादिति न कल्पनाविषयातीतम्। स्वविचारान्स्पष्टीकृतवान्कविः काव्यारम्भे एव।[2] तस्मिन् गर्वोक्त्याभासेऽपि कविना स्वप्रतिज्ञा चरितार्थीकृतेति निःशङ्कमूरीक्रियते।

कविः स्वकाव्यनायकपदे कञ्चन पौराणिकपुरुषमभिषिच्य गतानुगतिकत्वं न साध्वमन्यत। स हि तत्पूतपदे तमभिषिषेच यस्तस्मै नितान्तमादरणीयं 'विद्यापति' पदम-

---

1 Buhler Intro. pp. 23-24. 2 विक्र. प्र. १-३०.

ददात्।[1] वयं तद्विभूतिमनुमातुं शक्नुमः। बिल्हणस्तं महापुरुषं विष्णोरप्यधिकं मेने। यथार्थमेवोक्तं कविना—

> गिरां प्रवृत्तिर्मम नीरसापि मान्या भवित्री नृपतेश्चरित्रैः।
> के वा न शुष्कां मृदमभ्रसिन्धुसम्बन्धिनीं मूर्धनि धारयन्ति॥ इति।[2]

सेयमुक्तिः कवेर्विनयातिशयं विक्रमविषयकमत्यादरं च नूनं द्योतयति।

इतिहासस्य यथासाध्यं पक्षपातरहितत्वं लोकसंमतम्। परं तत्सिद्धान्तमात्रमेव। निष्पक्षेतिहासानां संख्या प्रायोऽभावकोटिमेवारोहति। किञ्च न खलु बिल्हणः केवलेतिहासपटुः पण्डितः, विशेषतस्तु महाकवित्वेनैव तत्कीर्तिरव्याप्यवतिष्ठते। स्वकालिकं सर्वात्मना योग्यं नायकं विषयीकृत्य काव्यविरचनमेव स स्वाभिमतं मेने, न त्वितिहासमात्रग्रन्थनं स्वप्नेऽप्यचिन्तयत्। इतिहासभित्तिमाधारीकृत्य काव्यचित्रं विरचयति कविवरे भित्तावप्राधान्यं प्रापितायां न हि स उपालम्भमर्हति। केवलेतिहासदृष्ट्या काव्ये उद्भाव्यमानदोषाणामयमेव हेतुः।

ईदृशकतिपयदोषोद्घाटनानन्तरं डा० ब्युह्लरमहोदयः प्रतिपादयति :—[3] 'इतिहासविषयकचरितेष्वीदृशा दोषाः समुत्पद्यन्त एव' इति। तत्तु न संगतम्। वस्तुतस्तु महाकविप्रणीतकाव्येष्वैतिहासिकदृष्ट्या समालोचितेषु मुधैव दोषाभासाः समुत्पद्यन्ते। स्वीयविशेषमतप्रभावितानामभिन्नमपि वस्तु भिन्नमिवावभासते। आस्तां तावत्।

इतिहासाचार्यस्य डा० ब्युह्लरमहोदयस्य ज्ञानराशावैतिहासिकोंऽशः साहित्यांशं नूनमत्यशेत। परं स्व० श्री० पं० महावीरप्रसादद्विवेदिमहोदयस्त्वासीत् साहित्यधुरन्धरः। साहित्यरसिकसमालोचनं साहित्यमार्गानुयायि स्यात्, कविहृदयं सहृदयोऽवगच्छेदिति नास्त्राभाविकम्। परं सोऽपि तामेव वाचं प्रत्यध्वनत्। तावताप्यसन्तुष्टस्तामपि सीमामुदलङ्घयत्। स हि न्यरूपयत्—[4]'विक्रमाङ्कदेवाश्रितः कविस्तं तद्वंशजांश्च स्तुयादिति तद्धर्म एवेति नः प्रतिपन्नम्। परमौचित्यानौचित्यमीमांसापि तस्यावश्यमेव कर्तव्यपथमायाति। नितान्तमसंभाव्यवस्तूनामैतिहासिककाव्येषु वर्णनं नैवोचितम्' इति। परमितिहाससंमतं नायकं स्वकाव्ये वर्णयन् कविः स्वप्रतिभायै न तिलाञ्जलिं ददातीति स्पष्टमपि वस्तु द्विवेदिमहोदयः कथं न विमृष्टवानिति न जानीमहे। ऐतिहासिककाव्यानाम्—अप्रधानीकृतेतिहासानां काव्यानां, शुद्धैतिहासिकदृष्ट्या समालोचनमेव न श्रेयस्करम्। इतिहासविद् डा० ब्युह्लरमहोदयः साहित्यरसिको द्विवेदिमहोदयश्च षड्ऋतुजलकेलिपुष्पावचयप्रातःसायंसन्ध्यादिकाव्याङ्गवर्णनान्यप्यप्रासङ्गिकार्थहीनपिष्टपेषणादिविशेषणैरलञ्चक्रतुः। आदितोऽन्तं यावत् काव्यभाषा विविधालङ्कारालङ्कृतातिशयोक्तिभूषिता चेत्यपि तावखिद्येताम्।[5]

---

1 विक्र. अध्या. १०१. 2 विक्र. प्र. २८. 3 Buhler Intro pp. 3-4. 4 चर्चा प. ६. 5 Buhler Intro. pp. 3-4. चर्चा प. ७-८.

पुरा किल महामहिममण्डिता महापुरुषास्तादृशमहाद्भुतानि कृत्यानि समपादयन्येषु न वयं विश्वसिमः सारल्येन सांप्रतम् । तदवशेषचिह्नानामितिहासादिप्रमाणान्तराणाञ्चास्मत्पुरतोऽभावे नूनं तानि जनश्रुतिमात्रमित्यस्माभिर्निःशङ्कमुद्घोष्येत । प्राचीनप्रासादादिभग्नावशेषाः शस्त्रास्त्रादियुद्धसाधनानि च स्वेषां वस्तुतः सदपि मर्त्यनिर्मितत्वं तदुपयुक्तत्वञ्च विश्वासागोचरतां नयन्ति । कमप्याधारमवलम्ब्यैव कविः स्वीयाद्भुतकल्पनाचित्राणि चित्रयति । बाणभट्टः स्वकादम्बर्यामनुपमैश्वर्यानन्दादिपदार्थास्तानवर्णयद्य इदानीन्तनानां भारतीयानां नः कल्पनातीताः । परं हर्षवर्द्धनसाम्राज्यवैभवे चिन्त्यमाने बाणभट्टकल्पनौचित्यं स्पष्टमवभासते ।

'इण्डियन एन्टिक्वेरी'पत्रसम्पादकमहोदयो बिल्हणोक्तीः परिवर्णयन्नेवमुदलिखत्—[1] 'अक्षरशोऽनूदितास्ता ( उक्तयः ) नूनमेवेदानीन्तनपाश्चात्यविपश्चितोऽत्यर्थं ह्रासयिष्यन्ति । परं ता एव तदानीन्तनलोकानसङ्गतत्वेन न प्रतीयेरन् यदांग्लभाषासर्वोत्तमकविः शेक्सपीयरमहोदयः सागरोन्मादमित्थमवर्णयत्—'वर्षतीवाम्बरं जाज्वल्यमानं कज्जलम्, जलनिधेरुत्तालकल्लोलास्त्वम्बरमासाद्य वह्निं शमयन्ति' इति । देशकालपरिस्थितिः कियदवधि कवीन्प्रभावयतीत्यस्यैतदस्ति समुचितं निदर्शनम् ।

बिल्हणकविकालिकावस्थापेक्षयाद्यतनावस्थासु महदन्तरं वर्तते । न परं शौर्यादिष्वपि तु सदाचारादिष्वपि तदानीन्तना इदानीन्तनानत्यशेरत । मेगास्थिनीजनामको वैदेशिको भारते वत्सरानुवास, परं कमप्यसत्यभाषिणं नावाप । इयमुक्तिर्न प्रतीयतेऽद्य कथञ्चनापि विश्वासार्हा ।

कालक्रमेण सकलमपि वस्तुजातं विपरिणमति । पुरा प्रणीतकाव्यमिदानीन्तनावस्थानुसारं पर्यालोच्य तत्र दोषोद्भावनं न प्रशंसास्पदम् । कविः स्वोद्देश्यं सर्वात्मना परिपूर्णयन्स्वप्रतिज्ञापालनेऽलं सफलीबभूव ।

राजतरङ्गिण्यां कलशनृपतेर्दुराचारित्वमत्याचारित्वं च स्पष्टमेव वर्णितम् ।[2] स हि स्वजनकमनन्तनृपतिं तथापीडयद्यथा स स्वात्मानमात्मनैव व्यापादयामास । परं तदनाश्रितः कविस्तमप्यस्तौषीत् । को नामात्र कवेः स्वार्थः । एकमेव वस्तु विविधदृष्ट्या विविधमिव प्रतीयत इति निर्विवादोऽर्थः ।

नास्त्येव मानवः क्षितितले कोऽपि यः सर्वात्मना दोषहीनः स्यात् । परं कवयः स्वनायकगुणानेव वर्णयन्ति । तद्दोषान् संकीर्त्य स्वकाव्यस्य सकलङ्कतापादनं नाभिलषन्ति । अयमेव हेतुर्यत्ते क्वचन तद्दोषान्सर्वथैवोपेक्षन्ते, क्वचन पुनस्तान्मनोज्ञावरणेनावृण्वन्ति । तथा चोक्तमलङ्कारशास्त्रे—'यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा । विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्' इति । विक्रमादित्येऽपि केचन दोषाः स्युः, परं कवेः पुरस्तादासी-

---

1 I, A, V p. 325. 2 राज. सप्त. २३१ प्रभृति ।

त्केवलं मार्गद्वयम्। विहाय विक्रमाङ्कभरनायकविषयककाव्यविरचनमथवा तन्मार्गाश्रयणं यस्तेनाश्रितः।

देववाणीकविषु स्वजीवनवृत्तान्तनिबन्धनविषये प्रायश उदासीनेष्वपि चरितकाव्यप्रणेतारः संक्षेपतः स्वजीवनवृत्तान्तमप्यग्रथ्नन्। ते हि स्वकाव्यनायकैः समं स्वनाम्नोऽप्यमरीभावमैच्छन्नित्यनुमीयते।[1] बिल्हणमहाकविरप्यन्तिमेऽष्टादशे सर्गे काश्मीरांस्तन्नृपतींश्च वर्णयन् स्ववृत्तान्तं निबबन्ध। कविरेवमाह—

काश्मीरेषु नाम्ना प्रवरपुरम् (श्रीनगरम्) इति पुराणां प्रधानं पुरं विद्योतते।[2] वितस्ता (जेहलम)–सिन्धुनदीसंगमसमीपगतं तज्जगतीतले सकलवन्द्यतां प्रयाति।[3] सौख्यशान्तिपावित्र्यादिसकलगुणगणालङ्कृते विद्याया आदिधाम्नि तस्मिन् जना वचसामगोचरामानन्दकोटिमधिष्ठिताः। अङ्गनास्तावन्नाट्यादिसकलकलासु दक्षाः सरस्वत्या अधिष्ठानतां यान्ति। आस्तां तावत्पुरुषाः, यत्र 'स्त्रीणामपि जन्मभाषावदेव प्रत्यावासं विलसति वचः संस्कृतं प्राकृतं च'।[4] कुङ्कुमद्राक्षाद्यद्भुतवस्तूनामाकरे तत्र विप्राः सततमग्निहोत्रादियागान् पुण्यकार्यान्तराणि च कुर्वन्तः पुरुषार्थचतुष्टयं करतलगतं विदधति।[5]

प्रवरपुरस्य रमणीयेषु पावनेषु विशिष्टेषु च प्रदेशेषु कविर्मधुमतीं नदीं,[6] भट्टारकमठम्,[7] प्रद्युम्नक्षितिधरम्[8] (सारिकापर्वतम्, हरिपर्वतम्), हलधरकृताननेकानग्रहारान्,[9] संगमसमीपस्थं क्षेमगौरीश्वरमन्दिरम्,[10] संग्राममठम्,[11] चन्द्रसीमाप्रदेशम्,[12] अनन्तदेवकृताननेकानग्रहारान्,[13] सुभटादेवीकृतं शंकरागारनिकटस्थं गङ्गधाम,[14] प्रवरेश्वरमन्दिरम्,[15] काश्मीरोर्वीपतिप्रासादान्[16] अन्यानि च बहूनि स्थानानि निर्दिशति। (क)

---

(क) डा० ब्युह्लरमहोदयो मधुमतीं नदीं, चन्द्रसीमाप्रदेशं, कानिचन नामान्तराणि च न पर्यगणयत्। अत्र प्रद्युम्नक्षितिधरमनिर्दिशताऽपि तेन स्वकाश्मीरयात्राविवरणग्रन्थे[17] तन्नाम निरदेशि। कविः काश्मीराणां, तन्नृपतीनां विषयान्तराणां च सम्बन्धे यत्किमप्यवर्णयत्तत्सकलं तथैव राजतरङ्गिण्यामुपलभ्यते। तत्प्रणेता कल्हणकविर्विक्रमाङ्कदेवचरितं साध्वध्यैष्टेति निर्विवादोऽर्थः।[18] (सावशेषा)

---

1 Buhler Intro p. 5. 2 विक्र. अष्टा. १९. 3 विक्र. अष्टा. १५-१६. 4 विक्र. अष्टा. ६. 5 विक्र. अष्टा. १-३२. 6 विक्र. अष्टा. ५. 7 विक्र. अष्टा. ११. राज. सप्त. २९८ 8 विक्र. अष्टा. १५. राज. तृ. ४६० टिप्पणी च 9 विक्र. अष्टा. १९. राज. सप्त. २१४. 10 विक्र. अष्टा. २३. राज. षष्ठ. १७३. 11 विक्र. अष्टा. २४. राज. सप्त. १४२. 12 विक्र. अष्टा. २४. 13 विक्र. अष्टा. २४. 14 विक्र. अष्टा. २६. राज. सप्त. १८०. 15 विक्र. अष्टा. २८. राज. तृ. ३७७-७८. 16 विक्र. अष्टा. ३०. 17 Report p. 16. 18 Raj. Stein I p. 10.

तत्र सत्यत्यागादिगुणोपेतः शूराणामग्रणीरनन्तदेव इति नृपतिरासीत्। स किल शकान्विजित्य, दरद्दीर्घदर्पं दलयित्वा, संग्रामरसेन गङ्गां यावज्जगाम। पूतमानसो मानसं ददर्श। चम्पां, त्रिगर्तान् दार्वाभिसारप्रदेशं चात्मसादकरोत् (क)।[1]

तस्य देवी सुभटा नयमार्गकुशला दयामूर्तिर्विद्यानिधानं दानपरा चासीत्। तद्वर्णनमशक्यमेवासीत्।[2] लोहरदुर्गाधिपतिः क्षितिपतिरनन्तदेवस्य भ्राता बभूव (ख)। शूराग्रगण्यो दानकुशलः कवीनामाश्रयो विद्वत्तायाः शिखरमारूढः स विष्णुभक्तिपरायणोऽभवत्। स हि राजपुर्याः प्रतापं शान्तिं निनाय।[3]

अनन्तदेवः सुभटायां कलशाभिधं पुत्रं लेभे। कलशस्तावत्कादम्बरीवर्णितमच्छोदसरो व्यलोकयत्। अलकायाः प्रत्यागच्छन्मानसमपश्यत्। बालुकाब्धिं च विलङ्घ्य स्त्रीराज्यं व्यजयत (ग)।[4]

---

—डा० ब्युह्लरमहोदयो मूले 'संग्रामोर्वीपरिवृढमठ' इति संगतं पाठं स्वीकुर्वन्नपि स्वभूमिकायां 'संग्रामक्षेत्रमठ' इति पाठं व्याख्यां चाकरोत्।[5] रामावतारशर्मणां संस्करणे रणक्षेत्रपरिवेष्टितमठार्थकः 'संग्रामोर्वीपरिवृतमठ' इति पाठो वैपरीत्यं प्रापितः। स त्वसंगतः। वस्तुतस्तु 'संग्रामोर्वीपरिवृढमठ' इत्येव पाठः साधीयान्, संग्रामराजनाम्ना निर्मितो मठ इति च तस्यार्थः। राजतरङ्गिण्यामस्याप्यस्ति निर्देशः।

(क) द्विवेदिमहोदयश्चम्पां त्रिगर्तदेशांश्च नगरत्वेन संमनुते।[6]

(ख) डा० ब्युह्लरमहोदयो 'यस्या भ्राता क्षितिपतिरिति क्षात्रतेजोनिधानम्' इति पाठमभ्युपगम्य 'क्षितिपतिः सुभटा भ्रातासीद्' इति व्याचख्यौ।[7] द्विवेदिप्रभृतयो विद्वांस ईदृशानेकस्थलेषु निर्विचारं डा० ब्युह्लरमहोदयमनुचक्रुः।[8] वस्तुतस्तु 'यस्य भ्राता क्षितिपतिरिति' इति पाठः संगतः। क्षितिपतिरनन्तदेवस्य पितृव्यजो भ्रातासीत्। तथा च निर्दिष्टमेव राजतरङ्गिण्याम्—[9]

पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः।
राज्ञः पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ॥ (राज्ञोऽनन्तदेवस्य)

(ग) काश्मीरेभ्य उत्तरस्यां दिश्यवस्थितो बालुकाब्धी राजतरङ्गिण्यामस्ति निर्दिष्टः।[10]

---

1 विक्र. अष्टा. ३३-३९. राज. सप्त. १३५-४५२. 2 विक्र. अष्टा. ४०-४६. 3 विक्र. अष्टा. ४७-५०. राज. सप्त. २५१-२५४. Raj. Stein II 254. 4 विक्र. अष्टा. ५१-६०. 5 Buhler Intro. p. 8. 6 चर्चा. प. १२. 7 Buhler Intro. p. 9. 8 चर्चा. प. १३. 9 राज. सप्त. २५१. पश्यत परिशिष्टम् क. 10 राज. चतु २९४, १७२-२७९ प्रभृति, ३०६.

स खलु चन्द्रभागां यमुनां चोल्लङ्घ्य कुरुक्षेत्रं यावदगच्छत्। तत्र च जयलक्ष्मीं स्वीचकार।[1]

तस्य तनयो हर्षदेवो वीराणामग्रणीः श्रीहर्षादप्यधिककवितोत्कर्ष आसीत्।[2] कलशस्य द्वितीयस्तनूज उत्कर्षदेवः क्षितिपतियशोधाम लोहरदुर्गमवाप्य क्षितिं म्लेच्छपाशान्मोचयामास।[3] कलशस्य तृतीयः पुत्रो नाम्ना विजयमल्ल इत्यासीत्।[4]

काश्मीरांस्तद्भूपतींश्चैतावद्वर्णयित्वा ( ६९ पद्यैः ), कविः ( ७० तमात् १०४ पद्यं यावत् ) स्वचरितं निरूपयति :—

प्रवरपुरतः क्रोशत्रये (क) नाम्ना जयवनमित्युत्तुङ्गचैत्यं स्थानमस्ति।[5] तस्योपकण्ठसीम्नि[6] खोनमुषनामधेयः (ख) सकलगुणाकरो ग्राम उल्लसति। अद्भुतानां कथानां प्रथमवसतिः कुङ्कुमद्राक्षोद्भवस्थानं स ग्रामो जगतीतलेऽनुपम एवास्ति।[7]

---

(क) 'तस्मादस्ति प्रवरपुरतः सार्द्धगव्यूतिमात्रीं, भूमिं त्यक्त्वा जयवनमिति स्थानमुत्तुङ्गचैत्यम्' इत्यस्ति कवेरुक्तिः। डा० ब्युह्लरमहोदयः स्वसंस्करणभूमिकायां सार्द्धगव्यूतिपदं सार्द्धैककोशपरतया व्याचचक्षे।[8] तत्तु न संगतम्। स किल ई० १८७५ वर्षे काश्मीरान्पर्यटन् बिल्हणजन्मभूमिं प्रत्यक्षीचकार। तथा चोक्तमेव तेन स्वविवरणग्रन्थे[9] '''उपलभ्य तावद्बिल्हणवर्णनयाथार्थ्यमभवंश्चकितचकितः '''काश्मीरेषु गव्यूतिः क्रोशयुगमेवावधार्यते। विक्रमाङ्कदेवचरितस्थं मद्व्याख्यानमसंगतम्। प्रवरपुराज्जयवनं क्रोशत्रयान्नास्ति कथञ्चिदपि निकटस्थमिति।' एवं स्थितेऽप्यन्यविद्वांसोऽद्य यावदसंगतं वस्तु तथैवानुवदन्ति।[10]

(ख) डा० ब्युह्लरमहोदयो विक्रमाङ्कदेवचरिते ग्राममेतं 'खोनमुख' इति निरदिशत्।[11] वस्तुतस्तु 'खोनमुष' इति 'खुनमुष' इति वा ख्यातोऽस्ति स ग्रामः। डा० ब्युह्लरमहोदयो राजतरङ्गिणी–कनिंघममहोदय–भाषाविकृतिभिरन्यैश्चप्रमाणैरस्य ग्रामस्योचितं नाम प्रमाणीचक्रे। अद्यायं 'खुन्मोह' इत्युच्यते।[12] प्रायः सर्वेऽपीतिहासप्रणेतारो बिल्हणवर्णनेषु 'खोनमुख' इत्यसंगतनामैवानुवदन्ति।[13]

---

1 विक्र. अष्टा. ६१-६३. राज. सप्त. २३१-७२३. 2 विक्र. अष्टा. ६४-६६. राज. ३१९,६१० पद्यान्तराणि च. 3 विक्र. अष्टा. ६७. राज. सप्त. २५६-२७५. 4 विक्र. अष्टा. ६८-६९ राज. सप्त. ७३१. 5 राज. सप्त. ६०७. Raj. Stein II 458. 6 राज. प्र. ९०. Raj. Stein II 458. 7 विक्र. अष्टा. ७०-७२. 8 Buhler Intro. pp. 10,17. 9 Report p. 4 ff. 10 Clas. Lit. pp. 164-65. सो. प्रा. इ. प. १२० टि. 11 Buhler Intro. pp. 10, 16. 12 Report p. 4 sqq. 13 सो. प्रा. इ. प. १२० टि. Clas. Lit. p. 164.

तत्र पवित्रितकौशिकगोत्रा ब्रह्मप्रवणमनसो ब्राह्मणाः केचिदासन्। बिल्हणस्तदन्वयमेव स्वजन्मना मण्डयाञ्चकार। मुक्तिकलशस्तस्य प्रपितामहः, राजकलशः पितामहो ज्येष्ठकलशश्च पिता आसीत्। तस्य जननी नागादेवी कल्याणभाजनमभवत्। बिल्हणस्य पूर्वजा धर्मधुरन्धरा, दानप्रवणैकमनसो, विद्वदग्रेसराः सर्वगुणगणालङ्कृताश्चासन्। ज्येष्ठकलशो महाभाष्यं साधु व्याचचक्षे (क)।[1]

ज्येष्ठकलशान्नागादेव्यां बिल्हणोऽजायत। मौञ्जीबन्धात्प्रभृत्येव तस्य वदने वाग्देवता वासं व्यधत्त। साङ्गवेदं, पतञ्जलिप्रणीतं व्याकरणं शास्त्रान्तराणि च सोऽध्यैष्ट। साहित्यविद्या तस्य प्राणा एवासीत्। तस्य ज्ञानराशिरगाधतां भेजे। सकलमेव दिङ्मण्डलं तद्यशोमण्डितमासीत्। क्षितिपतिशतास्थानलीलावतंसो नाम्नेष्टराम इति तस्य ज्येष्ठभ्राता विद्वन्मण्डलीमूर्ध्नि अतिष्ठत्। अनुज आनन्दोऽपि सकलगुणवरिष्ठः सरस्वतीवल्लभोऽभवत्।[2]

काश्मीरेषु सकलवेदशास्त्राण्यधीत्य तांश्च स्वयशोभिर्भूषयित्वा बिल्हणो विदेशान्प्रति प्रतस्थे। यमुनापथेन प्रस्थितः सर्वप्रथमं मथुरामाजगाम। तत्र किल शास्त्रार्थवादेषु विदुषो विजित्य वृन्दावनपरिसरे वासरान्कांश्चिन्निनाय। सकलदिक्षु विस्तृतानि तत्काव्यानि न खलु कैश्चित्कचिन्नाधीतानि। वृन्दावनान्निर्गत्य कीर्तिविजितकान्यकुब्जः प्रयागं प्रत्याजगाम। तत्रासक्कल्लक्ष्मीमददात्। ततः प्रस्थाय काशीं समाययौ। कालञ्जरगिरिपतिकालो डाहलाधीशः कर्णनृपतिस्तद्वृत्तमुपलभ्य परमानन्दमविन्दत। पूर्वस्यां दिशि काशीनगर्येव तस्यावधिर्बभूव। स्वसूक्तिसुधाभिः शीतलीकृतायोध्यः कविर्डाहलाधीशधाम्नि

---

(क) 'महाभाष्यव्याख्यां सकलजनवन्द्यां विदधतः, सदा यस्य च्छात्रैस्तिलकितमभूत्प्राङ्गणमपि' इति कवेरुक्तिं 'ज्येष्ठकलशो महाभाष्यटीकां काञ्चन प्रणिनाय' इति व्याख्यातवान् डा० ब्युह्लरमहोदयः। इयं टीका क्वचनापि नोपलभ्यते नापि च निर्दिश्यत इति तेन प्रत्यपादि[3]। सर्वमेतदसंगतम्। ज्येष्ठकलशः कामपि टीकां न प्रणीतवानिति वस्तुस्थितिः। स हि महाभाष्यस्य व्याख्यायां (व्याख्यानेऽध्यापने वा) कुशलोऽभवदित्येव कवेराशयः। काश्मीरेष्वनेकानि व्याख्यास्थानान्यासन्, काश्मीरिका विद्वांसश्च व्याख्याकुशला आसन्निति कविनान्यत्रापि स्थानद्वये (अष्टा. ४, अष्टा. ७८) प्रत्यपादि। कवेः प्रागुक्तोक्तौ टीकानिर्माणपरकतया प्रतिपन्नायां छात्राणां निर्देशो न संगच्छते। किञ्च 'कृतवतः' इति पदेनैव तात्पर्यावबोधे सुकरे वर्तमानकालप्रयोगो मुधैव स्यात्। डा० ब्युह्लरमहोदयीयमिदमसंगतं मतं, ई० १९३७ वर्षे प्रकाशिते एम्. कृष्णमाचारियरमहोदयानां संस्कृतसाहित्येतिहासेऽप्युपलभ्यते।'[4]

---

1 विक्र. अष्टा. ७३–७९. 2 विक्र. अष्टा. ८०–८५. 3 Buhler Intro. pp. 12, 16. 4 History of the Classical Literature by M. Krishnamachariar M. A., M. L., PH. D., M. R. A. S. p. 164.

प्रसिद्धं कविं गङ्गाधरमधरतां नीतवान् । विजितसकलकविमण्डलस्य तस्य यशःकथा इन्द्रस्यापि श्रोत्रपथातिथीभवन्ति स्म (क) ।[1]

(क) डा० ब्युह्लरमहोदयो डाहलदेशमिदानीन्तनबुन्देलखण्डेनाभिन्नं मत्वेत्थमाह :[2]- 'काश्या इयदवधि दक्षिणपश्चिमप्रान्तमागत्य पुनरुत्तरस्यामयोध्यायां गमनमसंभाव्यमिवाभाति । ततश्च 'सूक्तिनिःस्यन्दशीताम्, सीताभर्तुर्व्यरचयदसौ राजधानीमयोध्याम्' अस्य वाक्यस्येदमेव तात्पर्यं यत् कविः कर्णसभायामेवावस्थितो रामस्तुतिकाव्यं निबबन्ध' इति । परं मतमेतत्तस्य सर्वात्मनाऽसंगतमेव ।

तथाहि :—कविर्वाराणस्यां स्वागमनं निरूप्य ( अष्टा. ९२ ), अनन्तरश्लोके (९३) 'कर्णो बिल्हणवृत्तान्तं निशम्य ननन्द' इति प्रतिपाद्य, ततश्चानन्तर एव श्लोके (९४) 'असौ कविरयोध्यां सूक्तिनिःस्यन्दशीतां व्यरचयद्' इति व्यलिखत् । तदग्रिमे च श्लोके (९५) 'डाहलाधीशधाम्नि विजितगङ्गाधरस्य क्रीडाक्रान्तप्रतिभटकवेस्तस्य कीर्तिरिन्द्रश्रोत्रयोरतिथीबभूव' इति न्यरूपयत् । अत्रेदमवधेयम् :—

कलचुरि ( हैहय ) – वंशीयो डाहल ( चेदि ) – देशाधीशो लक्ष्मीकर्णः ( कर्णः ) प्रायशः ई. १०४१ वर्षाद् ई० १०७३ वर्षं यावदशास्त । स हि तदानीन्तनेषूत्कृष्टतमः प्रतापशाली चासीत् । तस्य राज्यं प्राज्यं समृद्धञ्चाभवत् । त्रिपुरीनगर्यामेतद्वंशप्राचीनराजधान्यां सत्यामप्ययं काशीमपि द्वितीयां राजधानीं व्यदधात् । आसतां तावदिदानीन्तना गवेषणा ग्रन्थाश्च, फार्बसमहोदयप्रणीतेऽतिपुरातने 'रासमाला' नाम्न्यपि ग्रन्थेऽस्य राज्ञोऽतिविपुलविभूतिवर्णनं काश्याश्चैतद्राजधानीत्वमस्ति निरूपितम् । इदानीन्त्वेतद्विषयकाणि बहून्युपलभ्यन्ते प्रमाणान्तराणि ।[3] कविः कर्णेन क्व परिचयमकार्षीदिति न प्रत्यपादयत् । परं प्रागुक्तपद्यचतुष्टयेषु साधु पर्यालोचितेषु, परिचयोऽयं काश्यामेव बभूव न त्रिपुर्यामिति स्पष्टीभवति । अत्रेदमप्यवधेयं यत्कविः साक्षात्परिचयसूचकं पदमप्रयुज्य 'सोऽपि यं प्राप्य वृत्तम्' इत्येव भणति ।[4] 'वृत्तम्' इति पाठः स्यादसंगत इत्यपि नास्त्यसंभाव्यम् । बिल्हणस्य काश्यामागमनावसरे आस्तां नाम कर्णनृपतिस्त्रिपुर्याम्, परमीदृशमहाकवेः स्वराज्यागमनं न हि स नाकर्णयेत् ।

पुरा कवयो विद्वांसश्च देशाटनतोऽप्यर्थसाधनेन समं धर्मार्जनमपि स्वलक्ष्यीचक्रुः । कर्णराजधान्यां काश्यामेव वसन् यात्रोत्सवादिप्रसङ्गेन कविरयोध्यां ययाविति संभाव्यते । कविरनेकस्थलेषु रामविषयकं स्वानुरागं बाढं प्रकटीचकार । अयोध्यानैकट्यमुपगतोऽपि तद्दर्शनं कविरुपेक्षेतेति न विश्वासार्हम् । किञ्च 'सूक्तिनिःस्यन्दशीताम्, सीताभर्तुर्व्यरचय-

1 विक्र. अष्टा. ८६–९५. 2 Buhler Intro. pp. 18, 24. 3 D. H. N. I. II pp. 777–786. इ. प्र. प. २१८-१९. 4 विक्र. अष्टा. ९३.

कर्णराजधान्याः प्रस्थितो बिल्हणो भोजराजधानीं धारामयासीत् । परं तदा भोजः पुरन्दरपुरातिथिरासीदिति कवेः कामो निष्फलीबभूव (क)।[1]

दसौ राजधानीमयोध्याम्' इति वाक्यांशः कवेरयोध्यागमनं निःसंशयं प्रमाणयति। वस्तुतो रामस्तुतिकाव्यमेवारचयिष्यच्चेत् कवी 'रामपदसेवां रामगुणकीर्तनं वाकरोद्' इत्येवाकथयिष्यत्। 'रामस्तुतिकाव्य' प्रणयनेनायोध्यामात्रं शीतलीचकारेत्युक्तिरात्माभिमानिनो बिल्हणस्य प्रतिकूलेवाभाति। तत्काव्यं सकलजगतीतलं शीतलीकरोत्वेतदेवोचितं वास्तविकञ्च प्रतीयते।

कविः ९५ श्लोके गङ्गाधरस्यान्यकवीनाञ्च स्वसंपादितं विजयमुक्त्वा स्वयशसः पुरन्दरश्रोत्रातिथित्वमवोचत् । सेयमुक्तिर्विजयस्य पूर्वस्यामेव दिश्यभ्युपगमे संगततरा स्यात्, न तु दक्षिणपश्चिमायामवस्थितत्रिपुरीपुर्यामिति कस्य नाभिमतम्।

किञ्चेदमप्यवलोकनीयम् :– कविः स्वसकलयात्रायां केवलमत्रैव विजितविद्वांसं नामग्राहमुल्लिखति। एतच्च तदात्वे गङ्गाधरस्य लोकोत्तरयशोमण्डितत्वं गुणगणालङ्कृतत्वञ्च ध्वनयति । वाराणसी चिराय विद्याकेन्द्रमिति जनैर्नहि न विदितम् । ईदृशमहास्थले ईदृशलोकोत्तरविदुषो विजयो नूनमेव गौरवास्पदमिति को न स्वीकुर्यात् । अन्यथा तु इयमुक्तिरेव निरर्थिका स्यात्। एवञ्चास्य विजयस्य काश्यामेव संभवोऽधिकतरं संभाव्यो युक्तियुक्तश्च सिद्ध्यति।

कविरयोध्यां नूनं जगामेति सर्वात्मना निश्चीयते। 'रामस्तुतिकाव्यं' च कल्पनामात्रविषयमेव डा० ब्युह्लरमहोदयस्येति निर्विवादोऽर्थः। संस्कृतविद्वन्मण्डली तत्काव्यमाधुरीवञ्चितेति प्रतिपादयन्नस्मन्मानसानि दुःखाकरोति डा० ब्युह्लरमहोदयः।[2] किञ्च 'सुभाषितग्रन्थेषु बिल्हणनामाङ्कितानि बहूनि पद्यान्युपलभ्यन्ते' इति तदुक्तिः संगताप्युपलब्धपद्यानां शृङ्गाररसमयत्वेन रामस्तुतिपरकत्वाभावेन च रामस्तुतिकाव्यनिर्माणं साधयितुं नैव समर्था। सहृदयवरिष्ठो विद्वदग्रेसरः कीथमहोदयः श्रीकृष्णमाचारियरमहोदयश्च रामस्तुतिकाव्यकथामेवान्ववदतामिति।[3]

(क) कवेर्धारागमनावसरे भोजराजोऽविद्यत, परं कारणैः कैश्चित्कविस्तं नापश्यदिति डा०ब्युह्लरमहोदयः प्रत्यपादयत्।[4] कर्णदेवभोजराजयोर्दौर्मनस्यमासीत्ततश्च कर्णकृपापात्रं कविर्धारां न ययावित्यपि सोऽन्वमंस्त ।[5] परं तदसंगतम्।[6] भोजराजः ई० १०५५ वत्सरात्प्रागेव कथाशेषो बभूव। बिल्हणः किल ई० १०६२–१०६५ वत्सरयोरन्तराल एव काश्मीरेभ्यो विनिर्ययाविति डा० ब्युह्लरमहोदयः स्वयमेव वक्ति।[7] (सावशेषा)

1 विक्र. अष्टा. ९६. 2 Buhler Intro. p. 24. 3 H. San. Lit. p. 153. Clas. Lit. p. 164. 4 Buhler Intro. pp. 19, 23. 5 Buhler Intro. p. 19 fn. 6 सो.प्रा. इ. पृ. १२१, १२२ टिप्पणी च। 7 Buhler Intro. p. 23.

धाराविफलीकृतमनोरथः कविर्गुर्जराञ्जगाम । जुगुप्सास्पदान्यनुचितांश्च शब्दान् प्रयुञ्जतां गुर्जराणां परिचयवशादर्जितमनस्तापस्य कवेः स्वान्तं सोमनाथविलोकनेन नितान्तमानन्दमविन्दत (क) ।[1]

सोमनाथान्निर्गत्य स दक्षिणभारतं बभ्राम (ख) ।[2]

बिल्हणो दक्षिणस्यां दिशि चिरं पर्यटति स्म। स हि रामेश्वरं यावद्गत्वा ततः प्रत्यावृत्य कल्याणनगरं प्राप। चालुक्यविक्रमादित्याल्लब्धातिमान्यविद्यापतिपदस्तत्रैवायुरवशेषं यापयामास ।[3]

---

—तथा च कवेरुक्तिः—

'भोजः क्ष्माभृत्स खलु न खलैस्तस्य साम्यं नरेन्द्रै-
स्तत्प्रत्यक्षं किमिति भवता नागतं हा हतास्मि।
यस्य द्वारोड्डमरशिखरक्रोडपारावतानां
नादव्याजादिति सकरुणं व्याजहारेव धारा' ॥ इति ।[4]

'Simulating the cooing pigeons that nested on the lofty turrets of her gates, Dhara cried to him in pitiful tones : Bhoja is my king. He forsooth, is none of the vulgar princes. Woe is to me ! Why didst thou not come into his presence !'

इति साध्वर्थं व्याचक्षाणोऽपि[5] गृहीतविपरीततात्पर्यो डा० ब्युह्लरमहोदयः संगततरं मतं प्रत्यपादयत्। कवेर्धारायां साक्षाद्गमनाभावे 'भवता' इति पदं नैरर्थक्यं भजति। कथं नाम धारा कवेः सम्बोधनं कुर्यात् ? भोजे जीवति 'हा हतास्मि' इति खेदोक्तिरसंगतैव। स हि 'तत्प्रत्यक्षम्' इति पदं 'तस्य पुरस्ताद्' इत्यर्थकपरतया व्याचख्यौ। वस्तुतस्तु 'तस्मिञ्जीवति कथं नागतो भवान्' इत्येवार्थः कवेरभिप्रेतः।

(क)कविर्गुर्जराणां विषये मौनमवलम्बमानो नो मानसानि नूनं विस्मापयति। स हि गुर्जरेषु कालं कञ्चिदुवास, गुर्जरराजधान्यामणहिल्लपाटननामधेयायां वसंश्च कर्णसुन्दरीनाटिकां प्रणिनायेति निश्चितम्। स किलात्यर्थमात्माभिमान्यासीत्। लोकोत्तराभिमानसंवलितस्वविलक्षणप्रकृतिप्रेरितः स ततो निर्जगाम। तत्रान्ते नृपतिना विद्वद्भिर्वा सार्कं व्यरुणदित्यनुमीयते। ततश्चास्मिमे श्लोके ( ९७ ) गुर्जरनीचमनोव्यापारे स्वखेदमाख्याति।

(ख) कविर्वेरावलस्थानाज्जलयानेन दक्षिणं जगाम, कोङ्कणे गोकर्णसमीपस्थहनोराख्ये स्थले चावततारेति वदन्नपि[6] डा० ब्युह्लरमहोदयो न तत्र प्रमाणं दर्शयति। कोंकणे गोकर्णयुतपरशुरामक्षेत्रे स्वागमनं सूचयन्नपि कविः पोतयात्रां न प्रकटयति।

---

1 विक्र. अष्टा. ९७ 2 विक्र. अष्टा. ९८. 3 विक्र. अष्टा. ९९-१०८. 4 विक्र. अष्टा. ९६. 5 Buhler Intro. p. 14. 6 Buhler Intro p. 19.

बिल्हणः १०६२–१०६५ ई० वत्सरयोरन्तराले काश्मीरेभ्यो विनिर्ययौ, वार्द्धके च प्रायः १०८५ ई० वर्षे चरितं रचयामासेति सयुक्तिप्रमाणैः प्रमाणीकरोति स्म डा० ब्युह्लरमहोदयः।[1]

ई० १८७५ वर्षे काश्मीरान् परिभ्रमन् डा० ब्युह्लरमहोदयश्चौरपञ्चाशिकाया हस्तलिखितमतिप्राचीनमेकं ग्रन्थमलभत। तद्विषये स एवमाह[2]:—

'नूनं बिल्हण एव चौरपञ्चाशिकां प्रणिनाय। परमेतल्लघुकाव्यसंवलितं जनश्रुत्याधारनिबद्धं यदस्ति बिल्हणविषयकं 'बिल्हणचरितम्' न तद्विश्वासार्हम्। एतद्ग्रन्थान्ते वाक्यमिदमुपलभ्यते:–'इति चौरीसुरतपञ्चाशिका पण्डितबिल्हणकृता समाप्ता।' वाक्यमेतत्केचन विद्वांसः 'चौरकविप्रणीतं काव्यमिदम्' इति व्याचचक्षिरे। अन्ये पुनश्चौरीपदात् 'चावडा' चापोत्कटवंशजराजपुत्रीं कल्पयाञ्चक्रिरे। वस्तुतस्तु 'चौरसुरतपञ्चाशिका' इत्येव संगतः पाठः। चौरकर्मकृतसुरतविषयकपञ्चाशतपद्यानां काव्यमिति च तस्यार्थः। प्रागुक्तपदमेव चौरकविकृतपञ्चाशिकेत्यर्थकतया व्याख्याने हेतुः। 'अद्यापि तां कनकचम्पकदामगौरीम्' इत्यादिपद्यारब्धपञ्चाशतपद्यैः याथार्थ्येन चौरसुरतमेवाभिप्रेतमुतान्योक्तिमात्रं वेति निर्णेतुं दुष्करम्।

'काश्मीरासादितपञ्चाशिकाग्रन्थे आदावेवोपलभ्यतेऽधस्तनं पद्यद्वयम्:–

सर्वस्वं गृहवर्ति कुन्तलपतिर्गृह्णातु तन्मे पुन-
भाण्डागारमखण्डमेव हृदये जागर्ति सारस्वतम्।
रे क्षुद्रास्त्यजत प्रमोदमचिरादेष्यन्ति मन्मन्दिरं
हेलान्दोलितकर्णतालकरटिस्कन्धाधिरूढाः श्रियः॥ १॥
अयि किमनिशं राजद्वारे समुद्धुरकन्धरे
कुवलयदलस्निग्धे मुग्धे विमुञ्चसि लोचने।
भ्रमररमणीलीलावल्गद्विलोचनवागुरा-
विषयपतितो न व्यावृत्तिं करिष्यति बिल्हणः॥ २॥

तदिदं बिल्हणविक्रमादित्ययोः सकृद्दौर्मनस्यं द्योतयति' इति।

आसीद्बिल्हणो नितान्तमात्माभिमानी। पुरा राजसभासु नूतनविद्वत्प्रवेशो नासीत्सुकरः। तस्मिन्नूतनविदुषि राजप्रीत्यतिशयपात्रतां प्रयात्यन्ये राजपण्डितास्तं पराभूय, परिपीड्य, राजकोपभाजनीकृत्य च यथाकथञ्चन राजसभाया दूरीकरणार्थमचेष्टन्त। विक्रमसभापण्डिताः बिल्हणेनापि समं दुर्व्यवहृत्य केनचन कपटप्रयोगेण तं राजकोपपात्रमकुर्वन्निति न खलु न संभाव्यम्। परमेतद्दौर्मनस्यमादावेवाभूत्। डा० ब्युह्लरमहोदयोऽप्येतदेव संमनुते।[3]

---

1 Buhler Intro, p. 23. 2 Report p. 48 ff. 3 Report p. 48 ff.

श्रीकृष्णमाचारियरमहोदयस्त्वेवमाह[1] :–'चरितप्रणयनात्प्रागेवाभूदिदं दौर्मनस्यम्। अतो हि विक्रमाङ्कदेवचरितं नास्ति समस्तम्। तत्र १०८५ ई० वत्सरे विक्रमकृतं नर्मदापरतटाभियानं नास्ति निरूपितम्। काव्यान्तिमपद्यान्यपीदमेव सूचयन्ति' इति। तत्तु न संगतम्।

यतो हि, काव्यमेतन्नास्त्यसमाप्तम्। १०८५ ई० वत्सरात्प्रागेव प्रणीतमिति नास्ति तत्र तदनन्तरभाव्याक्रमणनिरूपणम्। आद्यसप्तदशसर्गेषु विक्रमचरितं निबध्यान्तिमे स्ववृत्तान्तं जग्रन्थ महाकविः। नूनं काव्यान्तेऽधस्तनोक्तिरास्ते :–
हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं, शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात्।[2]

परमियं सामान्यतः सकलनृपान्न तु विशेषतो विक्रमाङ्कमेवानुबध्नाति। न केवलमन्ते एव, आरम्भेऽप्यस्तीदृग्युक्तिः।[3] कवौ विक्रमविरुद्धेऽधःस्था तदुक्तिः कथं नाम संगच्छेत ?
तेन प्रीत्या विरचितमिदं काव्यमव्याजकान्तं, कर्णाटेन्दोर्जगति विदुषां कण्ठभूषात्वमेतु।[4]

तथा चोक्तं राजतरङ्गिणीप्रणेत्रा कविवरेण कल्हणेन :–
काश्मीरेभ्यो विनिर्यातं काले कलशभूपतेः। विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः॥
प्रसर्पतः करटिभिः कर्णाटकटकान्तरे। राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणम्॥
त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम्। बिल्हणो वञ्चनां मेने विभूतिं तावतीमपि॥[5]

एवञ्च हर्षराज्यसमये ( १०८९–११०१ ई० ) बिल्हणो विद्यापतिपदासीन एवासीदिति प्रमाणीक्रियते।

बिल्हणस्तावत्स्वदौर्मनस्यसमयं स्वयमेव वक्ति। परं तन्नालोचितवान्कोऽपीत्यनुमीयते। कविरेवमाह :–

नीलच्छत्रोन्मदगजघटापात्रमुत्रस्तचोला-
चालुक्येन्द्रादलभत कृती योऽत्र विद्यापतित्वम्।
अस्मिन्नासीत्तदनु निबिडाश्लेषहेवाकलीला-
वेल्लद्बाहुक्कणितवलया संततं राज्यलक्ष्मीः॥[6]

'तदनु' 'सन्ततम्' इतिपदद्वयाद्विद्यापतिपदलाभानन्तरं दौर्मनस्यं नाभूदिति सिद्ध्यति। प्रागुक्तपद्यं चौरपञ्चाशिकोद्धृतपद्ययुगलं च दौर्मनस्यस्यावश्यंभावित्वं विद्यापतिपदलाभप्राग्भावित्वं च साधयतः। चालुक्यविक्रमः सकृद्बिल्हणमवमानयन्नपि बिल्हणोक्त्यनुकूलं नूनं पुनः सममानयत्।

बिल्हणकाव्यरीतिर्नितान्तं सरसा प्रसादमयी मनोमोहिका चास्ति। काव्यरसः स्वतःसंवेद्य इति न वाचां गोचरः। वैदर्भरीतौ स्वकाव्यनिबन्धनाय कृतप्रतिज्ञः

---

1 Clas. lit. pp. 164-65. 2 विक. अष्टा. १०७. 3 विक. प्र. २६-२७. 4 विक. अष्टा. १०२. 5 राज. सप्त. ९३६-३८. 6 विक. अष्टा. १०१.

कविस्तां पूर्णतया निरुवोढ । वैदर्भीरीतिलक्षणं च–'माधुर्यव्यञ्जकैर्वर्णैं रचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते' इत्युदाहृतम् । स्वकाव्यनायकचरितस्य यथासाध्यं मनोज्ञीकृतये सर्वात्मनाचेष्टत महाकविः । ऐतिहासिकविषया आलङ्कारिकरीत्या तथा संनिवेशिता यथा तेऽनितरसाधारणतामेवोपयान्ति। काव्येऽस्मिन्नयमपरो विशेषो यदापाततस्तदानन्दमयं चमत्कारयुक्तं च प्रतीयते, तत्त्वावगत्यनन्तरं तु स एवानन्दश्चमत्कारश्च निःसीमतामानन्त्यं च भजते । 'कामदुघा हि महाकवीनां वाचो भवन्ति' इत्युक्तिर्बिल्हणेन नूनं चरितार्थीकृता ।

काव्येऽनुप्रासाः सन्त्यद्भुतविधया संनिवेशिताः। उपमोत्प्रेक्षादयोऽलङ्कारास्तु स्वभावत एव चमत्कारमया भवन्ति, परमत्र श्लेषप्रभृतयो दुरूहा अपि ते तथा सन्ति ग्रथिता यच्चित्तं विस्मयस्य परां कोटिमाटीकते ।

कविः खलु द्वेधा समाख्यातः – कारको भावुकश्च। तयोः कतरो महत्तर इति निर्णेतुं दुष्करम्। 'इण्डियन एन्टिक्वेरी'पत्रसंपादकस्तु बिल्हणरीतिमधिकृत्यैवमाह[1]:–'बिल्हणः श्लेषालङ्कारस्य परमोपासकः। अनुप्रासग्रहग्रस्ते तस्मिन्नालङ्कारिकाडम्बरपूर्णकवितापटुः कोऽपि महाकविस्तं कदाचिदेवातिशयीत । मध्यकालिकानेककविवत् सोऽपि दीर्घातिदीर्घसमासान्निबध्नाति, तासां चमत्कारमयप्रहेलिकानां ग्रथने च नितान्तमानन्दं विन्दति यासामुद्ग्रथनं काव्यामृतपानलालसेभ्योऽत्यर्थं रोचते ।'

चिन्त्यमेतदालोचनम् । यतो हि बिल्हणरीतिरत्र प्रतिपादितरीतेः सर्वथैव विपरीताऽस्ति। एवञ्च समालोचनमेतदवलोक्य सहृदयहृदयं खेदोपहासयोः संगमपात्रतां प्राप्नोति। परं श्रीमान् ए. बी. कीथमहोदयः स्वीये संस्कृतसाहित्येतिहासे बिल्हणकविरचनाशैलीं श्लाघापुरःसरमुचितरीत्या न्यरूपयत्।[2] बिल्हणः पुराणरीतिव्यत्तिक्रमं स्वयमेव श्लाघते। तद्ग्रथितश्लेषाः सन्ति नितान्तं सरलाः, प्रहेलिकानां तु काव्येऽत्यन्ताभाव एव, समासाः पुनरल्पा वैदर्भीरीतिसंगताश्च सन्ति ।

ईदृशालोचकानधिकृत्य कविः स्वयमेव वक्ति:—

रसध्वनेरध्वनि ये चरन्ति संक्रान्तवक्रोक्तिरहस्यमुद्राः ।
तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम् ॥[3]

विक्रमाङ्कदेवचरिते कालिदासविरचितरघुवंशस्य प्राचुर्यतः प्रतिबिम्बमवलोक्यते। डा० ब्युह्लरमहोदयः[4] श्रीमानोझामहोदयश्च[5] प्रकरणविशेषेषु साधर्म्यमुपदर्शतुः। श्रीमान् द्विवेदिमहोदयस्तावताप्यसंतुष्यन्, चन्द्रलेखास्वयंवरे इन्दुमतीस्वयंवरस्य विक्रममृगयाविलासे दशरथमृगयायाश्च साधर्म्यमुपवर्ण्य, कविमनुकरणशीलतादोषेन दूषणीकृत्य, भाव-

1 I. A. V p. 325. 2 H. San. Lit. p. 156. 3 विक्र. प्र. २२.
4 Buhler Intro. p. 40. 5 सो. प्रा. इ. प. ११३.

सामान्यं पदसामान्यं च प्रतिपाद्य तमुपजहास।[1] तदस्मभ्यं न रोचते। तथाहि :—

बिल्हणो महाकविरभूत्। तद्भावानां बिम्बं रघुवंशे उपलभ्यत इति सत्यमेतत्। परमेतेन तत्रानुकरणशीलतादोषारोपो नैव संगतः। न परं बिल्हणकालिदासयोरपि त्वन्येषां महाकवीनां वर्णनेषु साधर्म्यमुपलभ्यते। किं नाम कालिदासवर्णने नास्त्यन्यकविप्रतिबिम्बम्? अतुलकवेर्माघस्यापि काव्ये भारविकाव्यसाम्यमासाद्यते। लोकोत्तरः कविः श्रीहर्षः स्वकाव्ये बिल्हणकवेश्छायां व्यनक्ति। न ह्येतेन सिद्धयति यदेतेष्वेकोऽपरकवेर्भावानचूचुरत्।

इदमत्र वस्तुतत्त्वम् :–समकालं पृथक्स्थानेषु पृथग्विद्वद्भिश्चिन्तितेषु लिखितेषु वा विषयेषु तादात्म्यमुपलब्धुं शक्यते। न ह्यासीत्कालिदासस्यापि वर्णनं सर्वात्मना निराधारम्। वयं त्वेवं मन्यामहे :– बिल्हणो रघुवंशादिकाव्यानि साध्वध्यैष्टेति निर्विवादोऽर्थः। तत्काव्यानेकवस्तूनि बिल्हणस्मृतिपथाङ्कितानि भवेयुरिति न चित्रम्। काव्यरचनावसरे त एव भावा विचाराश्च निसर्गतो बिल्हणकाव्यविषयत्वं भजेयुरित्यपि नास्वाभाविकम्। अयं पदसमुदायो भावसमूहो वा कविना केनचनास्पृष्टपूर्वो नवेति चेत्कविश्चिन्तयेत्, नहि स काव्यनिर्माणे समर्थः स्यात्। तस्याविरता विचारधारा ईदृशविषयान्तरचिन्तनं सर्वथैवाशक्यं विदधाति। प्रबलकाव्यरचनाप्रवाहपतितेऽवाञ्छत्यपि कवौ, अजानत्येव तस्मिन्, बहवो विषयास्त एव निबद्धाः स्युर्ये पूर्वकविलिखितचराः स्युः। मानसशास्त्रेणैतत्सर्वथा युक्तं स्वाभाविकञ्च प्रमाणीक्रियते।

बिल्हणकविः काव्यार्थचौर्यं स्वयमेव निन्दन् स्वं तदपराधाविषयं नूनमेव साधयति। साम्यमुपदर्शयन्नपि द्विवेदिमहोदयो बिल्हणकवितां क्वचित्कालिदासाधिकचमत्कारमयीं स्वीकरोत्येव।

केवलैतिहासिकरूपेण क्वचिद्दोषस्पृष्टेऽपि विक्रमाङ्कदेवचरिते प्रतिपादिताः प्रायः सकला अपि विषयाः पुरातनशिलालेखादिभिः प्रमाणीक्रियन्ते। तथाप्यद्य यावत्केचन विषयाः सन्त्यप्रकाशिताः।

अथेदमारभ्यते सारांशप्रतिपादनसहितं विक्रमचरितालोचनम्। कविरेवमाह :–

एकदा विधातरि प्रत्यूषसन्ध्यां वन्दमाने पुरन्दरस्तं प्राप्य क्षितौ विद्यमानं धर्मविपर्ययं निवेद्य तदपाकरणार्थं लोककल्याणार्थञ्चातुलपराक्रमस्य कस्यचिन्महात्मनः प्रसूतेरनिवार्यतां प्रार्थयामास। पुरन्दरप्रार्थनां समाकर्ण्य विधाता सन्ध्याम्भःपूरितं स्वचुलुकमवलोकयामास।[2]

तस्मिन् चुलुकमवलोकयत्येव ततस्त्रैलोक्यपरिरक्षणपटुर्लोकोत्तरपराक्रमादिगुण-

---

1 चर्चा. प. ६६–७४. 2 विक्र. प्र. ३१–४६.

विशिष्टोऽद्भुतो महापुरुषः प्रादुरासीद्यस्मादेवोदियाय चालुक्यवंशः । हारीतो मानव्यश्च तद्वंशमूलपुरुषौ बभूवतुः । तद्वंशजा भूपतयोऽयोध्यां नगरीमादिराजधानीं निर्ममिरे । तेषां प्रबलविजयलालसाः केचिन्नृपा दिग्विजयप्रसङ्गाद्दक्षिणस्यां दिशि गत्वा तत्रैव न्यवसन् । अतुलपराक्रमान्वितास्ते नैकदेशान्विजित्य स्वसाम्राज्यं व्यदधुः ।[1]

अस्मिन्नेव वंशे क्रमात्तैलपो नाम (९७३-९९७ ई०) तद्वंशतिलकों नृपो बभूव । स हि राष्ट्रकूटान्विजित्य चालुक्यराज्यलक्ष्मीं पुनरुन्निनाय (क) ।[2]

तैलपानन्तरं सत्याश्रयः ( ९९७–१००८ ई० ) शशास ।[3] शूराणामग्रणीः सकल-कलाकोविदः स नितान्तं प्रतापशाली बभूव । ततो जयसिंहः ( १०१५–४२ ई० ) राज्यमकरोत् । लोकोत्तरशक्तिशाली विभूतिभूषितो वीरवरः स पुरन्दरस्वहस्तन्यस्तां पारिजातमालामलभत (ख) ।[4]

(क) तैलपो मालवानाक्रम्य मुञ्जराजं बन्दीचकार । कविरिमं वृत्तान्तं नैव न्यबध्नात् । तैलपो मुञ्जं बन्दीकृत्य जघानेति पुरातनसाधनैः प्रमाणीक्रियते ।[5] भोजराजश्च तद्वैरं प्रतिचकार । अत्र डा० ब्युह्लरमहोदयो यदुल्लिखति न तद्विदुषां संमतम् । भोजः प्रत्यकरोदिति निर्विवादोऽर्थः । परं तत्प्रतीकारभाजनं नासीत्तैलपोऽपि तु तदुत्तराधिकारी विक्रमादित्यो जयसिंहो ( द्वितीयः ) वा स्यात् । विक्रमादित्यजयसिंहयोः कतरोऽभवद्भोजप्रतीकारभाजनमस्मिन्वस्तुनि सन्दिग्धेऽपि नासीत्स तैलप इति निर्णयः ।[6]

(ख) पारिजातमालालाभो जयसिंहस्य रणक्षेत्रमृत्युं सूचयतीति डा० ब्युह्लरमहोदयः।[7] श्रीमान् डा० रामकृष्ण गो० भाण्डारकरमहोदयः पुनः 'मुञ्जवैरशोधं भोजो विक्रमादित्यादगृह्णात्, स एव च युद्धे वीरगतिं लेभे' इति प्रत्यपादयत् ।[8] श्रीमान् वेंकटराम ऐयर महोदयः श्रीमान् एच० सी० रायमहोदयश्चापीममर्थं सम्मन्वाते।[9] श्रीमान् म० म० पं० ओझामहोदयस्तु जयसिंहस्यैव भोजकृतप्रतीकारपात्रत्वं वक्ति ।[10] श्रीमान् डी० सी० गाङ्गुलीमहोदयोऽपि तन्मार्गमवलम्बते ।[11] परं तेन तत्प्रमाणतयाऽधःस्थं वचनमुपन्यस्तम् :- 'गुर्जरराजभीम (१०२०–१०६४ ई०)–राज्ये भोजश्चालुक्यानाचक्राम। तदात्वे विक्रमादित्यो नासीद्भूतले इति भोजप्रबन्ध-प्रबन्धचिन्तामणिग्रन्थाभ्यां प्रमाणीभवति' इति । तत्तु न क्षोदक्षमम् । तथाहि :—( सावशेषा )

1 विक्र. प्र. ४७–६७. सो. प्रा. इ. प. ३–१४. Life pp. 1–4. 2 विक्र. प्र. ६८–७३. H. I. S. I. p. 52. 3 विक्र. प्र. ७४–७८. H. I. S. I. p. 55. 4 विक्र. प्र. ७९–८६. 5 Life p. 8. H. P. D. p. 89. D. H. N. I. pp. 857–58. 6 H. P. D. pp. 89–91. 7 Buhler Intro. p. 27. 8 E. H. D. p. 61. 9 I. A. XLVIII p. 118 fn. 54. D. H. N. I. p. 867. 10 सो. प्रा. इ. प. ८७ प्रभृति. 11 H. P. D. p. 91.

जयसिंहे दिवमुपयाते तत्तनयस्त्रैलोक्यमल्लापरनामधेय आहवमल्लो ( १०४२-१०६८ ई० ) राज्यसिंहासनमध्यतिष्ठत् (क) ।[1]

सकलगुणशाली बहुलप्रतापमाली दानशीलोऽयं भूपालश्चोलानसकृदजैषीत्,[2] मालवानाक्रम्य भोजराजं तद्राजधानीतो धारातोऽदिद्रवत्,[3] डाहलाधीशं कर्णं जिगाय, द्रविडप्रकाण्डं वीररसस्याभाजनं चक्रे, चोलराजधानीं काञ्चीं च विलुण्ठ्य तदधिपं वनेषु भ्रामयांबभूव (ख) ।[4]

स हि कल्याणनगरीं प्रासादादिमण्डितां विधाय तां स्वराजधानीत्वेनाकल्पयत् (ग) ।[5]

---

— नास्त्येव तावत्प्रबन्धग्रन्थानां सर्वात्मना प्रामाणिकत्वम् । किञ्च भोजस्य प्राथमिको लेखः १०२० ई० वर्षीयो जयसिंहस्य च १०१८ ई० वर्षीय उपलभ्यते । भोजो राज्यसिंहासनप्राप्त्यनुपदमेव चालुक्यनृपं प्रतिचकारेति सर्वसंमतोऽर्थः । भोजराज्यारम्भस्य विक्रमादित्यमृत्योरस्ति संनिहितत्वम् । जयसिंहराज्यसमाप्तेस्तु ( १०४२ ई० ) स कालोऽत्यर्थं विप्रकृष्टः । अचिरं शासितवतो विक्रमादित्यस्य नोपलभ्यते विशेषवृत्तम् । एतच्च तस्य भोजप्रतिहिंसापात्रत्वं निःसंशयं प्रमाणयति ।

सत्याश्रयजयसिंहयोरन्तराले ( सत्याश्रयस्य भ्रातृव्यः, दशवर्मणः ( यशोवर्मणः ) पुत्रः ) जयसिंहाग्रजो विक्रमादित्यः १००८ ई० वर्षात् १०१४ ई० वर्षं यावद्राज्यमकरोत् । तद्भ्राता अय्यणोऽपि ( द्वितीयः ) ( १०१४–१०१५ ई० ) नाचिराय शशास ।[6] कविरेतौ न निरदिशत् ।

(क) एतस्य यथार्थं नाम सोमेश्वर इत्यभवत् । डा० ब्युह्लरमहोदयोऽस्य राज्यकालम् १०४०-६९ ई० इत्युदलिखत् ।

(ख) काव्येऽत्र सर्वत्र द्रविडचोलशब्दावभिन्नार्थबोधकौ स्तः । एवमेव कुन्तलकर्णाटशब्दौ समार्थौ चालुक्यक्षितिं सूचयतः । आहवमल्लश्चोलैरभीक्ष्णं युयुधे इति बिल्हणोक्तिभिः प्रमाणान्तरैश्चावगम्यते ।[7] डा० ब्युह्लरमहोदयो डाहलदेशमधिकृत्य नाधिकमुल्लिलेख । डाहलदेशश्चेदिदेशादभिन्नस्तदधीशः कर्णश्च गाङ्गेयदेवतनयोऽतुलपराक्रमादिगुणभूमिरासीदिति लेखैः प्रमाणितं भवति ।[8]

(ग) अत्र डा० ब्युह्लरमहोदयः–'चकार' इति पदं निर्माणार्थकं सदपि न तथा

---

1 विक्र. प्र. ८७. H. I. S. I. p. 69. 2 A. I. pp. 46–47. H. I. S. I. p. 335. 3 H. P. D. pp. 92, 94. 4 विक्र. प्र. ८८–११८. Bom. Gaz. pp. 214–15, 441. 5 विक्र. द्वि० १–२५. Bom. Gaz. pp. 215, 420. 6 H. I. S. I. p. 58. सो. प्रा. इ. प. ८३ टिप्पणी. 7 H. I. S. I. pp. 72–81. 8 D. H. N. I. pp. 777–786.

अधिगतसकलवैभवोऽपि क्षितीशः पुत्राभावेनात्यन्तं संतप्तचित्तोऽभवत् । तत्प्राप्तये उपायान्तरमपश्यन् तपोविधानाय कृतनिश्चयः स राज्यचिन्तां मन्त्रिषु विनिवेश्य स्वदेवीमात्रसहायो भगवन्तं भूतपतिं शङ्करमाराधयामास (क)।[1]

नृपस्य कठोरव्रतचर्यया प्रसन्नमानसः शङ्करः तस्मै पुत्रत्रयं मध्यमस्य च लोकोत्तरगुणमण्डितत्वं प्रसादीकृतवान् । अमृतायमानामिमां वाचं निशम्य नितान्तमानन्दं विन्दमानो नृपः पारणाविधिं समाप्य विप्रेभ्यो धनं च दत्त्वा भूयोऽपि राज्यकर्माण्यन्वतिष्ठत् ।[2]

शुभे मुहूर्ते राज्ञी पुत्रमेकमसोष्ट, यो हि सोमेश्वर इत्यभिधानमाससाद । ततो दिनेषु गच्छत्सु राज्ञी भूयोऽपि गर्भिणी बभूव । तदानीं दिव्यदोहदैश्चिह्नान्तरैश्च भाविकुमारस्यालौकिकवीर्यादिगुणान्सूचयन्ती नितान्तं नृपनयनानन्ददायिन्यासीत् । अद्भुतधाम्नि लग्ने देवी पुत्ररत्नमजीजनत् । तस्मिन्नवसरे प्रकृतयश्चेतनाचेतनाः सकला अपि आनन्दातिरेकमभजन्त । देवा अपि प्रसूनवर्षणादिभिः स्वानन्दमसूचयन् । स्वीयैरद्भुतैर्गुणैः स बालो विक्रमादित्य इत्याख्यामभ्यगच्छत् । बाललीलास्वेव स्वीयाद्भुतशौर्यादिलक्षणानि दर्शयन्नल्पेनैव कालेन शस्त्रास्त्रोभयविद्यासु परं प्रावीण्यमाप । विक्रमात् परं तृतीयोऽपि पुत्रोऽजायत, यो हि जयसिंह इति नाम्ना ख्यातिमाससाद (ख)।[3]

---

बोद्धव्यम् । यस्मादिदं पुरं प्रागेवावर्त्तत' इत्याह ।[4] तत्तु न संगतमिति डा० रामकृष्ण गो० भाण्डारकरमहोदयो जे० एफ्० फ्लीटमहोदयश्च सयुक्ति प्रत्यपादयताम् ।[5] येषु लेखेषु कल्याणनगरसत्त्वं डा० ब्युह्लरमहोदयैरनुमितं ( 'कार्तिकेयपरिरक्षणप्राप्तकल्याणपरंपरेति प्रवर्द्धमानपरमकल्याणविजयोद्यमे' इति च ) तत्रत्येषु पदेषु विद्यमानं कल्याणपदं मङ्गलार्थं शुभार्थमेवाभिधत्ते नतु नगरार्थम् । कल्याणनगरस्य सर्वतः प्रथमं निर्देशः १०५३ ई० वत्सरे ( सोमेश्वरराज्यसमये ) एवोपलभ्यते ।

(क) चिन्त्यमेतद्बिल्हणवचनम् । १०४२ ई० वत्सरसन्निधौ स राज्यमासादयामास, ३०, मार्च १०६८ ई० दिवसे च पञ्चत्वमञ्चति स्मेति पञ्चविंशतिवर्षाणि शशास । बिल्हणोक्तौ सत्यत्वेनाभ्युपगतायां तद्देहावसानसमये त्रिभिरपि तत्तनयैरल्पवयस्कैरेव भाव्यम् । परं चोलदेशराजराजाधिराजस्य ( प्रथमस्य ) १०४६ ई० वर्षीयलेखेनेदं प्रमाणीक्रियते यदस्य ततः पूर्वं सोमेश्वरेण युद्धमभूत्, यत्र हि विक्रमादित्योऽपि सहाय आसीत् । आहवमल्लस्य तृतीयः पुत्रो जयसिंहोऽपि १०६६ ई० वर्षात्प्रागेव युद्धायालमभवदिति सिद्ध्यति । एवञ्चाहवमल्लराज्यलाभात्पूर्वमेव सोमेश्वरविक्रमादित्ययोर्जन्माभवदिति सिद्धम् ।[6]

(ख) अथ यावत्प्रकाशितेषु लेखेष्वाहवमल्लस्य तृतीयः पुत्रो न निर्दिष्ट इति डा०

---

1 विक्र. द्वि. २६–४३. 2 विक्र. द्वि. ४४–५६. 3 विक्र. द्वि. ५७ – तृ० २५. 4 Buhler Intro. p. 28 fn. 5 Bom. Gaz. pp. 215, 335 note 1, 420, 427 note 3, 428 note. 6 सो. प्रा. इ. प. ९२–९३ टिप्पणी.

विक्रमे विक्रमाक्रान्तवैरिवृन्दे सकलकलाकोविदे च जाते तत्तातस्तस्मै यौवराज्यं दित्सति स्म। स तु ज्येष्ठभ्रातरमतिक्रम्य तत्पदं स्वीकर्तुं न्यषेधत्। विविधाभिरुक्तिभिर्युक्तिभिश्चाहवमल्लेन कृतेऽपि नितान्तमाग्रहे नामन्यत यदा तु विक्रमस्तदा सोमेश्वर एवाभूद् युवराजः। किन्तु राज्युवराजयोरुभयोरपि भारं विक्रम एवावहत्। ज्येष्ठे प्रतिपत्तिपात्रत्वं प्रापितेऽपि राज्यलक्ष्मीर्विक्रममेवान्वमन्यत। सोमेश्वरस्तु नामत एव युवराजो बभूव (क)।[1]

जनकानुज्ञातो विक्रमो बहून्महाहवानजयत्। स हि चोलानभीक्ष्णं विजिग्ये, तद्राजधानीं काञ्चीञ्च विलुलुण्ठ। मालवाधीशः परिभ्रष्टनिजराज्यपुनःप्राप्तये तच्छरणं ययौ। विक्रमस्तद्रिपून्विजित्य तस्मै निष्कण्टकं राज्यमार्पयत्।[2] किञ्च स गौडान् कामरूपांश्च व्यजयत्।[3]

एकदा विक्रमो दिग्विजयार्थं प्रतस्थे। तद्गजा मलयं चन्दनवृक्षरहितमजनयन्। स केरलेशं यममन्दिरातिथिं चकार। सिंहलनृपो भयविह्वलमानसस्तच्छरणमयासीत्। स गाङ्गकुण्डं नगरं विजित्य, चोलनरेशं मानहीनं विधाय चक्रकोटं नगरं च जिगाय (ख)।[4]

---

ब्युह्लरमहोदयः प्रत्यपादयत्।[5] परमद्यत्वे न परं तृतीयपुत्रस्यापि तु विष्णुवर्द्धनविजयादित्यनाम्नश्चतुर्थपुत्रस्याप्यस्तित्वं प्रमाणीभवति।[6]

(क) बिल्हणः सर्वत्र विक्रममेव विशेषतो देवदयादृष्टिभाजनं योग्यतरं च प्रतिपादयन् तस्य निर्दोषत्वमसाधयत्। सत्यमेव कविर्विक्रमाङ्कचरितस्य यथासाध्यमत्यर्थं सर्वात्मनोत्कर्षं साधयितुमचेष्टत। एतेन डा० ब्युह्लरमहोदयैरन्यैश्चेतिहासकोविदैः कविर्नितान्तमुपहासास्पदत्वं नीतः।[7]

(ख) विक्रमो राज्यासादनसमयात्प्रागेव बहुवत्सराणामाहवमल्लरिपुभिरभीक्ष्णं युयुधे।[8] कविस्तद्युद्धानि विच्छित्तिपुरःसरं तृतीयसर्गस्यान्ते सामान्यतश्चतुर्थसर्गारम्भे च विशेषतो दिग्विजयव्याजेनावर्णयत्। युद्धानीमानि नैककालमभवन्निति प्रामाणिकं तत्त्वम्। आपाततस्तु तेषां क्रमशोऽव्यवधानेन च भावित्वं प्रतीयते। कविवर्णितो विक्रमस्य दिग्विजयो न क्षोदक्षमः। ( सावशेषा )

---

1 विक्र. तृ. २६–५९ 2 H P.D. pp. 123–24. D.H. N. I. p. 873ff. 3 विक्र. तृ. ६०–७७. D. H. N. I. pp. 203, 204, 249, 250, 331, 356. 4 विक्र. चतु. १–३०. H. I. S. I. p. 86. 5 Buhler Intro. p. 30 fn. 6 H. I. S. I. pp. 78, 335. A. I. pp. 114, 120, 138. 7 Buhler Intro. pp. 31 fn. 33 fn. 37–38 fn. I. A. V. p. 335. सो. प्रा. इ. पृ. १०६. 8 H. I. S. I. pp. 70–71. A. I. p. 48.

—डा० ब्युह्लरमहोदयोऽत्र कवितात्पर्यमनवगच्छन्, काव्यार्थं वैपरीत्येन योजयन् कविं दूषयति ।[1] तथा च तस्योक्तिः—'एतेषां युद्धानां कालानुसारं क्रमनिर्णयो दुष्करः । परं तत्कृतोऽन्तिमजयो दक्षिणस्यामभूदिति निश्चितम्' इति । स किलादौ 'विक्रमादित्यः आहवमल्लानुज्ञया विजययात्रामारभत' इति उक्त्वा तृतीयचतुर्थसर्गयोरुभयोरपि सकलयुद्धानि सहैव परिकलयाञ्चकार । तत एव च स कविं दूषयति । किञ्च स कविप्रतिपादितक्रमं विपर्यासयन् विषयसाङ्कर्यमापादयति ।

रायबहादुर श्रीमान् हीरालालमहोदयो डा० ब्युह्लरमहोदयीयमेतदसंगतं मतमंशतो निराचकार । स हि वक्ति :—[2]'युद्धान्तराणां विषये कालक्रमस्य निर्णेतुमशक्यत्वेऽपि गाङ्गकुण्ड – वेंगि–चक्रकोटानां विजयोऽनुक्रममेवाभूदिति संभाव्यते' ।

गाङ्गकुण्डं चोलसाम्राज्यप्रधाननगरेष्वन्यतममासीत् । मद्रासप्रदेशे ट्रिचिनापल्ली–(District)–भागे वडियरपलियम (Taluka)–विभागेऽस्य भग्नावशेषा अद्याप्येतद्वैभवं सूचयन्ति । राजेन्द्रचोलोऽतिपराक्रमप्रतापशाली नृपतिरासीत् । गङ्गां यावत्कृतविजयत्वात्स 'गंगैकोण्ड' इति विरुदं दधार । गाङ्गकुण्डपुरं तेनैव निरमायिषत । अद्यत्वेऽपि तद् गंगकुण्ड-शोलपुरमित्युच्यते ।[3] डा० ब्युह्लरमहोदयोऽस्य निरूपणं विशदतया कर्तुं नालमभवत् ।

श्रीमान् हीरालालमहोदयो बस्तरराज्यगतमद्यतनं 'चित्रकूट'नामकं स्थानं पुरातनचक्रकोटेनाभेदयति । अनेके दाक्षिणात्या नृपतयः काले काले राज्यमेतमाचक्रमुः । चक्रकोटसन्निधावेव वैराग्रामस्थानमासीत् । तत्र च हीरकखनिरभूत् । तामिलभाषा-लेखेषु चक्रकोटः 'शक्करकोट्टम्' इति निर्दिश्यते, तेनैव च साकं सर्वत्र वज्रदेशः (वयिरागरम्–अद्यत्वे वैरागढ इति ख्यातः) उल्लिख्यते । राजेन्द्रचोलो वैरागरम्-स्थानादनेकदन्तिनिवहान् विलुण्ठ्यानैषीत् । एतत्प्रदेशे गजाधिक्यम् 'आइने अकबरी'–ग्रन्थेऽप्युपलभ्यते । इदमत्रावधेयम् :– बिल्हणेनायं विजयो विशेषविच्छित्यैव निरूप्यते :–

आक्रान्तरिपुचक्रेण चक्रकोटपतेः परम् ।
लिखिताश्चित्रशालासु तेनामुच्यन्त दन्तिनः ॥[4]

श्रीहीरालालमहोदयीयैतद्गवेषणायाः प्राक् सर्वेऽपीतिहासलेखकाश्चक्रकोटं धारा-सन्निहितमालवदुर्गमेवान्वमन्यन्त । [5]इदमत्र तत्त्वम्–चक्रकोटे धारावर्षो नाम नृपतिर्बभूव । इतिहासविदो 'राजकेसरिवर्मा (कुलोत्तुङ्गचोलः) धारानृपतिं चक्रकोटसन्निधावजयद्' इति व्याचचक्षिरे । वस्तुतस्तु 'राजकेसरिवर्मा राजानं धारावर्षं चक्रकोटसन्निधावजयद्'इत्यर्थः ।

---

1 Buhler Intro. p. 31 and fn. 2 Epi Ind. IX pp. 178–79, X pp. 25–27. 3 A. I. pp. 49, 187. 4 विक्र. चतु. ३०. 5 A. I, p. 131, Bom. Gaz. pp. 215, 442. सो. प्रा. इ. प. ९४ टिप्पणी ।

मालवेशसाहाय्यदानमधिकृत्य श्रीमान् ओझामहोदयस्त्वेवमाह :–[1] 'विक्रमादित्यो यस्मै मालवेशाय साहाय्यमददात् स परमारवंशोद्भवो जयसिंहः स्यात्, यो हि भोजराजादनन्तरं धारासिंहासनमधिरुरोह । किन्तु तदात्वे तद्राज्यं शत्रुसेनापरिवेष्टितमासीत्, यां निराकर्तुं स नासीदलम् । ततश्च तद्बान्धव उदयादित्यस्तद्राज्यमपाहरत् । एवञ्च जयसिंहः स्वराज्यपुनःप्राप्तिलालसया कल्याणमगादिति संभाव्यते । किन्तु स उदयादित्यं निरस्य मालवराज्यपुनरासादनसमर्थोऽभवदिति नोपलभ्यते । यतो हि जयसिंहस्य ताम्रशासनम् १०५५ ई० वत्सरीयमुपलभ्यते, १०५९ ई० वत्सरे चोदयादित्यः शशासेति उदयपुरस्य ( ग्वालियर ) शिलालेखादधिगम्यते । एवञ्च प्रागुक्तवत्सरद्वयाभ्यन्तरे कदाचन जयसिंहः साहाय्यमयाचत' इति ।

चिन्त्यमेतत् । श्रीमतो डी० सी० गाङ्गुलीमहोदयस्य 'परमारवंशेतिहासः' विषयमेतं विशदयन् श्रीमत ओझामहोदयस्य मतासंगतिं बिल्हणोक्तियाथार्थ्यं च प्रमाणीकरोति ।[2] तथा च तत्रेदमस्ति निरूपितम् :—

कलचुरिकर्ण–चालुक्यभीम ( प्रथम )–समवेतबले भोजदेवबले च युध्यमाने एव भोजोऽसाध्यरोगग्रस्तः सन् पञ्चत्वमञ्चति स्म । तदा तदुत्तराधिकारी जयसिंहः आहवमल्लं साहाय्यमयाचत । आहवमल्लो विक्रमाय कार्येऽस्मिन्न्ययुङ्क्त । विक्रमसाहाय्येन स भूयोऽपि निजराज्यमाससाद । स किलानेकवर्षाणि शास्ति स्म, परं तस्य राज्यान्तकालो न निश्चीयते ।

सोमेश्वरः ( द्वितीयः ) १०६८ ई० वर्षे राज्यमलभत । स खलु भीमोत्तराधिकारिणा कर्णेन ( १०६३-१०९४ ई० ) संगत्य जयसिंहराजधानीमाचक्राम । तस्मिंश्च तुमुले युद्धे जयसिंहः प्राणानत्याक्षीत् । तस्मिन्नुपरते तदरातिषु च नाचिराय धारामधिकृतवत्स्वपि जयसिंहक्रमानुयायिना उदयादित्येन शाकंभरीपतिचाहमानवंशोद्भवदुर्लभ ( तृतीय ) –नृपतिसाहाय्येन निरस्तास्ते शत्रवः, धारा च भूयोऽपि परमारवंशजैरध्यकारि ।[3]

श्रीमता ओझामहोदयेन यः शिलालेखः प्रमाणत्वेनोपन्यस्तः स वस्तुतः १५१३ ई० वर्षीयो नितान्तं खण्डितश्चास्ति । उदयादित्यः १०५९ ई० वत्सरे उदयपुरमन्दिरं निर्ममे इति तत्रास्ति नूनं लिखितम्, परं स तदा साधारणनृपतिरूपेणोदयपुराच्छासनमकार्षीन्न पुनर्धाराधीशतयेति निश्चितम् ।[4] ( सावशेषा )

---

1 सो. प्रा. इ. प. ९३, ९४ टिप्पणी च  2 H.P.D. pp. 123–124. D. H. N. I. p. 873 ff.  3 H. P. D. pp. 127–136.  4 H. P. D. p. 130 note 2.

इत्थं साधितसर्वभूमिपालो विक्रमः प्रत्यावर्त्तमानो मार्ग एव नानाविधदुर्निमित्तानि पश्यन्सहसैव नितान्तमुद्विवेज । कृष्णातटकृतावस्थानोऽमङ्गलशान्तये पुण्यकर्माण्यन्वतिष्ठत् । तदैव कल्याणात्समागतः कश्चिद्दूतो विक्रममेतामकल्याणवार्त्तामाचचक्षे :— 'विजितसकलनृपं भवद्विजयमाकर्ण्याहवमल्लो भृशमानन्दितोऽभूत् । परमकाण्डे एव दाहज्वराक्रान्तो यदा तु स्वरोगदूरीकरणसाधनं किमपि नापश्यत्तदा दक्षिणापथजाह्नवीं तुङ्गभद्रामासाद्य तत्र जलसमाधिमगृह्णात्' इति ।[1]

निजजनकनिधनवृत्तान्तं निशम्य विक्रमो नितान्तं दूयमानमानसोऽतप्यत । पितुरौर्ध्वदेहिकीं क्रियां संपाद्य अग्रजसान्त्वनाय कल्याणं प्रतस्थे ।

पुरः समागतेनाग्रजेन संमानितः पुरीं प्रविश्य चिरमखिद्यत । तदनु तावुभौ चिराय स्नेहवृत्त्या दिवसानत्यवाहयताम् । गुणैर्गरिष्ठोऽपि विक्रमो ज्येष्ठं पितृतुल्यममंस्त । दिग्विजयोपार्जितं प्राज्यं वस्तुजातमपि स सोमेश्वरायोपहारीचकार ।[2]

परं कियताऽपि कालेन दैवदुर्विपाकात्सोमेश्वरोऽत्यर्थं दुर्विनीतोऽन्यायपरायणश्च भूत्वा चालुक्यराज्यलक्ष्मीं निजदुर्गुणैरत्यन्तं कलङ्कमयीं व्यदधात् ।[3]

कल्याणवासान्निजभ्रातृदुश्चरितैरयशसोऽपमानस्य च भाजनं नूनं स्यामिति, भ्रात्रा च दुर्नीतिपरित्यागो दुष्कर इति च यदा विक्रमो व्यलोकयत्तदा स्वानुजं जयसिंहमितरांश्च निजानुयायिन आदाय कल्याणान्निरगात् । एतदविषह्य सोमेश्वरोऽस्य पृष्ठतः पुष्कलं बलं प्राहिणोत् । स्वाग्रजबलेन साकं योद्धुमनिच्छन्नपि गत्यन्तराभावाद् विक्रमो युद्धाय सन्नद्धोऽभवत् । क्षणादेव च सोमदेवसैन्यं विध्वस्तं व्यदधात् । असकृत्सैन्यं प्रेषयन्नपि सोमदेवो विफलमनोरथो बभूव । विजयलक्ष्मीश्च विक्रममेव वव्रे ।[4]

भ्रातृदुश्चरितचिन्तनान्मन्युपङ्ककलुषमानसो विक्रमः तुङ्गभद्रामयासीत् । तत्तटकृतावस्थितिश्च चोलसंमुखं युद्धाग्रहमगाहत । परं कञ्चित्कालं वनवासमण्डलमेवाध्युवास ।[5]

---

—प्राच्यचालुक्यवंशजे राजराजे (वेंगिदेशाधिपतौ) १०६२ ई० वर्षे दिवमुपगते विक्रमस्तद्राज्यमभिययौ । तदा जयसिंहो धाराधीशतया विक्रमपक्षमवालम्बत ।[6] सोमेश्वरश्च ( द्वितीयः ) गुर्जरराजकर्णेन संगत्य जयसिंहमाक्रान्तवान् ।[7] कर्णश्च प्रायशः १०६३ ई० वत्सरे राज्यसिंहासनमारुरोह । प्रमाणैरमीभिरिदं निःसंशयं प्रमाणीभवति यज्जयसिंहः १०७० ई० वर्षं यावच्छास्ति स्म, उदयादित्यस्य च १०५९ ई० वत्सरे धाराधीशत्वं सर्वथैवासंभाव्यमिति ।

---

1 विक्र. चतु. ३१–६८. 2 विक्र. चतु. ६९–९६. 3 विक्र. चतु. ९७–११३ 4 विक्र. चतु. ११४–पञ्च. ९. 5 विक्र. पञ्च. १०–२३. 6 H. P. D. pp. 125–127. I. H. Q. XIII pp. 87–88. 7 H. P. D. pp. 127–128.

विक्रमे युद्धाय प्रयाते तद्बलघोररवं निशम्य मलयदेशभूभुजो विक्रमस्य पूर्वदर्शितपराक्रममस्मरन् । कोङ्कणदेशाधिपो जयकेशी विनयावनतः सन् तस्मै अनल्पं धनराशिमुपाजहार (क) ।[1]

आलुपनृपतिस्तच्छरणमुपगम्य विभूतिभूषितो बभूव । विक्रमपराक्रमप्रतापादि विलोक्य केरलदेशाङ्गना भृशमदूयन्त ।[2]

ततो विक्रमश्चोलमभिषेणयति स्म । चोलस्तु विक्रमेण स्वस्य योद्धुमशक्यत्वमवधार्य सन्धिप्रार्थनायै स्वदूतं विक्रमसभां प्रेषयामास । विक्रमस्तं सन्धिं स्वीकृत्य चोलनरेशसन्ध्यनुसारं तुङ्गभद्रां प्रत्याययौ । चोलस्तत्तटं प्राप्य स्वकन्यां विक्रमाय अददात् । चोलनृपतौ काञ्चीं प्रत्यावृत्तेऽचिरादेव विक्रमश्चोलनिधनं तद्राज्यविप्लवं

(क अत्रेत्थमाह डा० ब्युह्लरमहोदयः–[3]'अत्र निर्दिष्टो जयकेशी कादम्बवंशोद्भवो जयकेशी ( द्वितीयः ) आसीद्, यो हि गोपकपुर ( गोवा )–राज्यं शास्ति स्म । तस्य पर्माडिविक्रमादित्येन मैत्रीसम्बन्धः कादम्बलेखेषु निर्दिश्यते । जयकेशी ( द्वितीयः ) विक्रमपुत्रीं मैलालदेवीमुदवहत् । तस्य ( जयकेशिनः ) पुत्रीं मैणलदेवीमणहिल्लपट्टननृपतिः कर्ण उपयेमे । तयोरेव तनयो जयसिंहसिद्धराजो बभूव' इति ।

चिन्त्यमिदम् । कविरत्र ( पद्य० २५ ) यं जयकेशिनं निर्दिशति स जयकेशी ( प्रथमः ) आसीत् । सामन्तषष्ठदेवस्य पुत्रोऽयमादौ सोमेश्वरस्याहवमल्लस्य सामन्तनृपतिरासीत्, कालान्तरे तु विक्रमस्य प्रधानसहायको बभूव । स किल गोपकपट्टनं ( गोवा ) स्वराजधानीं कृत्वा, चालुक्यविक्रमादित्यचोलभूपालौ काञ्च्यां मित्रे व्यदधादिति कादम्बलेखैः सिद्धयति ।[4] अस्य राज्यकालः १०५० ई० वत्सरात् १०८० ई० यावत् सिद्धयति । यत्तु डा० ब्युह्लरमहोदयेन जयकेशि ( द्वितीय )–पुत्र्या मैणलदेव्याः कर्णविवाहो निर्दिष्टस्तदपि चिन्त्यम् । यतः कर्णराज्यकालः १०६३–६४ ई० तः १०९३–९४ ई० वर्षं यावदस्ति निर्णीतः,[5] जयकेशी ( द्वितीयः ) च ११०४ ई० वत्सरसंनिधौ राज्यसिंहासनमध्यतिष्ठदिति निश्चितम् ।

अयमेव जयकेशी ( प्रथमः ) विक्रमाय स्वकन्यामार्पयत् । परं कविरिमं वृत्तान्तं न निरदिशत् । विक्रमादित्यतनयाया मैलालदेव्या उद्वोढा जयकेशी द्वितीय एवासीत् । अत्र विद्यन्ते बहूनि प्रमाणानि ।[6]

1 विक्र. पद्य २४–२५. 2 विक्र. पद्य. २६–२७. 3 Buhler Intro, p. 34 note 3. 4 सो. प्रा. इ. प. १०६ टिप्पणी. Bom. Gaz. pp. 439, 444, 565. 5 D. H. N. I. p. 963. 6 Bom. Gaz. pp. 452, 456, 458 note 2. सो. प्रा. इ. प. ११९ टिप्पणी.

चाश्रौषीत्। ततश्च स्वश्यालकं चोलसिंहासनेऽभिषेचयितुं काञ्चीमयासीत्। काञ्चीमधिगत्य तद्रिपून् विनाश्य गाङ्गकुण्डमगच्छत्। तत्रापि विजयमासाद्य स्वश्यालकं राज्यसिंहासनासीनमकरोत्। मासमात्रं गाङ्गकुण्डे कृतवसतिः पुनरपि तुङ्गभद्रां समाजगाम (क)।[1]

विक्रमस्यायमुद्यमो विफलीबभूव। यतोऽचिरेणैव प्रवृत्ते नवराज्यविप्लवे विक्रमश्यालकश्चोलसूनुः पञ्चत्वमाप, वेङ्गिनाथो राजिगश्च काञ्चीसिंहासनमात्मसाच्चकारेति वृत्तं विक्रमोऽश्रृणोत् (ख)।[2]

(क) डा० ब्युह्लरमहोदयो विक्रमस्य गाङ्गकुण्डात्प्रयाणं काञ्च्यां च मासमात्रं निवासमुल्लिखति।[3] परं तदसंगतम्। कविर्गाङ्गकुण्डे एव निवासं निरदिशत्।

(ख) डा० ब्युह्लरमहोदयोऽत्र सर् वाल्टर् इलियॉट्महोदयवचनमुद्दिश्य प्रतिपादयति :–[4] 'चोलानामेको वंशविशेषः (भेदः) वेंगिदेशमात्मसादकरोदिति तेन (वाल्टर् इलियॉट्महोदयेन) प्रत्यपादि। राज्यमिदं विवाहसम्बन्धाद्राजेन्द्रचोलेनालाभि' इति। ततश्च स (डा० ब्युह्लरमहोदयः) सर् वाल्टर् इलियॉट्महोदयोक्तिमनुवदति :—'तत्पुत्रो विक्रमदेवकुलोत्तुङ्गचोलस्तदुत्तराधिकारी बभूव। वेंगिदेशराजप्रतिनिधेः स्वपितृव्यविजयादित्यस्य निधनानन्तरं नृपतिः स्वपुत्रं राजराजं तत्पदेऽभिषिषेच। परमेकमेव वत्सरं (१०७८ ई०) परिपाल्य तद्राज्यं स्वानुजवीरदेवचोलायार्पयितुं स तत्पदमत्याक्षीत्। वीरदेवचोलः कुलोत्तुङ्गचोल इति विरुदं दध्रे। तस्य ताम्रशासनानि १०७९ ई० वर्षात् ११३५ ई० वर्षं यावत् प्राचुर्यतोऽतिसंख्याकान्युपलभ्यन्ते। ततश्च चालुक्याः पुनरप्यांशिकमधिकारं समध्यतिष्ठिपन्निति प्रतीयते' इति।

पुनरग्रे तेनोदलेखि :–'बिल्हणनिर्दिष्टो राजिगो लेखोक्तराजराजाभिन्न इति निःसंशयम्। यतो राजिगेति नाम राजराजस्यैव लौकिकं रूपमवभासते। तयोश्च वेंगिदेशशासनकालः प्रायशोऽभिन्न एवोपलभ्यते। चेदिदमभेदसाधनं संगतं, तदेदं फलति यद् विक्रमादित्यो यां चोलनरेशपुत्रीमुदवहत् स वीरदेवकुलोत्तुङ्ग आसीत्, विक्रमश्च यस्मै चोलराजसूनवे सिंहासनमदापयत्स हि राजराजराजिगस्य भ्रातासीदिति सिद्ध्यति' इति।

परमेतदभेदसाधनं विचारसरणिश्चासंगतिदोषदूषिते स्तः। डा० ब्युह्लरमहोदयस्याधार एवासंगतः। तथाहि :–

विषयोऽयं विस्ताराधिक्यमपेक्षते। पुलकेशि (द्वितीय)–राज्यकाले (ई० सप्तमशतकारम्भे) चालुक्यानामेकः शाखाविशेषो वेंगिदेशमधिचकार।[5] आदौ वातापि-

1 विक्र. पञ्च. २८–पृष्ठ २५. 2 विक्र. पृष्ठ. २६. 3 Buhler Intro, p. 35. 4 Buhler Intro, p. 35 fn 4. 5 सो. प्रा. इ. प. १३५.

चाळुक्याङ्गभूताप्यसौ शाखा कालान्तरेण स्वातन्त्र्यं स्वीचकार।[1] राजेन्द्रचोलोऽस्य वंशस्य अष्टाविंशतितमो नृपतिरासीत्। चोलवंशेनायं गाढं सम्बद्धोऽभूत्।[2] अयं च सम्बन्धो नासीत्तन्मात्रकालिको नूतनो वाऽपि तु चिरादेव (वंशीयपुरुषत्रयेण) प्रवृत्तोऽभवत्। तत्पितामहो विमलादित्यः (१०११–१०२२ ई०), चोलनृपतिराजराज (प्रथम, ९८५–१०१३ ई०)–पुत्रीं कुन्दव्वयरनाम्नीमुपयेमे। तत्पिता राजराजः (प्रथमः, (१०२२–१०६३ ई०) राजेन्द्रचोल (गङ्गैकोण्डचोल–१०१२–१०४३ ई०)–पुत्रीमंमङ्गदेवीमुदवहत्। सोऽपि च स्वमातुलराजेन्द्रदेवपुत्रीं मधुरान्तकीं पाणिग्रहणेनान्वगृह्णात्।[3]

स्वपितरि राजराजे संस्थिते सः (राजेन्द्रचोलः) नियमतो वेंगिदेशाधिपतिर्जातोऽपि, स्वपितृव्ये विजयादित्यभूभुजि वेंगिराज्यं न्यस्यति स्म। चोलैः प्रगाढं सम्बद्धाः प्राच्यचाळुक्याश्चोलानामिव राज्यचिह्नान्यधारयन्।

राजेन्द्रचोलः स्वं चोलराज्याधिकारिणममंस्त। चोलराज्ये एवायं पोषितो बाल्यं यापयामास।[4] तन्मातामहस्तं दत्तकतनयत्वेन पर्यगृह्णादित्यनुश्रूयते, परं तन्न संगतम्। एवं स्थितेऽप्यादौ स चोलप्रातिनिध्यं भजन् शास्ति स्मेति ज्ञायते। स हि स्वमातुलवीरराजेन्द्राय (१०६२–६३ ई० वर्षात् १०६३–६४ ई० वर्षाद्वा १०७०ई० यावत्) तद्युद्धेष्वसकृत्साहाय्यमार्पयत्। वेंगिदेशराजप्रतिनिधिशासकः कोऽपि स्यात्–तदिदं स लेशतोऽपि नाचिन्तयत्। स किल चोलमहाराज्यसम्राड् बुभूषति स्म, नतु वेंगिदेशनृपतिः। विजयादित्यः (सप्तमः, १०६२–६३––१०७६ ई०) वेंगिराज्यमन्यायत आत्मसाच्चकारेत्युच्यते, परं न तत्सकलविद्वत्संमतम्। वीरराजेन्द्रो वेंगिदेशाक्रान्तॄन् विजित्य विजयादित्यं तद्राज्यशासकं न्ययुङ्क्तेति लेखैरुपलभ्यते। अत्रार्थे च राजेन्द्रचोलः सर्वात्मना दत्तानुमोदनः स्यादिति संभाव्यते।[5]

ई० १०७० वर्षे वीरराजेन्द्रे उपरते राजेन्द्रमनोरथः सफल इवासीत्, परं विक्रमादित्यः कृतहस्तक्षेपः स्वश्यालकमधिराजराजेन्द्रं चोलराज्येऽभ्यतिष्ठिपत्।[6] स्वार्थसिद्धिमवेक्ष्यैवात्र विक्रमः प्रावर्तिष्ट।[7] यदित्थं तद्राज्यातिसंनिहितं रिपुराज्यं चिरमित्रभावमुपगच्छेत्। एतद्राज्यवंशजैः काले कालेऽसकृद्युयुधिरे चाळुक्याः, एतद्राज्यं च सदैव चाळुक्यानां भयावहमभवत्। (सावशेषा)

---

1 सो. प्रा. इ. प. १४७. 2 A. I. p. 49, 158 Pedigree of the Cholas. पश्यत परिशिष्टम् ग. 3 H. I. S. I. pp. 77, 341. 4 A. I. p. 125. 5 A. I. pp. 129–130. 6 सो. प्रा. इ. प. १७१. 7 I. A. p. 128,

वृत्तमिदमुपलभ्य विक्रमो राजिगं प्रतिकर्तुं तत्कालमेव बलं सज्जीकृत्य काञ्चीं प्रतस्थे। राजिगस्तु सन्धिबन्धेन सोमदेवं विक्रमस्य पृष्ठकोपाय प्रगुणमकरोत्। सोमेश्वरस्तु भ्रातृप्रतीकारोचितावसरं विज्ञाय कुलरिपुणापि चोलराजिगेन सन्धिबन्धे दोषं नामन्यत। विक्रमे राजिगसैन्यसमीपवर्त्तिनि सोमेश्वरोऽपि कल्याणात्प्रस्थितो विक्रमबलपृष्ठतोऽवतस्थे।[1]

स्वाग्रजेन युद्धस्यावश्यविधेयतामुपलभ्य विक्रमश्चिरं चेखिद्यते स्म। भ्रातृयुद्धं कथमपि नोचितमिति च निरणैषीत्। भ्रातृसकाशं सन्देशवचनानि संप्रेष्य भ्रातृयुद्धावरोधाय चिरमचेष्टत। स तु शपथशतैः सर्वं प्रपद्य क्षणमनुगुणं विक्रमं प्रहर्तुमैक्षत। तथापि विक्रमो युद्धसन्नद्धो नाभवत्। परं शिवः स्वप्ने प्रत्यक्षीभूय विक्रमं युद्धायादिदेश।

---

—विक्रमे चोलराज्यान्निर्गतमात्रे एव नवविप्लवे प्रवृत्तेऽधिराजराजेन्द्रः प्राणानत्यजत्, राजेन्द्रचोलश्च तद्राज्यं निजाधीनमकरोत्। इत्थमनायासेनैवाधिष्ठितमहासाम्राज्यश्चोलचालुक्यराज्ये एकीभावमनयत्।[2]

ई० १०७६ वर्षे दिवमुपयाते तु विजयादित्ये राजेन्द्रः स्वतनयं मुंमडिचोलं ( राजराजं ) वेंगिराजप्रतिनिधिशासकमकार्षीत्, किन्तु वर्षमात्रमेव परिपाल्य स तत्पदं परितत्याज। ततश्च तद्भ्राता वीरचोलः १०७८ ई० वर्षे तत्पदं जग्राह, १०८४ ई० वर्षं यावच्च तत्र स्थित्वा प्रत्याययौ। तदनन्तरं चोलगंगस्तत्पदं गृह्णन्नपि न चिरं तत्रातिष्ठदिति पुनरपि वीरचोलस्तत्पदमगत्या स्वीचकार। १०८८-८९ ई० वर्षं यावत्स तत्रासीत्। परं तत्पश्चादित्थं शासकनियुक्तिप्रणाली परित्यक्ता स्यादिति संभाव्यते।[3]

सर् वाल्टर् इलियॅाट्महोदयः प्राच्यचालुक्यराज्यचिह्नानां चोलीयैरभेदमुपलभ्य चोलशाखाया वेंगिदेशाधिकृतिं कल्पयति स्मेत्यनुमीयते।

कुलोत्तुङ्गचोलः प्राच्यचालुक्येषु श्रेष्ठतमो नृपतिरासीत्। अयमेव 'कलिंगत्तुपरनी' काव्ये नायकत्वेन वर्णितः।[4] तस्मिन्नुपरते तत्तनयो विक्रमचोलः १११८ ई० वर्षात् ११३५ ई० वर्षं यावच्छशास।

अयमेव राजेन्द्रः ( कुलोत्तुङ्गचोलः ) राजिग इति बिल्हणेन निरदेशि। विक्रमो यस्य चोलराजस्य पुत्रीं परिजग्राह स आसीद्वीरराजेन्द्रः। किञ्च तत्पुत्रोऽधिराजराजेन्द्र एव विक्रमस्य श्यालको बभूव।[5]

---

1 विक्र. षष्ठ. २७-५४. 2 H. I. S. I. pp. 82-83. 3 I. H. Q. XIII pp. 96-98. 4 सो. प्रा. इ. प. १७०-१७४. 5 A. I. pp. 133-136. सो. प्रा. इ. प. १०६-१०७, पश्यत परिशिष्टम् ग.

ततस्तु तुमुलं जन्यमजनि । विजयश्रीर्विक्रममेव स्वीचकार । राजिगः पलाय्य क्वचिद्गात्, सोमेश्वरश्च बन्धने न्यवेशि (क)।[1]

विक्रमस्तुङ्गभद्रां प्रत्याययौ। अग्रजाय राज्यं पुनरर्पयितुं कृतमतिः स शङ्करेण रुषा न्यषेधि। विवशीभूय स राज्यभारमुवोढ। जयसिंहश्च वनवासमण्डलशासकपदेऽभ्यषिच्यत (ख)।[2]

(क) युद्धमिदं १०७६ ई० वर्षेऽभवदिति पुरातनलेखैः प्रमाणीभवति।[3] तत्रास्ति सोमेश्वरदुराचारवर्णनम्, परं राजिगस्य नास्ति निर्देशः।

(ख) विक्रमादित्यचरितेऽयं कलङ्क इव प्रतीयते। विक्रमः सोमेश्वरं योग्यतायां गुणेषु प्रतापशौर्यादिषु च नूनमत्यरिच्यत। परमस्मिन्वस्तुनि स सर्वात्मना निर्दूषण आसीदिति वक्तुं दुष्करम्। किञ्चात्र स कियदवधि दोषभागासीदित्यपि निर्णेतुं न सुकरम्।

बिल्हणो विक्रमचरितं यथासाध्यमुत्कृष्टतमं चारुतमं च साधयितुं सर्वथाचेष्टत। स हि नानोपायैरनेकप्रसङ्गेषु विक्रमं देवानां सविशेषकृपापात्रं, लोभशून्यं, भ्रातृवत्सलं च प्रमाणीकृतवान्। विक्रमो राज्यं लेशतोऽपि नेयेषेति बिल्हणः प्रतिपादयति। तद्गुणाकृष्टा राज्यलक्ष्मीः स्वयमेव तं वव्रे। शंकरस्तस्मै बलाद्राज्यं दापयति स्मेति वा चारुतरोक्तिः। विषयमेतमधिकृत्य डा० ब्युह्लरप्रभृतय इतिहासविदः कविमत्यर्थमुपजहसुः।[4]

राज्यग्रहग्रस्ताः सोदरा अप्यन्योन्यं नूनमेव कलहायन्ते स्म। परमलौकिकौदार्यलोभरहितत्वादिगुणानामपि निदर्शनान्युपलभ्यन्त एव। डा० ब्युह्लरप्रभृतय इतिहासविदस्त्वित्थं मन्यन्ते[5]–'सोमेश्वरो भुवनैकमल्लो विक्रमं वनवासमण्डलाधीश्वरमकरोत्। परं तावताऽसन्तुष्यन्विक्रमः सोमेश्वरराज्यापहरणाय कपटप्रपञ्चं चिकीर्षति स्म। किन्तु तस्मिन् कपटप्रबन्धे प्रकाशपथातिथौ तस्य कल्याणपरित्यागोऽनिवार्यतामगच्छदिति प्रतीयते। तस्य जयकेशिप्रभृतिसामन्तावर्जन–शाश्वतिक ( कुलपरंपरागत )–शत्रुचोलमैत्रीसम्बन्धादयः कपटप्रपञ्चाः सोमेश्वरराज्यापहरणायैव पूर्वरङ्गात्मका आसन्' इति।

परं श्रीमान् ए. वी. वेङ्कटराम महोदयः,[6] श्रीमान् एस्. के. ऐयंगरमहोदयो-[7]ऽन्ये च महान्त इतिहासवेत्तारोऽत्र विप्रतिपद्यमानाः सयुक्तिप्रमाणोपन्यासपुरःसरमेवमाहुः–सोमेश्वरोऽत्यर्थमयोग्यः शासकोऽभूत्।[8] विक्रमादित्यो राज्यसूत्रं स्वहस्ते ना-

1 विक्र. षष्ठ. ५५–९१ 2 विक्र. षष्ठ. ९२–९९. 3 A. I. p. 133. H. I. S. I. p. 86 (Epi. Car. VII Sk. 124-). 4 Buhler Intro. pp. 37–38 fn. सो. प्रा इ. प. १०८–९. 5 Intro. pp. 33–38 fn. 6 Life pp. 35–39. 7 A. I. pp. 135–36. 8 A. S. I. 1924–25 p. 116.

ग्रहिष्यच्चेत् चालुक्यसाम्राज्यस्य सर्वनाश एवाभविष्यत्।[1] तस्यैवायं प्रभावो यत्प्रबलतमो रिपू राजेन्द्रचोलः ( कुलोत्तुङ्गचोलः ) अन्ये चारातयश्चालुक्यसाम्राज्यं लेशतोऽपि नाबाधन्त।[2] स किल चालुक्यसाम्राज्यस्याक्षुण्णतासम्पादनलालसयैव प्रेरितोऽगतिकगतिमाश्रित्य राज्यभारं स्वीचकार। तस्य राज्यकालेऽपि ( प्रायशः १११७ ई० वत्सरसंनिधौ ) तत्सामन्तभूपतयः स्वातन्त्र्याधिगतये भृशमचेष्टन्त, परं तस्य कर्मदाक्ष्येणैव चालुक्यसाम्राज्यं हानिलवमपि नान्वभवत्।[3] बहवश्च सोमेश्वर ( द्वितीय )–सामन्ता राज्यलाभकर्मणि तस्मै साहाय्यमदुः।[4]

आहवमल्लनिधनानन्तरं विक्रमराज्यलाभं यावद्यदपि वृत्तं कविर्न्यबध्नात्तत्सकलमपि वृत्तान्तराणीव पुरातनलेखप्रभृतिप्रमाणैः प्रमाणीक्रियते। परं विक्रमस्य दोषरहितत्वसाधनाय काव्यस्य चारुतासंपादनाय च कविः स्वप्रतिभाबलं सर्वात्मनोपयुयोजेत्यभ्युपगन्तव्यमेव। वृत्तक्रमातिविपर्यासस्याप्ययमेव हेतुः। कविर्वृत्तानीत्थमवर्णयत्:—

विक्रमदिग्विजयः, आहवमल्लनिधनम्, सोमेश्वरराज्याभिषेकः, विक्रमाङ्कस्य कल्याणं प्रति गमनम्, सोमेश्वरदुराचारः, विक्रमस्य जयसिंहादिभिः सार्कं कल्याणान्निर्गमनम्, सोमेश्वरसैन्ययुद्धं तत्पराजयश्च, विक्रमाङ्कस्य मलयदेशनृपतीन्प्रत्यभियानम्, जयकेशिमैत्रीसम्बन्धः, आलुपेन्द्रसन्धिबन्धः, केरलनृपतिभयम्, चोलराजसन्धिसम्बन्धः, चोलराजमृत्युः, चोलसूनुराज्यलाभः, राजिगकृतं चोलराज्यापहरणम्, सोमेश्वरराजिगाभ्यां विक्रमयुद्धम्, विक्रमस्य राज्यलाभश्चेति।

परमयं क्रमः सर्वात्मनाऽस्ति विपर्यस्तः। तथाहि:– आहवमल्लः ३० मार्च, १०६८ ई० दिवसे पञ्चत्वमञ्चति स्म। ११ एप्रिल, १०६८ ई० दिवसे च सोमेश्वरो राज्येऽभ्यषिच्यत।[5] किञ्च २५ दिसम्बर, १०७५ ई० – ३० जून, १०७६ ई० दिवसयोरन्तराले विक्रमः सोमेश्वरसकाशाद्राज्यमग्रहीष्टेत्यपि निःसंशयम्।[6]

कविवचसेत्थमाभासते[7] यत्–आहवमल्लनिधनानन्तरं भ्रातरौ चिराय स्नेहवृत्त्या कालमत्यवाहयताम्। ततश्च विरोधे जातमात्रे एव विक्रमः कल्याणाद्विनिर्गत्य चिरायेतस्ततो व्यचरत्, बहून्नृपान्नानोपायैरावर्जयत्, ततश्च चोलराजपुत्रीमुदवहत्। सोमेश्वरराज्यकालस्य दीर्घतरोंऽशस्त्वेवमेव व्यतीयाय। सर्वात्मनान्ते च चोलनरपतिनिधनादिवृत्तान्यभवन्निति प्रतीयते। यतो हि चोलनृपतिसन्धिः, अधिराजराजेन्द्रस्य निधनं, राजिगकृतं चोलराज्यापहरणं युद्धं चेति वृत्तानि कालानुकूलमतिसंनिहितानीति कविवचो व्यनक्ति।[8]

1 A. I. p. 143. 2 A. I. p. 52. 3 A. I. pp. 141–42. 4 A. I. p. 136. 5 H. I. S. I. p. 82. 6 H. I. S. I. p. 85. 7 विक्र. चतु. ९३–षष्ठ १. 8 विक्र. षष्ठ. ७–९९.

परं 'वीरराजेन्द्रः शरणागतं विनयावनतं च विक्रमं कण्ठिकया भूषयति स्म, सोमेश्वराच्च रट्टपाडीप्रदेशमाच्छिद्य तस्मै ( विक्रमाय ) प्रादात्' इति तदीयसप्तमवर्षीयलेखेन ( १०६९ ई० ) प्रसिद्ध्यति । अत्र चालुक्यराज्योत्तराधिकारित्वापादनमेव कण्ठिकाभूषणत्वेनाभिप्रेतमित्यनुमीयते ।[1] इत्थञ्चैतत्सिद्ध्यति यत् सोमेश्वरराज्यलाभकालात्प्रभृत्येव विक्रमो राज्यं स्वहस्तगतं चिकीर्षन्कपटप्रबन्धरतो बभूव । प्रागुक्तवस्तुपर्यालोचनपुरःसरं, विक्रमस्यादित एव राज्यप्राप्तिकपटप्रबन्धरतत्वं भ्रातृद्वयस्य चारम्भादेव दौर्मनस्यसत्त्वमभ्युपगम्यते चेदियमपराऽसंगतिरुपतिष्ठते ।

सोमेश्वरराज्यकालान्तर्वर्ती ई० १०७४ ( सेप्टेम्बर, ओक्टूबर ) वत्सरीयलेख[2]स्तदात्वे विक्रमादित्यस्य सोमेश्वराधीनतायां वनवासमण्डलशासकत्वं, तयोश्च विद्यमानं स्नेहसम्बन्धं सूचयति । विक्रमादित्यो गूढवर्त्मना कपटप्रपञ्चपरोऽभवदित्यभ्युपगम्यते चेद्बिल्हणोक्तिरसंगतिं भजते । वीरराजेन्द्रे सोमेश्वराद्रट्टपाडीप्रदेशमाच्छिद्य विक्रमायार्पयत्यपि सोमेश्वरः कथमेतदसोढ, तथात्वेऽपि च तयोर्भ्रात्रोः स्नेहसम्बन्धोऽदूषित एवाभवदित्यसंगतमिवाभाति । सकृद् विरुद्धावपि तौ पुनरपि समगच्छेतामिति, वीरराजेन्द्र–लेखगतोऽयमंशः स्वप्रशंसामात्रमेव ( असत्यः ) इति वा संभाव्यते ।

वीरराजेन्द्रः ई० १०७० वर्षे स्वर्गस्थ एवासीत् । तस्याष्टमं राज्यवर्षम् १२ मार्च, १०७० ई० दिवसे प्रारेभे । पुरातनलेखेन चैकेन तस्याष्टमवर्षेऽपि कृतशासनत्वं प्रमाणीभवति । वीरराजेन्द्र–राजेन्द्रचोलयोरन्तरालेऽधिराजराजेन्द्रो नूनमेव शास्ति स्म, परं तदचिरायैवेति निश्चितम् । यतो हि ५ जून, १०७० ई० दिवसाद्राजेन्द्रचोलराज्यकालः प्रावर्त्तत ।[3] विक्रमराज्यप्राप्तेर्नाचिरात्प्रागेव राजेन्द्रचोलश्चोलराज्यमधिचकारेति बिल्हणः प्रतिपादयति । तत्तु न सङ्गतम् ।

पश्चिमगंगवंशजो गंगपरमनडिभुवनैकवीर उदयादित्यः १०७५ ई० वर्षे सोमेश्वराधीनो भूत्वा, प्रदेशान्तरैः साकं वनवासमण्डलमपि शास्ति स्म । ई० १०७४ वत्सरीये ( सेप्टेम्बर, ओक्टूबर ) आश्विनमासे च विक्रमादित्यो वनवासमण्डलमशादित्यपि प्रमाणीक्रियते ।[4] एवञ्चैतयोर्वत्सरयोरन्तराले कदाचन विक्रमसोमेश्वरयोः प्रकटं दौर्मनस्यमभूदिति । श्रीमान् ए० वी० वेङ्कटराममहोदयस्तु १०७६ ई० वर्षं यावदुभयोर्भ्रात्रोः प्रेमसम्बन्धं रट्टपाडीप्रदेशस्य सहयुक्तशासकत्वं च निर्दिशति ।[5]

रणे पराजितो राजिगः पलाय्य क्वचिदगादिति बिल्हणो निरूपयति ।[6] तद्वचोऽभ्युपगम्यते चेद्विक्रमस्य तुङ्गभद्रां प्रति निवर्तनं नैरर्थक्यं भजते । कथं नाम विक्रमेण

---

1 सो. प्रा. इ. प. १०५. 2 H. I. S. I. p. 84. 3 H. I. S. I. p. 82. 4 H. I. S. I. p. 84. 5 Life p. 36. 6 विक्र. षष्ठ. ९०.

चोलसाम्राज्यं नाधिकृतम् ? यतश्चोलसाम्राज्यं विक्रमस्य करतलगतमेव भवेत् । एवञ्चेयं बिल्हणोक्तिरसङ्गताऽस्ति ।

चोलराज्यमधीनं न भवति चेदनुकूलं तु भवेदेवेति विक्रमोऽभ्यलषत् । राजेन्द्रचोलोऽपि विक्रम इव प्रतापशाली विचक्षणो नीतिदक्षश्चासीत् । सोऽपि चालुक्यसाम्राज्यमधीनं, तदभावे वा स्वकृपापात्रसुपकृतं च बाढं चिकीर्षति स्म । तच्च सोमेश्वरराज्यकाले एव शक्यमासीत् । कुतस्तावन्नीतिकुशले लोकोत्तरप्रतिभाशालिनि च विक्रमे शास्तीदं सम्भवेत् । एतेन राजिगः सोमेश्वरपक्षं किमित्येवंविधौत्सुक्येनागृह्णादित्यपि स्पष्टीभवति ।

विश्रुतो विद्वान् हेमाद्रिर्देवगिरियादवनृपतिमहादेवस्य प्रधानामात्य आसीत् । स हि स्वविख्यातग्रन्थचतुर्वर्गचिन्तामणिप्रशस्तावेवमाह :—[1]

समुद्धृतो येन महाभुजेन द्विषां विमर्दात्परमर्दिदेवः ।
अस्यापि चालुक्यकुलप्रदीपः कल्याणराज्येऽपि स एव येन ॥

( अत्र यत्पदेन सेउणदेशयादवनृपतिसेउणचन्द्रपरामर्शः । परमर्दिदेवश्च विक्रमादित्य इत्यवगन्तव्यम् । ) वाक्येनैतेनेदं प्रतीयते यदस्मिन् युद्धे सोमेश्वरो नासीदेकाकी, राजिगोऽपि तस्य सहाय आसीदिति च सम्भाव्यते ।

युद्धमेतत्कुत्राभवदिति नास्ति निर्दिष्टम् । कल्याणे, काञ्च्यां, कस्मिंश्चिचोलराज्यप्रदेशे वा इदं नाभवदपि तु चोलराज्यसीमासन्निधौ क्वचन तुङ्गभद्रातटप्रदेशे इत्यनुमीयते ।[2] अत्रेदमवधेयं यद्बिल्हणोऽभीक्ष्णं विक्रमस्य तुङ्गभद्रातटप्रयाणं भणति ।[3] कवी राज्यारोहणमपि तत्तटेऽवर्णयत् ।[4] चालुक्यराज्याधिगत्यनन्तरं चिराद्विक्रमः कल्याणं प्रविवेशेति बिल्हणः स्पष्टमेव वक्ति ।[5]

विक्रमं दोषहीनं सिसाधयिषुः कविः कारणान्तरेष्विदमप्येकं निविष्टवान् यत्सोमेश्वरः स्वत एव विक्रमेण युयुत्सुः समभ्यगात् । सत्यमेतदिति सम्भाव्यते । स्वसहायसंवलितो विक्रमश्चेत्सोमेश्वरमाक्रमिष्यत्तदा विजयानन्तरं कल्याणमेव प्रावेक्ष्यत् । परं न तथाऽभूत् । स हि कल्याणं चिरात्प्रविवेशेति वस्तुतत्त्वम् ।

ई० १०७७ वर्षारम्भात् ई० १०७८ वर्षारम्भं यावद्विक्रमः एतगिरि – नडविगुप्पयणविडु-स्थानयोर्वसच्चशादिति प्राचीनलेखादिप्रमाणैः प्रमाणीक्रियते ।[6] यदा विक्रमः स्वं सर्वथा सुसज्जितमवाधारयत्तदैव सोमेश्वराधीनताबन्धनं निरस्य युद्धाय सन्नद्धोऽभवत् । ( सावशेषा )

---

1 सो. प्रा. इ. प. १०८–९. 2 life pp. 33–34. 3 विक्र. पञ्च. १०, ६०; षष्ठ. २५, ९२. 4 विक्र. षष्ठ. ९४–९८. 5 विक्र. सप्त. १–२. 6 Bom. Gaz. pp. 446–150.

ततोऽसकृदाक्रान्तविपक्षमण्डलः शमिताशेषशत्रुविक्रमः एकदा पुनरपि चोलप्रतापं निर्वाप्य क्रमेण कल्याणं विवेश ।[1]

तस्मिन्नवसरे वसन्तः स्वीयातुलसौन्दर्यादिगुणैर्लोकं नितान्तं मदयति स्म । अद्वितीयरूपादिगुणशालिनी जगद्रत्नं करहाटपतिपुत्री चन्द्रलेखा गौरीदयितशासनात्स्वयंवरं चिकीर्षतीति सुधामयीं वार्तां विक्रमः शुश्राव । तस्या राजकन्याया लोकोत्तररूपादिगुणगणालङ्कृतत्वादिवृत्तान्तं निशम्य विक्रमस्तामासादयितुं नितान्तमुत्कण्ठमानमानसोऽभूत् । पुष्पचापेषुभिरत्यन्तं सन्तप्यमानो दयनीयां दशामयासीत् ।[2]

विक्रमेण करहाटदेशं प्रेषितो दूतस्ततः प्रत्यावृत्य 'राजकन्या भवति सान्द्ररागास्ति, सा भवन्तमेव वरिष्यति, तत्पितापि चात्र संमनुते' इत्याचचक्षे । विक्रमस्तत्कालमेव करहाटं प्रति प्रातिष्ठत । राजधानीं प्राप्य करहाटपतिनाभ्युद्गतः सत्कृतश्च स्वयंवरसभामण्डपं प्रविवेश । तत्र मण्डपेऽयोध्या – चेदि (डाहल) – कान्यकुब्ज – चर्मण्वतीतटप्रदेश – कालञ्जरगिरि – गोपाचल – मालव – गुर्जर – पाण्ड्य – चोलदेशाधीशाः विविधालङ्करणादिमण्डिता भूरिभङ्गीभूयिष्ठास्तत्र तत्रातिष्ठन् । राजतनया चन्द्रलेखा सर्वांस्तिरस्कृत्य विक्रममेव जयमालालंकृतं व्यदधात् (क) ।[3]

---

सोमेश्वरे तमाक्रामति राजिगोऽपि तत्सहायकोऽभवत् । सोमेश्वरे पराभूते राजिगः प्रत्यावर्तत, विक्रमश्च स्वं चालुक्यसम्राजमुदघोषयत् । राजिगपलायनविषयकबिल्हणोक्तिरप्येवं संगच्छते ।

(क) चन्द्रलेखाया विक्रममहाराज्ञीत्वं प्रमाणीभवति । सा हि करहाट ( कराड ) –देशाधीश – शिलाहारवंशोद्भवा राजकन्याऽऽसीत् । वंशोऽयं विद्याधराधिपतिजीमूतवाहनप्रभव इति तदीयलेखैरुपलभ्यते । बिल्हणश्चन्द्रलेखां द्वित्रिवारं विद्याधरकुमारी – विद्याधरराजकन्या – विद्याधरीत्यादिसम्बन्धबोधकशब्दैर्निर्दिशति । सा खलु प्रागुक्तवंशनृपति – मारसिंहस्य (१०५८ ई०) तनया स्यादिति संभाव्यते ।[4] तदात्वेऽपि सा प्रेमादरभाजनं स्यादिति बिल्हणोक्तिभिर्ज्ञायते । परमस्याः स्वयंवरवृत्तान्तोऽस्ति सन्देहास्पदम् ।[5]

चन्द्रलेखा ( चन्दलदेवी ) जयकर्णं, सोमेश्वरं, मैललमहादेवीं चाजीजनदिति प्रमाणीभवति । जयकर्णः १०८७ ई० वत्सरे शासनकार्येऽलमभवदित्यपि सिद्धम् । विक्रमो राज्यारोहणानन्तरं चन्द्रलेखामुदवोढेति बिल्हणोक्तिर्न संगता । वस्तुतस्त्वयं वैवाहिकसम्बन्धो राज्यारोहणात्प्रागेव ( प्रायशः १०७० ई० वत्सरतोऽपि प्राक् ) अभूदिति

---

1 विक्र. सप्त. १–२. 2 विक्र. सप्त. ३–नव. २४. 3 विक्र. नव. २५–१५१.
4 Bom. Gaz. pp. 449, 546, 547. 5 सो. प्रा. इ. प. १११ टिप्पणी.

विवाहानन्तरं विक्रमश्चिराय तत्रैव न्यवसत् । वसन्तस्य मञ्जुतामये समये दोलाकेलि-पुष्पावचयमधुपानलीलाद्यानन्दान्यथेष्टमुपभुङ्क्ते स्म । ग्रीष्मारम्भकाले स चन्द्रलेखानुगतः कल्याणं प्रत्याजगाम । पुरप्रवेशावसरे पुराङ्गनाः स्वविलासैर्विक्रमविषयकं स्वानुरागमभ्यव्यञ्जयन् । राजप्रासादमधिगतः सन्तोषितसकललोकः पुनरपि ग्रीष्मानुरूपामुपभोगलक्ष्मीमन्वग्रहीत् ।[1]

विक्रमश्चन्दनादिशीतोपचारैः स्नानागारेषु भूगर्भगृहेषु च निवासैर्ग्रीष्मकालानन्दमन्वभवत् । केलिवापीष्वनल्पा जलकेलीश्चकार । ततस्तु समाजगाम नीलनीरदरमणीयो वर्षाकालः । विक्रमश्चन्द्रलेखामुद्दिश्य वर्षर्तुसौन्दर्यं चिरं विच्छित्तिविलासालङ्कृतमवर्णयत् (क) ।[2]

ततो वर्षावसाने कश्चिच्चरो विक्रमसन्निधौ समागत्य 'जयसिंहो भवता योद्धुमिच्छति, प्रजाः परिपीड्य प्रचुरं द्रव्यमेकत्रीकरोति, सेनादिबलं वर्द्धयति, द्रविडेन्द्रमुपहारदानादिभिरावर्जयितुमिच्छति, किञ्च स भवदनुयायिषु भेदमुत्पादयति' इति वृत्तान्तमकथयत् ।[3]

दूतमुखादिदं वचनं निशम्य विस्मितमानसो विक्रमो नितान्तमतप्यत । चारचक्षुषा दूतवचनस्य याथार्थ्यमभ्युपगम्य जयसिंहस्य दुराचारित्वमधमत्वं चावधार्य ततोऽप्यधिकं चेखिद्यते स्म । जयसिंहो युद्धाद्विरतः स्यादिति तत्सकाशं सामवचनान्यसकृत्प्रेषयामास । स तु कुलकण्टकः एकमपि वचनं नाग्रहीष्ट ।[4]

तस्मिन्नेवावसरे आनन्दमयः शरदृतुराविरासीत् । सकललोकसुखाकरेऽपि तस्मिन् विक्रमो भ्रातृदुश्चरितानि चिन्तयन् सुखलवमपि नाविन्दत । स कथमपि स्वानुजेन योद्धुं स्वं च तज्जन्यायशोनवकलङ्कपङ्काङ्कितं कर्तुं नैच्छत् । जयसिंहस्तु भूरिभूपतिभिरनुगतः पुष्कलं बलमेकत्रीकृत्य कृष्णानदीतीरं प्रति प्रातिष्ठत । अभिमानमदोन्मत्तेन च तेन पथि

---

स्वीकर्तव्यमेव । जयकर्णः सोमेश्वरादिषु ज्येष्ठ आसीत्, परं, विक्रम जीवत्येव, प्रायशः ११२१ ई० वत्सरसंनिधौ लोकान्तरमगादिति संभाव्यते ।[5]

(क) अत्रेदं वर्षावर्णनं वस्तुतो विक्रमादित्यकृतिरुत बिल्हणस्तन्मुखेनैवमाहेति सन्देग्धि श्रीमान् डा० ब्युह्लरमहोदयः ।[6] परं तन्निर्हेतुकम् । कविप्रौढोक्त्यपेक्षया कविनिबद्धवक्तृप्रौढोक्तेरधिकचमत्कारकारित्वाद्बिल्हणनिबद्धो वक्ता विक्रमो वर्षां वर्णयित्वा चन्द्रलेखां चाटूक्तिभिरावर्जयतीति ।

---

1 विक्र. दश. १–द्वादश ३५. 2 विक्र. द्वादश ३६–त्रयोद. १०. 3 विक्र. चतुर्द. १–१३. 4 विक्र. चतुर्द. १४–२२. 5 सो. प्रा. इ. प. ११७ टि. 6 Buhler Intro, p. 42 fn.

प्रजाः प्रचुरं परिपीडनं लंभिताः। क्वापि लोकस्य दाहमन्यत्र बन्धनमपरत्र पुनर्लुण्ठनमकार्षीत्। ईदृशविविधदुराचारैः प्रकृतिवर्गं नितान्तमपीडयत्।[1]

अन्ततोऽत्याचारपरम्परां सोढुमसमर्थो विक्रमः कृष्णां प्रति चचाल। अनुजसान्त्वनाय पुनरपि कृतबहुलप्रयासोऽपि यदा तं सान्त्वयितुं नालमभवत्तदा त्वगतिकगत्या योद्धुमुपचक्रमे। जयलक्ष्मीस्तु विक्रममेवावृणुत। जयसिंहबलं पराजितं सत्पलायते स्म। वने पलायितं भटैरानीतं तं विक्रमः सामवचनैः समतोषयत्। ततश्च स कल्याणपुरं प्रविवेश (क)।[2]

---

(क) विक्रमः कल्याणराज्यमासाद्य जयसिंहं वनवासमण्डलाधीश्वरमकार्षीदिति बिल्हणोक्तिः पुरातनलेखादिभिः प्रमाणीभवति।[3] डा० ब्युह्लरमहोदयोऽत्र प्रतिपादयतिः[4]– 'लेखेषु विक्रमस्य जयसिंहयुद्धं नोपलभ्यते। विक्रमः सोदरयोर्युद्धं प्रकाशपथमानेतुं नाभ्यलष्यदिति संभाव्यते। युद्धमिदं १०७७ ई० वत्सरस्यान्तभागेऽभवदिति बिल्हणोक्तिर्व्यनक्ति। इदं वस्तु कादम्बलेखैः समन्वेति। तेषु तैलपकादम्बः १०७७–७८ ई० वत्सरे वनवासमण्डलशासकत्वे न्ययुज्यतेत्युपलभ्यते। जयसिंहे पराजिते तैलपः शासकत्वेन नियुक्तः स्यादिति संभाव्यते' इति।

तदीयं मतमिदं न सर्वात्मना संगतम्। तथाहि:– इदमत्र वस्तुतत्त्वम्:–

धारवाडप्रान्तगतहांगलविषये कदम्बवंशजानामेको विभागः शास्ति स्म। एतदीया नृपतयः काले काले वनवासमण्डलमपि शासितवन्तोऽपि परंपरया तत्राऽधिकृता नासन्। ते हि स्वान् वनवासिपुराधीश्वरान् वदन्तोऽपि, वनवासिपुरस्य कदाचन कदम्बवंशजानां प्राचीनराजधानीत्वं स्वादिधामत्वं च, स्वेषाञ्च प्राक्तनकदम्बवंशसम्बद्धत्वमेवाभिप्रयन्ति स्म।[5]

अयं प्रदेशः कल्याणचालुक्यराज्यकाले द्वादशसहस्रग्रामाणां समवायः, उत तावदायकरवान् महामहिममण्डितश्चासीत्। आहवमल्लराज्यकाले विक्रमस्तं शशास। स हि १०७४ ई० वत्सरस्याश्विनमासं यावदेतच्छासकोऽभूत्।[6] अधिगतराज्यो विक्रमस्तत्कालमेव स्वकृपापात्रं जयसिंहमेतदधीश्वरमकार्षीत्। जयसिंहः प्रदेशमिमं नूनं १०८५ ई० वर्षं यावदशात्।[7] निःसंशयमयं प्रदेशः सुतरां विशिष्ट आसीत्, विक्रमजयसिंहयोः प्रधानशासकत्वे सत्यपि तदधीनाः कदम्बवंशजा अपि तदधीनशासनं चक्रुः। (सावशेषा)

---

1 विक. चतुर्द. २३–५४ 2 विक. चतुर्द. ५५–पञ्चद. ८७. 3 Bom. Gaz. pp. 445, 449, 452. 4 Buhler Intro. p. 43 fn. 5 Bom. Gaz. p. 558. 6 Bom. Gaz. p. 444. 7 H. I. S. I. p. 89.

विक्रमे कल्याणं प्रतिनिवृत्ते हेमन्तस्य भूरिसौख्यभूयिष्ठः समयः प्रादुरासीत् । विक्रमो मृगयार्थमरण्येषु गत्वा नानाविधान्पशूनवधीत् । ततश्च पुनरपि कल्याणमयासीत्।[1]

विक्रमे सकलरिपून्पराजितवति तद्राज्ये सर्वतः सौख्यशान्तिसमृद्धीनामेकच्छत्रं राज्यमभवत् । अकालमृत्युर्दुर्भिक्षं वा नाम्नाऽपि नासीत् । प्रकृतिरपि तस्य पूर्णसहायिकासीत् । स दाने कर्णादीन्नूनमत्यशेत । नयनानन्ददायिनः कुलालङ्करणभूताः केचन तनयास्तद्गृहमलञ्चक्रुः । स हि नानाविधधर्मकार्येषु निपुणोऽभूत् । स हि विशालं मनोज्ञं चैकं कमलाविलासिनो (विष्णोः) निवासं निरमापयत् । तस्यैव पुरस्तादेकं सुमहत्तडागमखानयत् । तयोश्च सन्निधौ सकलजगद्रत्ननिधिसमृद्धं पुरमप्यकारयत् (क) ।[2]

चोलनरेशे भूयोऽपि बलगर्विते तद्वार्तां निशम्य विक्रमः पुनरपि युद्धाय सन्नद्धो भूत्वा काञ्चीं प्रति प्रतस्थे । तां पुरीं प्राप्य चोलमाक्रान्तवति तस्मिन् स चोलः पराजितोऽभूत् । विक्रमः काञ्चीमात्मसात्कृत्य, तत्र सुचिरं कृतविविधविनोदः स्वराजधानीं प्रत्याययौ (ख)।[3]

---

—युद्धमिदं १०७७ ई० वत्सरान्तेऽभूदित्यपि डा० ब्युह्लरवचनं न संगतम् । बिल्हणः कमपि कालं न विशिष्य प्रत्यपादयत् । युद्धमिदं १०८५ ई० वत्सरे[4] ततोऽप्यनन्तरं वाऽभवन्न तु १०७७ ई० वत्सर इति निश्चप्रचम् ।

डा० ब्युह्लरमहोदयः कादम्बतैलपस्य १०७७–७८ ई० वत्सरे वनवासमण्डलाधीश्वरपदे नियुक्तिं निर्दिशति । तदप्यसंगतम् । 'कादम्बकुल'– पर्यालोचनेनास्यासंगतिः सुतरां स्पष्टीभवति ।[5]

(क) शिलालेखेष्वस्य नगरस्य विक्रमपुरमिति नामोपलभ्यते । जयसिंह (द्वितीय)– ज्येष्ठभगिन्यक्कादेव्यस्मिन्पुरे निवसन्ती, १०५३ ई० वत्सरे किसुकाडप्रदेशं शशासेति विक्रमस्य राज्यकालात्पुराप्यस्य राजधानीत्वं प्रमाणीभवति । परं विक्रम इदं प्रासादादिभिरलङ्कार्य स्वराजधानीमकल्पयदिति ।[6]

(ख) बिल्हणकृतिः काव्यमत्रैव समाप्तिं भजति । डा० ब्युह्लरमहोदयोऽन्तेऽप्येकमसंगतं विषयं प्रत्यपादयत् । कविकृतं वर्णनमपि न सर्वात्मना यथार्थम् । डा० ब्युह्लरमहोदय एवमाह[7]:—'लेखेषु १०८१ ई० वत्सरे पाल ( पल्लव इति वाच्यम् ) –नृपतिना साकं युद्धमुपलभ्यते । युद्धमेतत्तदभिन्नमेव स्यात् ( loc. cit, p. 15 ) यतो हि केरलपल्लवानामेकः शाखाविशेषश्चोलदेशमधिकृतवांस्तत्र च ई० सप्तमशतकारम्भे

---

1 विक्र. षोडश १–५३. 2 विक्र. सप्तद. १–४१. 3 विक्र. सप्तद. ४३–६८
4 H. I. S. I. p. 89. 5 Part IV chap. VIII pp. 113–125.
6 Bom. Gaz. 219, 435, 450 note 5., A. I, pp. 140, 142.
7 Buhler Intro. p. 44.

## अनुबन्धः

महाकविर्बिल्हणो विक्रमाङ्कदेवचरितं सर्वात्मनोत्कृष्टं चारुतमं च साधयितुमचेष्टत। विक्रमस्य दोषवत्त्वेऽभ्युपगतेऽपि, स नितान्तं प्रतापशाली शूराग्रगण्यो नीतिकुशलः सकलगुणगणालङ्कृतो नृपतिरासीदिति निर्विवादोऽर्थः।[1] स किलैकपञ्चाशद्वर्षाण्यविच्छिन्नमशात्।[2]

राज्यारम्भे जयसिंहविषयकोपप्लवे जातेऽपि चिराय सार्वदिकी सार्वत्रिकी च शान्तिरेव प्रावर्त्तत। राज्यान्तकाले १११७ ई० वत्सरे गोपककादम्ब–नोलंबवाडी-

---

नाचिराय शशास। विक्रमराज्यकाले चोला नितान्तं क्षीणा अभवन्, प्रायद्वीपस्य पूर्वभागे च पल्लवाः पुनरप्यंशतोऽधिकारं चक्रुरिति सर्वथा संभाव्यते।'

परमनुपदमेव स निरूपयति यद्– 'न केवलमयं विषयः, वस्तुतस्तु वाल्टर इलियॉट्महोदयस्य सकला अपि लेखाः, पुनःपरीक्षणमपेक्षन्ते' इति।

डा० ब्युह्लरमहोदयस्तु 'पाल' इति पाठस्यासंगतत्वं 'पल्लव' इति पाठस्य च संगतत्वं वक्ति। वयं तु तत् 'चोल' इति मन्यामहे। वाल्टर इलियॉट्महोदयः 'चोल'मेव 'पाल' इत्यवदधारेति संभाव्यते। विक्रमराज्यकाले चोला नितान्तं क्षीणा आसन्निति डा० ब्युह्लरमहोदयो निरूपयति। तत्तु न संगतम्। तदात्वे चोलाः समृद्धेः परां कोटिमधिष्ठिता आसन्। विक्रमप्रतिस्पर्धी राजेन्द्रचोलः (१०७०–१११८ ई०) बहुलप्रतापशाली भूरिबलसंवलितो नीतिदक्षश्चासीत्। विक्रमस्यैवायं बुद्धिप्रभावो यद् ईदृशाद्भुतगुणमये रिपौ सत्यपि चालुक्यसाम्राज्यं हानिलवमपि नान्वभवत्।

अत्र चोलपदेन प्राच्यचालुक्या एवाभिप्रेयन्त इति संभाव्यते। पश्चिमचालुक्यसाम्राज्यसामान्यसीमाया बहिर्भागे तेलुगुदेशस्य स्थानेषु केषुचन, द्राक्षारामे च विक्रमादित्यराज्यकालिकाः केचन लेखा आसाद्यन्ते।[3] तल्लाभे तत्र विक्रमस्येयं युद्धयात्रैव हेतुरिति प्रतीयते। चोललेखेष्वपीयं निर्दिश्यते।

प्राच्यचालुक्यकुलोत्तुङ्गचोलदेवस्य (राजेन्द्रचोलाभिधस्य राजिगस्य) चतुर्दशपञ्चदशराज्यवर्षयोर्लेखेष्विदमुपलभ्यते यद्विक्रमो नंगली (मैसूर)–स्थानात् तमाचक्राम, परं स तं (विक्रमं) मनलूरद्वारा तुङ्गभद्रां यावददिद्रवदिति। राजिगराज्यकालः १०७० ई० वर्षादारभत। ततश्च विक्रमस्याक्रमणं १०८४–८५ ई० वत्सरयोः सन्निधौ सिध्यति, न तु ई० १०८१ वत्सरस्येति सिद्धम्।[4]

---

1 A. I. p. 52. 2 A. I. p. 142 3 A. I. p. 141. 4 A. I. pp. 136-37.

प्रदेशपाण्ड्य – करहाटशिलाहारसमवेतबलसंवलितो द्वारसमुद्राधिपो होयशलविष्णुवर्द्धनः ( द्वितीयः ) विक्रममाचक्राम, परं सिंद ( सेन्द्रक ) – वंशोद्भवसामन्ताचुगि ( द्वितीय ) – प्रभृतिमाण्डलिकनृपतिसहायो विक्रमः सकलानपि रिपून् दूरीचकार। एतेनाक्रमणेन चालुक्यसाम्राज्यं हानिलवमपि नान्वभवदिति वस्तुतत्त्वम्।[1]

कल्याणचालुक्यवंशे विक्रमादित्यः श्रेष्ठतमः प्रतापशाली च नृपतिरासीत्। तस्य साम्राज्यं प्राज्यं समृद्धं सुविशालञ्चाभवत्। दक्षिणस्यामातुङ्गभद्राया उत्तरस्यां नर्मदां यावत्तत्साम्राज्यं विस्तृतमभवत्। तुङ्गभद्राकृष्णासंगमादुत्तरतो गोदावरीवर्धासंगमं यावत्ततश्चाग्रे एतां वर्धानदीं यावत्सरलरेखायामाकृष्टायां चालुक्यराज्यप्राच्यसीमा निर्धार्येत।[2]

स किल नानोपायैर्लोककल्याणाय राज्यसमृद्धये च प्रायतत। नयमार्गमनुसरन्नितान्तं नैपुण्येन शासनमकरोत्।[3] स खल्वत्यन्तं दानप्रवण उदारचेता धर्मधुरन्धरश्चासीत्।[4] तद्राज्यकालिकाः प्रायशो द्विशतलेखा अद्य यावदुपलब्धाः सन्ति। अतिदूरात्काश्मीरदेशादागत आश्रयेप्सुर्बिल्हणो महाकविस्तत्सभायामेव स्वमनोरथं सफलीकर्तुमलमभवत्। किञ्च याज्ञवल्क्यस्मृतिमिताक्षराटीकाकृद्विज्ञानेश्वरपण्डितोऽपि तमेवाश्रयत्।[5] मिताक्षराटीकान्तेऽधस्तनं पद्यत्रयमुपलभ्यते।

नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरम्,
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः।
विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदन्योपमा-
माकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम्।
स्रष्टा वाचां मधुरवपुषां विद्वदाश्चर्यसीम्नां
दातार्थानामतिशयजुषामर्थिसार्थार्थनायाः।
ध्याता मूर्तेर्मुरविजयिनो जीवतादार्कचन्द्रं
जेतारीणां तनुसहभुवां तत्त्वविज्ञाननाथः॥
आ सेतोः कीर्तिराशे रघुकुलतिलकस्या च शैलाधिराजा-
दा च प्रत्यक्पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात्।
आ च प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुराङ्घ्रिः
पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः॥

पद्येष्वेतेष्वतिशयोक्तावभ्युपगतायामपि, एतैर्ग्रन्थकारस्य विक्रमविषयकश्रद्धादरभक्तयः स्पष्टमवभासन्ते।[6]

---

1 A. I. pp. 51–52, 141–42. सो. प्रा. इ. प. ११५–१७. 2 A. I. pp. 138–39. 3 A. I. 138–40. 4 Bom. Gaz. pp. 228–29. 5 A. I. P. 142. 6 Bom. Gaz. pp. 219, 229.

चोलराजराजाधिराजस्य ई० १०४५–४६ वत्सरीयलेखेनेदं प्रसिद्धयति यत्प्रागुक्तवत्सरात्पूर्वं स आहवमल्लेनायुध्यत, यत्र च विक्रमादित्योऽपि समवेत आसीत्। तदात्वे विक्रमस्य षोडशवर्षकल्पत्वेऽप्यभ्युपगते देहावसानसमये तदायुर्न्यूनान्न्यूनमेकशतं वर्षाणां स्यात्।[1] यतस्तदीयराज्यैकपञ्चाशद्वर्षपराभवसंवत्सर – ११२६–२७ ई० – हायनीयो लेख उपलभ्यते, येन च तस्य २४ जनवरी, ११२७ई० यावत्कृतशासनत्वं प्रमाणीभवति।[2]

अधिगतराज्यो विक्रमः सर्वप्रथममिदं महत् कृत्यं समपादयद्यत्तदात्वे प्रवर्त्तमानं शकसंवत्सरं विनाश्य, स्वनाम्ना 'चालुक्यविक्रमवर्ष' इति, 'चालुक्यविक्रमकाल' इति वा ख्यातं नूतनं संवत्सरं प्रचालयति स्म, यस्य प्रथमवर्षं तद्राज्यारम्भकालः (श० सं० ९९९, १०७६–७७ ई०) एव निरधार्यत।[3] विक्रमराज्यकालिकेषु प्रायशः सकललेखेषु संवत्सरमूलनामसंवलितश्चालुक्यसंवत्सरो दृश्यते। विक्रमोत्तराधिकारिणस्तत्सामन्ताश्च संवत्सरमिमं स्थिरीकर्तुमचेष्टन्त। परं प्रायशः एकशतं वर्षाणि यावत्प्रचलितोऽन्तं जगाम।[4]

विक्रमादित्यतनयस्तदुत्तराधिकारी सोमेश्वरः (तृतीयः) विद्वन्मण्डलमण्डनायमानो बभूव। गुणान्तरेषु सर्वश्रेष्ठः स स्वातुलविद्वत्त्वप्रभावात् 'सर्वज्ञचक्रवर्ती' इति विरुदं लेभे। स हि अभिलषितार्थचिन्तामण्यपरनामधेयं मानसोल्लासनामकमतिमहान्तमेकं ग्रन्थं प्राणैषीत्। अत्र राज्यप्राप्तितद्रक्षणोपायराज्यशासनविधिन्यायव्यवस्थायुर्वेदहस्तिशास्त्ररसायनविद्यादैवज्ञविद्याशास्त्रविद्यालङ्कारशास्त्रादिभूरिविषयाणामस्ति विशदं प्रतिपादनम्।[5]

पट्टणस्थजैनभाण्डारे सोमेश्वर (तृतीय) – विरचितं विक्रमाङ्काभ्युदयाभिधानं चम्पूकाव्यं विद्यते। अत्र कविः स्वपितृविक्रमादित्य (षष्ठ) – वृत्तान्तं न्यबध्नात्। परं तत्काव्यं खण्डितमिति महत्कष्टम्। विक्रमयौवराज्यं प्रतिपाद्य (प्रायः ८० पत्राणि) काव्यमेतद्विरमति। परं समाप्तिसूचनं पार्श्वतोऽस्तीति स्थानान्तरेऽप्यस्य प्रत्यन्तरसत्त्वं नासंभवि। परमद्य यावदेतन्न प्रकाशपथं प्रापेति शम्।

---

1 सो. प्रा. इ. प. १२० टिप्पणी. 2 I. A. XLVII, XLVIII 1918-19. 3 H. I. S. I. p. 85. 4 सो. प्रा. इ. प. ११०; A. I. p. 143. 5 सो. प्रा. इ. प. १२५–२६.

कविस्तां पूर्णतया निरुवोढ । वैदर्भीरीतिलक्षणं च–'माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते' इत्युदाहृतम् । स्वकाव्यनायकचरितस्य यथासाध्यं मनोज्ञीकृतये सर्वात्मनाचेष्टत महाकविः । ऐतिहासिकविषया आलङ्कारिकरीत्या तथा संनिवेशिता यथा तेऽनितरसाधारणतामेवोपयान्ति। काव्येऽस्मिन्नयमपरो विशेषो यदापाततस्तदानन्दमयं चमत्कारयुक्तं च प्रतीयते, तत्त्वावगत्यनन्तरं तु स एवानन्दश्चमत्कारश्च निःसीमतामानन्त्यं च भजते । 'कामदुघा हि महाकवीनां वाचो भवन्ति' इत्युक्तिर्बिल्हणेन नूनं चरितार्थीकृता ।

काव्येऽनुप्रासाः सन्त्यद्भुतविधया संनिवेशिताः। उपमोत्प्रेक्षादयोऽलङ्कारास्तु स्वभावत एव चमत्कारमया भवन्ति, परमत्र श्लेषप्रभृतयो दुरूहा अपि ते तथा सन्ति ग्रथिता यच्चित्तं विस्मयस्य परां कोटिमाटीकते ।

कविः खलु द्वेधा समाख्यातः–कारको भावुकश्च। तयोः कतरो महत्तर इति निर्णेतुं दुष्करम्। 'इण्डियन एन्टिक्वेरी'पत्रसंपादकस्तु बिल्हणरीतिमधिकृत्यैवमाह[1]:–'बिल्हणः श्लेषालङ्कारस्य परमोपासकः। अनुप्रासग्रहग्रस्ते तस्मिन्नालङ्कारिकाडम्बरपूर्णकवितापटुः कोऽपि महाकविस्तं कदाचिदेवातिशयीत । मध्यकालिकानेककविवत् सोऽपि दीर्घातिदीर्घसमासान्निबध्नाति, तासां चमत्कारमयप्रहेलिकानां ग्रथने च नितान्तमानन्दं विन्दति यासामुद्ग्रथनं काव्यामृतपानलालसेभ्योऽत्यर्थं रोचते ।'

चिन्त्यमेतदालोचनम्। यतो हि बिल्हणरीतिरत्र प्रतिपादितरीतेः सर्वथैव विपरीताऽस्ति। एवञ्च समालोचनमेतदवलोक्य सहृदयहृदयं खेदोपहासयोः संगमपात्रतां प्राप्नोति। परं श्रीमान् ए. बी. कीथमहोदयः स्वीये संस्कृतसाहित्येतिहासे बिल्हणकविरचनाशैलीं श्लाघापुरःसरमुचितरीत्या न्यरूपयत्।[2] बिल्हणः पुराणरीतिव्यतिक्रमं स्वयमेव श्लाघते। तद्ग्रथितश्लेषाः सन्ति नितान्तं सरलाः, प्रहेलिकानां तु काव्येऽत्यन्ताभाव एव, समासाः पुनरल्पा वैदर्भीरीतिसंगताश्च सन्ति ।

ईदृशालोचकानधिकृत्य कविः स्वयमेव वक्ति:—

रसध्वनेरध्वनि ये चरन्ति संक्रान्तवक्रोक्तिरहस्यमुद्राः ।
तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम् ॥[3]

विक्रमाङ्कदेवचरिते कालिदासविरचितरघुवंशस्य प्राचुर्यतः प्रतिबिम्बमवलोक्यते। डा० ब्युह्लरमहोदयः[4] श्रीमानोझामहोदयश्च[5] प्रकरणविशेषेषु साधर्म्यमुपददर्शतुः। श्रीमान् द्विवेदिमहोदयस्तावताप्यसंतुष्यन्, चन्द्रलेखास्वयंवरे इन्दुमतीस्वयंवरस्य विक्रममृगयाविलासे दशरथमृगयायाश्च साधर्म्यमुपवर्ण्य, कविमनुकरणशीलतादोषेण दूषणीकृत्य, भाव-

1 I. A. V p. 325. 2 H. San. Lit. p. 156. 3 विक्र. प्र. २१.
4 Buhler Intro. p. 40. 5 सो. प्रा. इ. पृ. ११३.

सामान्यं पदसामान्यं च प्रतिपाद्य तमुपजहास।[1] तदस्मभ्यं न रोचते। तथाहि :—

बिल्हणो महाकविरभूत्। तद्भावानां बिम्बं रघुवंशे उपलभ्यत इति सत्यमेतत्। परमेतेन तत्रानुकरणशीलतादोषारोपो नैव संगतः। न परं बिल्हणकालिदासयोरपि त्वन्येषां महाकवीनां वर्णनेषु साधर्म्यमुपलभ्यते। किं नाम कालिदासवर्णने नास्त्यन्यकविप्रतिबिम्बम्? अतुलकवेर्माघस्यापि काव्ये भारविकाव्यसाम्यमासाद्यते। लोकोत्तरः कविः श्रीहर्षः स्वकाव्ये बिल्हणकवेश्छायां व्यनक्ति। न ह्येतेन सिद्धयति यदेतेष्वेकोऽपरकवेर्भावानचूचुरत्।

इदमत्र वस्तुतत्त्वम् :– समकालं पृथक्स्थानेषु पृथग्विद्वद्भिश्चिन्तितेषु लिखितेषु वा विषयेषु तादात्म्यमुपलब्धुं शक्यते। न ह्यासीत्कालिदासस्यापि वर्णनं सर्वात्मना निराधारम्। वयं त्वेवं मन्यामहे :– बिल्हणो रघुवंशादिकाव्यानि साध्वध्यैष्टेति निर्विवादोऽर्थः। तत्काव्यानेकवस्तूनि बिल्हणस्मृतिपथाङ्कितानि भवेयुरिति न चित्रम्। काव्यरचनावसरे त एव भावा विचाराश्च निसर्गतो बिल्हणकाव्यविषयत्वं भजेयुरित्यपि नास्वाभाविकम्। अयं पदसमुदायो भावसमूहो वा कविना केनचनास्पृष्टपूर्वो नवेति चेत्कविश्चिन्तयेत्, नहि स काव्यनिर्माणे समर्थः स्यात्। तस्याविरता विचारधारा ईदृशविषयान्तरचिन्तनं सर्वथैवाशक्यं विदधाति। प्रबलकाव्यरचनाप्रवाहपतितेऽवाञ्छत्यपि कवौ, अजानत्येव तस्मिन्, बहवो विषयास्त एव निबद्धाः स्युर्ये पूर्वकविलिखितचराः स्युः। मानसशास्त्रेणैतत्सर्वथा युक्तं स्वाभाविकञ्च प्रमाणीक्रियते।

बिल्हणकविः काव्यार्थचौर्यं स्वयमेव निन्दन् स्वं तदपराधाविषयं नूनमेव साधयति। साम्यमुपदर्शयन्नपि द्विवेदिमहोदयो बिल्हणकवितां क्वचित्कालिदासाधिकचमत्कारमयीं स्वीकरोत्येव।

केवलैतिहासिकरूपेण क्वचिद्दोषस्पृष्टेऽपि विक्रमाङ्कदेवचरिते प्रतिपादिताः प्रायः सकला अपि विषयाः पुरातनशिलालेखादिभिः प्रमाणीक्रियन्ते। तथाप्यद्य यावत्केचन विषयाः सन्त्यप्रकाशिताः।

अथेदमारभ्यते सारांशप्रतिपादनसहितं विक्रमचरितालोचनम्। कविरेवमाह :–

एकदा विधातरि प्रत्यूषसन्ध्यां वन्दमाने पुरन्दरस्तं प्राप्य क्षितौ विद्यमानं धर्मविपर्ययं निवेद्य तदपाकरणार्थं लोककल्याणार्थञ्चातुलपराक्रमस्य कस्यचिन्महात्मनः प्रसूतेरनिवार्यतां प्रार्थयामास। पुरन्दरप्रार्थनां समाकर्ण्य विधाता सन्ध्याम्भःपूरितं स्वचुलुकमवलोकयामास।[2]

तस्मिन् चुलुकमवलोकयत्येव ततस्त्रैलोक्यपरिरक्षणपटुर्लोकोत्तरपराक्रमादिगुण·

---

1 चर्चा. प. ६६–७४. 2 विक्र. प्र. ३१–४६.

विशिष्टोऽद्भुतो महापुरुषः प्रादुरासीद्यस्मादेवोदियाय चालुक्यवंशः । हारीतो मानव्यश्च तद्वंशमूलपुरुषौ बभूवतुः । तद्वंशजा भूपतयोऽयोध्यां नगरीमादिराजधानीं निर्ममिरे । तेषां प्रबलविजयलालसाः केचिन्नृपा दिग्विजयप्रसङ्गाद्दक्षिणस्यां दिशि गत्वा तत्रैव न्यवसन् । अतुलपराक्रमान्विताास्ते नैकदेशान्विजित्य स्वसाम्राज्यं व्यदधुः ।[1]

अस्मिन्नेव वंशे क्रमात्तैलपो नाम (९७३-९९७ ई०) तद्वंशतिलको नृपो बभूव । स हि राष्ट्रकूटान्विजित्य चालुक्यराज्यलक्ष्मीं पुनरुन्निनाय (क) ।[2]

तैलपानन्तरं सत्याश्रयः ( ९९७-१००८ ई० ) शशास ।[3] शूराणामग्रणीः सकल-कलाकोविदः स नितान्तं प्रतापशाली बभूव । ततो जयसिंहः ( १०१५-४२ ई० ) राज्यमकरोत् । लोकोत्तरशक्तिशाली विभूतिभूषितो वीरवरः स पुरन्दरस्वहस्तन्यस्तां पारिजातमालामलभत (ख) ।[4]

(क) तैलपो मालवानाक्रम्य मुञ्जराजं बन्दीचकार । कविरिमं वृत्तान्तं नैव न्यबध्नात् । तैलपो मुञ्जं बन्दीकृत्य जघानेति पुरातनसाधनैः प्रमाणीक्रियते ।[5] भोजराजश्च तद्वैरं प्रतिचकार । अत्र डा० ब्युह्लरमहोदयो यदुल्लिखति न तद्विदुषां संमतम् । भोजः प्रत्यकरोदिति निर्विवादोऽर्थः । परं तत्प्रतीकारभाजनं नासीत्तैलपोऽपि तु तदुत्तराधिकारी विक्रमादित्यो जयसिंहो ( द्वितीयः ) वा स्यात् । विक्रमादित्यजयसिंहयोः कतरोऽभवद्भोजप्रतीकारभाजनमस्मिन्वस्तुनि सन्दिग्धेऽपि नासीत्स तैलप इति निर्णयः ।[6]

(ख) पारिजातमालालाभो जयसिंहस्य रणक्षेत्रमृत्युं सूचयतीति डा० ब्युह्लरमहोदयः।[7] श्रीमान् डा० रामकृष्ण गो० भाण्डारकरमहोदयः पुनः 'मुञ्जवैरशोधं भोजो विक्रमादित्यादगृह्णात्, स एव च युद्धे वीरगतिं लेभे' इति प्रत्यपादयत् ।[8] श्रीमान् वेंकटराम ऐयर महोदयः श्रीमान् एच० सी० रायमहोदयश्चापीममर्थं सम्मन्वाते ।[9] श्रीमान् म० म० पं० ओझामहोदयस्तु जयसिंहस्यैव भोजकृतप्रतीकारपात्रत्वं वक्ति ।[10] श्रीमान् डी० सी० गाङ्गुलीमहोदयोऽपि तन्मार्गमवलम्बते ।[11] परं तेन तत्प्रमाणतयाऽधःस्थं वचनमुपन्यस्तम् :- 'गुर्जरराजभीम (१०२०-१०६४ ई०)-राज्ये भोजश्चालुक्यानाचक्राम । तदात्वे विक्रमादित्यो नासीद्भूतले इति भोजप्रबन्ध-प्रबन्धचिन्तामणिग्रन्थाभ्यां प्रमाणीभवति' इति । तत्तु न क्षोदक्षमम् । तथाहि :—( सावशेषा )

1 विक्र. प्र. ४७-६७. सो. प्रा. इ. प. ३-१४. Life pp. 1-½. 2 विक्र. प्र. ६८-७३. H. I. S. I. p. 52. 3 विक्र. प्र. ७४-७८. H. I. S. I. p. 55. 4 विक्र. प्र. ७९-८६. 5 Life p. 8. H. P. D. p. 89. D. H. N. I. pp. 857-58. 6 H. P. D. pp. 89-91. 7 Buhler Intro. p. 27. 8 E. H. D. p. 61. 9 I. A. XLVIII p. 118 fn. 54. D. H. N. I. p. 867. 10 सो. प्रा. इ. प. ८७ प्रभृति. 11 H. P. D. p. 91.

जयसिंहे दिवमुपयाते तत्तनयस्त्रैलोक्यमल्लापरनामधेय आहवमल्लो ( १०४२-१०६८ ई० ) राज्यसिंहासनमध्यतिष्ठत् (क) ।[1]

सकलगुणशाली बहुलप्रतापमाली दानशीलोऽयं भूपालश्चोलानसकृदजैषीत्,[2] मालवानाक्रम्य भोजराजं तद्राजधानीतो धारातोऽदिद्रवत्,[3] डाहलाधीशं कर्णं जिगाय, द्रविडप्रकाण्डं वीररसस्याभाजनं चक्रे, चोलराजधानीं काञ्चीं च विलुण्ठ्य तदधिपं वनेषु भ्रामयांबभूव (ख) ।[4]

स हि कल्याणनगरीं प्रासादादिमण्डितां विधाय तां स्वराजधानीत्वेनाकल्पयत् (ग) ।[5]

— नास्त्येव तावत्प्रबन्धग्रन्थानां सर्वात्मना प्रामाणिकत्वम् । किञ्च भोजस्य प्राथमिको लेखः १०२० ई० वर्षीयो जयसिंहस्य च १०१८ ई० वर्षीय उपलभ्यते । भोजो राज्यसिंहासनप्राप्त्यनुपदमेव चालुक्यनृपं प्रतिचकारेति सर्वसंमतोऽर्थः । भोजराज्यारम्भस्य विक्रमादित्यमृत्योरस्ति संनिहितत्वम् । जयसिंहराज्यसमाप्तेस्तु ( १०४२ ई० ) स कालोऽत्यर्थं विप्रकृष्टः । अचिरं शासितवतो विक्रमादित्यस्य नोपलभ्यते विशेषवृत्तम् । एतच्च तस्य भोजप्रतिहिंसापात्रत्वं निःसंशयं प्रमाणयति ।

सत्याश्रयजयसिंहयोरन्तराले ( सत्याश्रयस्य भ्रातृव्यः, दशवर्मणः ( यशोवर्मणः ) पुत्रः ) जयसिंहाग्रजो विक्रमादित्यः १००८ ई० वर्षात् १०१४ ई० वर्षं यावद्राज्यमकरोत् । तद्भ्राता अय्यणोऽपि ( द्वितीयः ) ( १०१४-१०१५ ई० ) नाचिराय शशास ।[6] कविरेतौ न निरदिशत् ।

(क) एतस्य यथार्थं नाम सोमेश्वर इत्यभवत् । डा० व्युह्लरमहोदयोऽस्य राज्यकालम् १०४०-६९ ई० इत्युदलिखत् ।

(ख) काव्येऽत्र सर्वत्र द्रविडचोलशब्दावभिन्नार्थबोधकौ स्तः । एवमेव कुन्तलकर्णाटशब्दौ समार्थौ चालुक्यक्षितिं सूचयतः । आहवमल्लश्चोलैरभीक्ष्णं युयुधे इति बिल्हणोक्तिभिः प्रमाणान्तरैश्चावगम्यते ।[7] डा० व्युह्लरमहोदयो डाहलदेशमधिकृत्य नाधिकमुल्लिलेख । डाहलदेशश्चेदिदेशादभिन्नस्तदधीशः कर्णश्च गाङ्गेयदेवतनयोऽतुलपराक्रमादिगुणभूमिरासीदिति लेखैः प्रमाणितं भवति ।[8]

(ग) अत्र डा० व्युह्लरमहोदयः—'चकार' इति पदं निर्माणार्थकं सदपि न तथा

1 विक्र. प्र. ८७. H. I. S. I. p. 69. 2 A. I. pp. 46–47. H. I. S. I. p. 335. 3 H. P. D. pp. 92, 94. 4 विक्र. प्र. ८८–११८. Bom. Gaz. pp. 214–15, 441. 5 विक्र. द्वि० १–२५. Bom. Gaz. pp. 215, 420. 6 H. I. S. I. p. 58. सो. प्रा. इ. प. ८३ टिप्पणी. 7 H. I. S. I. pp. 72–81. 8 D. H. N. I. pp. 777–786.

अधिगतसकलवैभवोऽपि क्षितीशः पुत्राभावेनात्यन्तं संतप्तचित्तोऽभवत् । तत्प्राप्तये उपायान्तरमपश्यन् तपोविधानाय कृतनिश्चयः स राज्यचिन्तां मन्त्रिषु विनिवेश्य स्वदेवीमात्रसहायो भगवन्तं भूतपतिं शङ्करमाराधयामास (क)।[1]

नृपस्य कठोरव्रतचर्यया प्रसन्नमानसः शङ्करः तस्मै पुत्रत्रयं मध्यमस्य च लोकोत्तरगुणमण्डितत्वं प्रसादीकृतवान् । अमृतायमानामिमां वाचं निशम्य नितान्तमानन्दं विन्दमानो नृपः पारणाविधिं समाप्य विप्रेभ्यो धनं च दत्त्वा भूयोऽपि राज्यकर्माण्यन्वतिष्ठत् ।[2]

शुभे मुहूर्ते राज्ञी पुत्रमेकमसोष्ट, यो हि सोमेश्वर इत्यभिधानमाससाद । ततो दिनेषु गच्छत्सु राज्ञी भूयोऽपि गर्भिणी बभूव । तदानीं दिव्यदोहदैश्चिह्नान्तरैश्च भाविकुमारस्यालौकिकवीर्यादिगुणान्सूचयन्ती नितान्तं नृपनयनानन्ददायिन्यासीत् । अद्भुतधाम्नि लग्ने देवी पुत्ररत्नमजीजनत् । तस्मिन्नवसरे प्रकृतयश्चेतनाचेतनाः सकला अपि आनन्दातिरेकमभजन्त । देवा अपि प्रसूनवर्षणादिभिः स्वानन्दमसूचयन् । स्वीयैरद्भुतैर्गुणैः स बालो विक्रमादित्य इत्याख्यामध्यगच्छत् । बाललीलास्वेव स्वीयाद्भुतशौर्यादिलक्षणानि दर्शयन्नल्पेनैव कालेन शस्त्रास्त्रोभयविद्यासु परं प्रावीण्यमाप । विक्रमात् परं तृतीयोऽपि पुत्रोऽजायत, यो हि जयसिंह इति नाम्ना ख्यातिमाससाद (ख)।[3]

---

बोद्धव्यम् । यस्मादिदं पुरं प्रागेवावर्त्तत इत्याह ।[4] तत्तु न संगतमिति डा० रामकृष्ण गो० भाण्डारकरमहोदयो जे० एफ्० फ्लीटमहोदयश्च सयुक्ति प्रत्यपादयताम् ।[5] येषु लेखेषु कल्याणनगरसत्त्वं डा० ब्युह्लरमहोदयैरनुमितं ( 'कार्तिकेयपरिरक्षणप्राप्तकल्याणपरंपरेति प्रवर्द्धमानपरमकल्याणविजयोद्यमे' इति च ) तत्रत्येषु पदेषु विद्यमानं कल्याणपदं मङ्गलार्थं शुभार्थमेवाभिधत्ते नतु नगरार्थम् । कल्याणनगरस्य सर्वतः प्रथमं निर्देशः १०५३ ई० वत्सरे ( सोमेश्वरराज्यसमये ) एवोपलभ्यते ।

(क) चिन्त्यमेतद्बिल्हणवचनम् । १०४२ ई० वत्सरसन्निधौ स राज्यमासादयामास, ३०, मार्च १०६८ ई० दिवसे च पञ्चत्वमञ्चति स्मेति पञ्चविंशतिवर्षाणि शशास । बिल्हणोक्तौ सत्यत्वेनाभ्युपगतायां तद्देहावसानसमये त्रिभिरपि तत्तनयैरल्पवयस्कैरेव भाव्यम् । परं चोलदेशराजराजाधिराजस्य ( प्रथमस्य ) १०४६ ई० वर्षीयलेखेनेदं प्रमाणीक्रियते यदस्य ततः पूर्वं सोमेश्वरेण युद्धमभूत्, यत्र हि विक्रमादित्योऽपि सहाय आसीत् । आहवमल्लस्य तृतीयः पुत्रो जयसिंहोऽपि १०६६ ई० वर्षात्प्रागेव युद्धायालमभवदिति सिध्यति । एवञ्चाहवमल्लराज्यलाभात्पूर्वमेव सोमेश्वरविक्रमादित्ययोर्जन्माभवदिति सिद्धम् ।[6]

(ख) अथ यावत्प्रकाशितेषु लेखेष्वाहवमल्लस्य तृतीयः पुत्रो न निर्दिष्ट इति डा०

---

1 विक्र. द्वि. २६–४३. 2 विक्र. द्वि. ४४–५६. 3 विक्र. द्वि. ५७ – तृ० २५. 4 Buhler Intro. p. 28 fn. 5 Bom. Gaz. pp. 215, 335 note 1, 420, 427 note 3, 428 note. 6 सो. प्रा. इ. प. ९१–९२ टिप्पणी.

विक्रमे विक्रमाक्रान्तवैरिवृन्दे सकलकलाकोविदे च जाते तत्तातस्तस्मै यौवराज्यं दित्सति स्म। स तु ज्येष्ठभ्रातरमतिक्रम्य तत्पदं स्वीकर्तुं न्यषेधत्। विविधाभिरुक्तिभिर्युक्तिभिश्चाहवमल्लेन कृतेऽपि नितान्तमाग्रहे नामन्यत यदा तु विक्रमस्तदा सोमेश्वर एवाभूद् युवराजः। किन्तु राज्ययुवराजयोरुभयोरपि भारं विक्रम एवावहत्। ज्येष्ठे प्रतिपत्तिपात्रत्वं प्रापितेऽपि राज्यलक्ष्मीर्विक्रममेवान्वमन्यत। सोमेश्वरस्तु नामत एव युवराजो बभूव (क)।[1]

जनकानुज्ञातो विक्रमो बहून्महाहवानजयत्। स हि चोलानभीक्ष्णं विजिग्ये, तद्राजधानीं काञ्चीञ्च विलुलुण्ठ। मालवाधीशः परिभ्रष्टनिजराज्यपुनःप्राप्तये तच्छरणं ययौ। विक्रमस्तद्रिपून्विजित्य तस्मै निष्कण्टकं राज्यमार्पयत्।[2] किञ्च स गौडान् कामरूपांश्च व्यजयत्।[3]

एकदा विक्रमो दिग्विजयार्थं प्रतस्थे। तद्गजा मलयं चन्दनवृक्षरहितमजनयन्। स केरलेशं यममन्दिरातिथिं चकार। सिंहलनृपो भयविह्वलमानसस्तच्छरणमयासीत्। स गाङ्गकुण्डं नगरं विजित्य, चोलनरेशं मानहीनं विधाय चक्रकोटं नगरं च जिगाय (ख)।[4]

ब्युह्लरमहोदयः प्रत्यपादयत्।[5] परमद्यत्वे न परं तृतीयपुत्रस्यापि तु विष्णुवर्द्धनविजयादित्यनाम्नश्चतुर्थपुत्रस्याप्यस्तित्वं प्रमाणीभवति।[6]

(क) बिल्हणः सर्वत्र विक्रममेव विशेषतो देवदयादृष्टिभाजनं योग्यतरं च प्रतिपादयन् तस्य निर्दोषत्वमसाधयत्। सत्यमेव कविर्विक्रमाङ्कचरितस्य यथासाध्यमत्यर्थं सर्वात्मनोत्कर्षं साधयितुमचेष्टत। एतेन डा० ब्युह्लरमहोदयैरन्यैश्चेतिहासकोविदैः कविर्नितान्तमुपहासास्पदत्वं नीतः।[7]

(ख) विक्रमो राज्यासादनसमयात्प्रागेव बहुवत्सराणामाहवमल्लरिपुभिरभीक्ष्णं युयुधे।[8] कविस्तद्युद्धानि विच्छित्तिपुरःसरं तृतीयसर्गस्यान्ते सामान्यतश्चतुर्थसर्गारम्भे च विशेषतो दिग्विजयव्याजेनावर्णयत्। युद्धानीमानि नैककालमभवन्निति प्रामाणिकं तत्त्वम्। आपाततस्तु तेषां क्रमशोऽव्यवधानेन च भावित्वं प्रतीयते। कविवर्णितो विक्रमस्य दिग्विजयो न क्षोदक्षमः। (सावशेषा)

1 विक्र. तृ. २६–५९ 2 H P.D. pp. 123–24. D.H. N. I. p. 873ff. 3 विक्र. तृ. ६०–७७. D. H. N. I. pp. 203, 204, 249, 250, 331, 356. 4 विक्र. चतु. १–३०. H. I. S. I. p. 86. 5 Buhler Intro. p. 30 fn. 6 H. I. S. I. pp. 78, 335. A. I. pp. 114, 120, 138. 7 Buhler Intro. pp. 31 fn. 33 fn. 37–38 fn. I. A. V. p. 335. सो. प्रा. इ. प. १०६. 8 H. I. S. I. pp. 70–71. A. I. p. 48.

—डा० व्युह्लरमहोदयोऽत्र कवितात्पर्यमनवगच्छन्, काव्यार्थं वैपरीत्येन योजयन् कविं दूषयति ।[1] तथा च तस्योक्तिः—'एतेषां युद्धानां कालानुसारं क्रमनिर्णयो दुष्करः । परं तत्कृतोऽन्तिमजयो दक्षिणस्यामभूदिति निश्चितम्' इति । स किलादौ 'विक्रमादित्यः आहवमल्लानुज्ञया विजययात्रामारभत' इति उक्त्वा तृतीयचतुर्थसर्गयोरुभयोरपि सकलयुद्धानि सहैव परिकलयाञ्चकार । तत एव च स कविं दूषयति । किञ्च स कविप्रतिपादितक्रमं विपर्यासयन् विषयसाङ्कर्यमापादयति ।

रायबहादुर श्रीमान् हीरालालमहोदयो डा० व्युह्लरमहोदयीयमेतदसंगतं मतमंशतो निराचकार । स हि वक्ति :—[2]'युद्धान्तराणां विषये कालक्रमस्य निर्णेतुमशक्यत्वेऽपि गाङ्गकुण्ड – वेंगि–चक्रकोटानां विजयोऽनुक्रममेवाभूदिति संभाव्यते' ।

गाङ्गकुण्डं चोलसाम्राज्यप्रधाननगरेष्वन्यतममासीत् । मद्रासप्रदेशे ट्रिचिनापल्ली–(District)–भागे वडियरपलियम (Taluka)–विभागेऽस्य भग्नावशेषा अद्याप्येतद्वैभवं सूचयन्ति । राजेन्द्रचोलोऽतिपराक्रमप्रतापशाली नृपतिरासीत् । गङ्गां यावत्कृतविजयत्वात्स 'गंगैकोण्ड' इति विरुदं दधार । गाङ्गकुण्डपुरं तेनैव निरमायिषत । अद्यत्वेऽपि तद् गंगकुण्ड-शोलपुरमित्युच्यते ।[3] डा० व्युह्लरमहोदयोऽस्य निरूपणं विशदतया कर्तुं नालमभवत् ।

श्रीमान् हीरालालमहोदयो बस्तरराज्यगतमद्यतनं 'चित्रकूट'नामकं स्थानं पुरातनचक्रकोटेनाभेदयति । अनेके दाक्षिणात्या नृपतयः काले काले राज्यमेतमाचक्रमुः । चक्रकोटसन्निधावेव वैराग्रामस्थानमासीत् । तत्र च हीरकखनिरभूत् । तामिलभाषा-लेखेषु चक्रकोटः 'शक्करकोट्टम्' इति निर्दिश्यते, तेनैव च साकं सर्वत्र वज्रदेशः (वयिरागरम्—अद्यत्वे वैरागढ इति ख्यातः) उल्लिख्यते । राजेन्द्रचोलो वैरागरम्-स्थानादनेकदन्तिनिवहान् विलुण्ठ्यानैषीत् । एतत्प्रदेशे गजाधिक्यम् 'आइने अकबरी'-ग्रन्थेऽप्युपलभ्यते । इदमत्रावधेयम् :—बिल्हणेनायं विजयो विशेषविच्छित्यैव निरूप्यते :—

आक्रान्तरिपुचक्रेण चक्रकोटपतेः परम् ।
लिखिताश्चित्रशालासु तेनामुच्यन्त दन्तिनः ॥[4]

श्रीहीरालालमहोदयीयैतद्गवेषणायाः प्राक् सर्वेऽपीतिहासलेखकाश्चक्रकोटं धारा-सन्निहितमालवदुर्गमेवान्वमन्यन्त । [5]इदमत्र तत्त्वम्—चक्रकोटे धारावर्षो नाम नृपतिर्बभूव । इतिहासविदो 'राजकेसरिवर्मा (कुलोत्तुङ्गचोलः) धारानृपतिं चक्रकोटसन्निधावजयद्' इति व्याचचक्षिरे । वस्तुतस्तु 'राजकेसरिवर्मा राजानं धारावर्षं चक्रकोटसन्निधावजयद्'इत्यर्थः ।

1 Buhler Intro. p. 31 and fn. 2 Epi Ind. IX pp. 178–79, X pp. 25–27. 3 A. I. pp. 49, 187. 4 विक्र. चतु. ३०. 5 A. I, p. 131, Bom. Gaz. pp. 215, 442. सो. प्रा. इ. प. ९४ टिप्पणी ।

मालवेशसाहाय्यदानमधिकृत्य श्रीमान् ओझामहोदयस्त्वेवमाह :–[1] 'विक्रमादित्यो यस्मै मालवेशाय साहाय्यमददात् स परमारवंशोद्भवो जयसिंहः स्यात्, यो हि भोजराजादनन्तरं धारासिंहासनमधिरुरोह । किन्तु तदात्वे तद्राज्यं शत्रुसेनापरिवेष्टितमासीत्, यां निराकर्तुं स नासीदलम् । ततश्च तद्बान्धव उदयादित्यस्तद्राज्यमपाहरत् । एवञ्च जयसिंहः स्वराज्यपुनःप्राप्तिलालसया कल्याणमगादिति संभाव्यते । किन्तु स उदयादित्यं निरस्य मालवराज्यपुनरासादनसमर्थोऽभवदिति नोपलभ्यते । यतो हि जयसिंहस्य ताम्रशासनम् १०५५ ई० वत्सरीयमुपलभ्यते, १०५९ ई० वत्सरे चोदयादित्यः शशासेति उदयपुरस्य ( ग्वालियर ) शिलालेखादधिगम्यते । एवञ्च प्रागुक्तवत्सरद्वयाभ्यन्तरे कदाचन जयसिंहः साहाय्यमयाचत' इति ।

चिन्त्यमेतत् । श्रीमतो डी० सी० गाङ्गुलीमहोदयस्य 'परमारवंशेतिहासः' विषयमेतं विशदयन् श्रीमत ओझामहोदयस्य मतासंगतिं बिल्हणोक्तियाथार्थ्यं च प्रमाणीकरोति ।[2] तथा च तत्रेदमस्ति निरूपितम् :—

कलचुरिकर्ण–चालुक्यभीम ( प्रथम )–समवेतबले भोजदेवबले च युध्यमाने एव भोजोऽसाध्यरोगग्रस्तः सन् पञ्चत्वमञ्चति स्म । तदा तदुत्तराधिकारी जयसिंहः आहवमल्लं साहाय्यमयाचत । आहवमल्लो विक्रमाय कार्येऽस्मिन्न्ययुङ्क्त । विक्रमसाहाय्येन स भूयोऽपि निजराज्यमाससाद । स किलानेकवर्षाणि शास्ति स्म, परं तस्य राज्यान्तकालो न निश्चीयते ।

सोमेश्वरः ( द्वितीयः ) १०६८ ई० वर्षे राज्यमलभत । स खलु भीमोत्तराधिकारिणा कर्णेन ( १०६३-१०९४ ई० ) संगत्य जयसिंहराजधानीमाचक्राम । तस्मिंश्च तुमुले युद्धे जयसिंहः प्राणानत्याक्षीत् । तस्मिन्नुपरते तदरातिषु च नाचिराय धारामधिकृतवत्स्वपि जयसिंहक्रमानुयायिना उदयादित्येन शाकंभरीपतिचाहमानवंशोद्भवदुर्लभ ( तृतीय ) –नृपतिसाहाय्येन निरस्तास्ते शत्रवः, धारा च भूयोऽपि परमारवंशजैरध्यकारि ।[3]

श्रीमता ओझामहोदयेन यः शिलालेखः प्रमाणत्वेनोपन्यस्तः स वस्तुतः १५१३ ई० वर्षीयो नितान्तं खण्डितश्चास्ति । उदयादित्यः १०५९ ई० वत्सरे उदयपुरमन्दिरं निर्ममे इति तत्रास्ति नूनं लिखितम्, परं स तदा साधारणनृपतिरूपेणोदयपुराच्छासनमकार्षीन्न पुनर्धाराधीशतयेति निश्चितम् ।[4] ( सावशेषा )

---

1 सो. प्रा. इ. प. ९३, ९४ टिप्पणी च 2 H.P.D. pp. 123–124. D. H. N. I. p. 873 ff. 3 H. P. D. pp. 127–136. 4 H. P. D. p. 130 note 2.

इत्थं साधितसर्वभूमिपालो विक्रमः प्रत्यावर्त्तमानो मार्ग एव नानाविधदुर्निमित्तानि पश्यन्सहसैव नितान्तमुद्विवेज । कृष्णातटकृतावस्थानोऽमङ्गलशान्तये पुण्यकर्माण्यन्वतिष्ठत् । तदैव कल्याणात्समागतः कश्चिद्दूतो विक्रममेतामकल्याणवार्त्तामाचचक्षे :—'विजितसकलनृपं भवद्विजयमाकर्ण्याहवमल्लो भृशमानन्दितोऽभूत् । परमकाण्डे एव दाहज्वराक्रान्तो यदा तु स्वरोगदूरीकरणसाधनं किमपि नापश्यत्तदा दक्षिणापथजाह्नवीं तुङ्गभद्रामासाद्य तत्र जलसमाधिमगृह्णात्' इति ।[1]

निजजनकनिधनवृत्तान्तं निशम्य विक्रमो नितान्तं दूयमानमानसोऽतप्यत । पितुरौर्ध्वदेहिकीं क्रियां संपाद्य अग्रजसान्त्वनाय कल्याणं प्रतस्थे ।

पुरः समागतेनाग्रजेन संमानितः पुरीं प्रविश्य चिरमखिद्यत । तदनु तावुभौ चिराय स्नेहवृत्त्या दिवसानत्यवाहयताम् । गुणैर्गरिष्ठोऽपि विक्रमो ज्येष्ठं पितृतुल्यममंस्त । दिग्विजयोपार्जितं प्राज्यं वस्तुजातमपि स सोमेश्वरायोपहारीचकार ।[2]

परं कियताऽपि कालेन दैवदुर्विपाकात्सोमेश्वरोऽत्यर्थं दुर्विनीतोऽन्यायपरायणश्च भूत्वा चालुक्यराज्यलक्ष्मीं निजदुर्गुणैरत्यन्तं कलङ्कमयीं व्यदधात् ।[3]

कल्याणवासान्निजभ्रातृदुश्चरितैरयशसोऽपमानस्य च भाजनं नूनं स्यामिति, भ्रात्रा च दुर्नीतिपरित्यागो दुष्कर इति च यदा विक्रमो व्यलोकयत्तदा स्वानुजं जयसिंहमितरांश्च निजानुयायिन आदाय कल्याणान्निरगात् । एतदविषह्य सोमेश्वरोऽस्य पृष्ठतः पुष्कलं बलं प्राहिणोत् । स्वाग्रजबलेन साकं योद्धुमनिच्छन्नपि गत्यन्तराभावाद् विक्रमो युद्धाय सन्नद्धोऽभवत् । क्षणादेव च सोमदेवसैन्यं विध्वस्तं व्यदधात् । असकृत्सैन्यं प्रेषयन्नपि सोमदेवो विफलमनोरथो बभूव । विजयलक्ष्मीश्च विक्रममेव वव्रे ।[4]

भ्रातृदुश्चरितचिन्तनान्मन्युपङ्ककलुषमानसो विक्रमः तुङ्गभद्रामयासीत् । तत्तटकृतावस्थितिश्च चोलसंमुखं युद्धाग्रहमगाहत । परं कञ्चित्कालं वनवासमण्डलमेवाध्युवास ।[5]

—प्राच्यचालुक्यवंशजे राजराजे (वेंगिदेशाधिपतौ) १०६२ ई० वर्षे दिवमुपगते विक्रमस्तद्राज्यमभिययौ । तदा जयसिंहो धाराधीशतया विक्रमपक्षमवालम्बत ।[6] सोमेश्वरश्च (द्वितीयः) गुर्जरराजकर्णेन संगत्य जयसिंहमाक्रान्तवान् ।[7] कर्णश्च प्रायशः १०६३ ई० वत्सरे राज्यसिंहासनमारुरोह । प्रमाणैरमीभिरिदं निःसंशयं प्रमाणीभवति यज्जयसिंहः १०७० ई० वर्षं यावच्छास्ति स्म, उदयादित्यस्य च १०५९ ई० वत्सरे धाराधीशत्वं सर्वथैवासंभाव्यमिति ।

---

1 विक्र. चतु. ३१–६८. 2 विक्र. चतु. ६९–९६. 3 विक्र. चतु. ९७–११३ 4 विक्र. चतु. ११४–पञ्च. ९. 5 विक्र. पञ्च. १०–२३. 6 H. P. D. pp. 125–127. I. H. Q. XIII pp. 87–88. 7 H. P. D. pp. 127–128.

विक्रमे युद्धाय प्रयाते तद्बलघोररवं निशम्य मलयदेशभूभुजो विक्रमस्य पूर्वदर्शितपराक्रममस्मरन् । कोङ्कणदेशाधिपो जयकेशी विनयावनतः सन् तस्मै अनल्पं धनराशिमुपाजहार (क) ।[1]

आलुपनृपतिस्तच्छरणमुपगम्य विभूतिभूषितो बभूव । विक्रमपराक्रमप्रतापादि विलोक्य केरलदेशाङ्गना भृशमदूयन्त ।[2]

ततो विक्रमश्चोलमभिषेणयति स्म । चोलस्तु विक्रमेण स्वस्य योद्धुमशक्यत्वमवधार्य सन्धिप्रार्थनार्थं स्वदूतं विक्रमसभां प्रेषयामास । विक्रमस्तं सन्धिं स्वीकृत्य चोलनरेशसन्ध्यनुसारं तुङ्गभद्रां प्रत्याययौ । चोलस्तत्तटं प्राप्य स्वकन्यां विक्रमाय अददात् । चोलनृपतौ काञ्चीं प्रत्यावृत्तेऽचिरादेव विक्रमश्चोलनिधनं तद्राज्यविप्लवं

(क) अत्रेत्थमाह डा० ब्युह्लरमहोदयः—[3]'अत्र निर्दिष्टो जयकेशी कादम्बवंशोद्भवो जयकेशी ( द्वितीयः ) आसीद्, यो हि गोपकपुर ( गोवा )–राज्यं शास्ति स्म । तस्य पर्माडिविक्रमादित्येन मैत्रीसम्बन्धः कादम्बलेखेषु निर्दिश्यते । जयकेशी ( द्वितीयः ) विक्रमपुत्रीं मैलालदेवीमुदवहत् । तस्य ( जयकेशिनः ) पुत्रीं मैणलदेवीं मणहिल्लपट्टननृपतिः कर्ण उपयेमे । तयोरेव तनयो जयसिंहसिद्धराजो बभूव' इति ।

चिन्त्यमिदम् । कविरत्र ( पद्य० २५ ) यं जयकेशिनं निर्दिशति स जयकेशी ( प्रथमः ) आसीत् । सामन्तषष्ठदेवस्य पुत्रोऽयमादौ सोमेश्वरस्याहवमल्लस्य सामन्तनृपतिरासीत्, कालान्तरे तु विक्रमस्य प्रधानसहायको बभूव । स किल गोपकपट्टनं ( गोवा ) स्वराजधानीं कृत्वा, चालुक्यविक्रमादित्यचोलभूपालौ काञ्च्यां मित्रे व्यदधादिति कादम्बलेखैः सिद्ध्यति ।[4] अस्य राज्यकालः १०५० ई० वत्सरात् १०८० ई० यावत् सिद्ध्यति । यत्तु डा० ब्युह्लरमहोदयेन जयकेशि ( द्वितीय )–पुत्र्या मैणलदेव्याः कर्णविवाहो निर्दिष्टस्तदपि चिन्त्यम् । यतः कर्णराज्यकालः १०६३–६४ ई० तः १०९३–९४ ई० वर्षं यावदस्ति निर्णीतः,[5] जयकेशी ( द्वितीयः ) च ११०४ ई० वत्सरसंनिधौ राज्यसिंहासनमध्यतिष्ठदिति निश्चितम् ।

अयमेव जयकेशी ( प्रथमः ) विक्रमाय स्वकन्यामार्पयत् । परं कविरिमं वृत्तान्तं न निरदिशत् । विक्रमादित्यतनयाया मैलालदेव्या उद्वोढा जयकेशी द्वितीय एवासीत् । अत्र विद्यन्ते बहूनि प्रमाणानि ।[6]

---

1 विक्र. पद्य २४–२५. 2 विक्र. पद्य. २६–२७. 3 Buhler Intro. p. 34 note 3. 4 सो. प्रा. इ. प. १०६ टिप्पणी. Bom. Gaz. pp. 439, 444, 565. 5 D. H. N. I. p. 963. 6 Bom. Gaz. pp. 452, 456, 458 note 2. सो. प्रा. इ. प. ११९ टिप्पणी.

चाश्रौषीत् । ततश्च स्वश्यालकं चोलसिंहासनेऽभिषेचयितुं काञ्चीमयासीत् । काञ्चीमधिगत्य तद्रिपून् विनाश्य गाङ्गकुण्डमगच्छत् । तत्रापि विजयमासाद्य स्वश्यालकं राज्यसिंहासनासीनमकरोत् । मासमात्रं गाङ्गकुण्डे कृतवसतिः पुनरपि तुङ्गभद्रां समाजगाम (क) ।[1]

विक्रमस्यायमुद्यमो विफलीबभूव । यतोऽचिरेणैव प्रवृत्ते नवराज्यविप्लवे विक्रमश्यालकश्चोलसूनुः पञ्चत्वमाप, वेङ्गिनाथो राजिगश्च काञ्चीसिंहासनमात्मसाच्चकारेति वृत्तं विक्रमोऽश्रृणोत् ( ख ) ।[2]

---

( क ) डा० ब्युह्लरमहोदयो विक्रमस्य गाङ्गकुण्डात्प्रयाणं काञ्च्यां च मासमात्रं निवासमुल्लिखति ।[3] परं तदसंगतम् । कविर्गाङ्गकुण्डे एव निवासं निरदिशत् ।

(ख) डा० ब्युह्लरमहोदयोऽत्र सर् वाल्टर् इलियॉट्महोदयवचनमुद्दिश्य प्रतिपादयति :–[4] 'चोलानामेको वंशविशेषः ( भेदः ) वेंगिदेशमात्मसादकरोदिति तेन ( वाल्टर् इलियॉट्महोदयेन ) प्रत्यपादि । राज्यमिदं विवाहसम्बन्धाद्राजेन्द्रचोलेनालाभि' इति । ततश्च स (डा० ब्युह्लरमहोदयः) सर् वाल्टर् इलियॉट्महोदयोक्तिमनुवदति :—'तत्पुत्रो विक्रमदेवकुलोत्तुङ्गचोलस्तदुत्तराधिकारी बभूव । वेंगिदेशराजप्रतिनिधेः स्वपितृव्यविजयादित्यस्य निधनानन्तरं नृपतिः स्वपुत्रं राजराजं तत्पदेऽभिषिषेच । परमेकमेव वत्सरं ( १०७८ ई० ) परिपाल्य तद्राज्यं स्वानुजवीरदेवचोलायार्पयितुं स तत्पदमत्याक्षीत् । वीरदेवचोलः कुलोत्तुङ्गचोल इति विरुदं दध्रे । तस्य ताम्रशासनानि १०७९ ई० वर्षात् ११३५ ई० वर्षं यावत् प्राचुर्यतोऽतिसंख्याकान्युपलभ्यन्ते । ततश्च चालुक्याः पुनरप्यांशिकमधिकारं समध्यतिष्ठिपन्निति प्रतीयते' इति ।

पुनरग्रे तेनोदलेखि :–'बिल्हणनिर्दिष्टो राजिगो लेखोक्तराजराजाभिन्न इति निःसंशयम् । यतो राजिगेति नाम राजराजस्यैव लौकिकं रूपमवभासते । तयोश्च वेंगिदेशशासनकालः प्रायशोऽभिन्न एवोपलभ्यते। चेदिदमभेदसाधनं संगतं, तदेदं फलति यद् विक्रमादित्यो यां चोलनरेशपुत्रीमुदवहत् स वीरदेवकुलोत्तुङ्ग आसीत्, विक्रमश्च यस्मै चोलराजसूनवे सिंहासनमदापयत्स हि राजराजराजिगस्य भ्रातासीदिति सिध्यति' इति ।

परमेतदभेदसाधनं विचारसरणिश्चासंगतिदोषदूषिते स्तः । डा० ब्युह्लरमहोदयस्याधार एवासंगतः । तथाहि :–

विषयोऽयं विस्ताराधिक्यमपेक्षते । पुलकेशि ( द्वितीय )–राज्यकाले ( ई० सप्तमशतकारम्भे ) चालुक्यानामेकः शाखाविशेषो वेंगिदेशमधिचकार ।[5] आदौ वातापि-

---

1 विक्र. पद्म. २८–षष्ठ २५. 2 विक्र. षष्ठ. २६. 3 Buhler Intro. p. 35. 4 Buhler Intro. p. 35 fn 4. 5 सो. प्रा. इ. प. १३५.

चाळुक्याङ्गभूताप्यसौ शाखा कालान्तरेण स्वातन्त्र्यं स्वीचकार।[1] राजेन्द्रचोळोऽस्य वंशस्य अष्टाविंशतितमो नृपतिरासीत्। चोलवंशेनायं गाढं सम्बद्धोऽभूत्।[2] अयं च सम्बन्धो नासीत्तन्मात्रकालिको नूतनो वाऽपि तु चिरादेव (वंशीयपुरुषत्रयेण) प्रवृत्तोऽभवत्। तत्पितामहो विमलादित्यः (१०११–१०२२ ई०), चोलनृपतिराजराज (प्रथम, ९८५–१०१३ ई०)–पुत्रीं कुन्दव्वयरनाम्नीमुपयेमे। तत्पिता राजराजः (प्रथमः, (१०२२–१०६३ ई०) राजेन्द्रचोल (गङ्गैकोण्डचोल–१०१२—१०४३ ई०)–पुत्रीमंमङ्गदेवीमुदवहत्। सोऽपि च स्वमातुलराजेन्द्रदेवपुत्रीं मधुरान्तकीं पाणिग्रहणेनान्वगृह्णात्।[3]

स्वपितरि राजराजे संस्थिते सः (राजेन्द्रचोलः) नियमतो वेंगिदेशाधिपतिर्जातोऽपि, स्वपितृव्ये विजयादित्यभूभुजि वेंगिराज्यं न्यस्यति स्म। चोलैः प्रगाढं सम्बद्धाः प्राच्यचाळुक्याश्चोलानामिव राज्यचिह्नान्यधारयन्।

राजेन्द्रचोलः स्वं चोलराज्याधिकारिणममंस्त। चोलराज्ये एवायं पोषितो बाल्यं यापयामास।[4] तन्मातामहस्तं दत्तकतनयत्वेन पर्यगृह्णादित्यनुश्रूयते, परं तन्न संगतम्। एवं स्थितेऽप्यादौ स चोलप्रातिनिध्यं भजन् शास्ति स्मेति ज्ञायते। स हि स्वमातुलवीरराजेन्द्राय (१०६२–६३ ई० वर्षात् १०६३–६४ ई० वर्षाद्वा १०७०ई० यावत्) तद्युद्धेष्वसकृत्साहाय्यमार्पयत्। वेंगिदेशराजप्रतिनिधिशासकः कोऽपि स्यात्–तदिदं स लेशतोऽपि नाचिन्तयत्। स किल चोलमहाराज्यसम्राड् बुभूषति स्म, नतु वेंगिदेशनृपतिः। विजयादित्यः (सप्तमः, १०६२–६३—१०७६ ई०) वेंगिराज्यमन्यायत आत्मसाच्चकारेत्युच्यते, परं न तत्सकलविद्वत्संमतम्। वीरराजेन्द्रो वेंगिदेशाक्रान्तॄन् विजित्य विजयादित्यं तद्राज्यशासकं न्ययुङ्क्तेति लेखैरुपलभ्यते। अत्रार्थे च राजेन्द्रचोलः सर्वात्मना दत्तानुमोदनः स्यादिति संभाव्यते।[5]

ई० १०७० वर्षे वीरराजेन्द्रे उपरते राजेन्द्रमनोरथः सफल इवासीत्, परं विक्रमादित्यः कृतहस्तक्षेपः स्वश्यालकमधिराजराजेन्द्रं चोलराज्येऽभ्यतिष्ठिपत्।[6] स्वार्थसिद्धिमवेक्ष्यैवात्र विक्रमः प्रावर्तिष्ट।[7] यदित्थं तद्राज्यातिसंनिहितं रिपुराज्यं चिरमित्रभावमुपगच्छेत्। एतद्राज्यवंशजैः काले कालेऽसकृद्युयुधिरे चाळुक्याः, एतद्राज्यं च सदैव चाळुक्यानां भयावहमभवत्। (सावशेषा)

---

1 सो. प्रा. इ. प. १४७. 2 A. I. p. 49, 158 Pedigree of the Cholas. पश्यत परिशिष्टम् ग. 3 H. I. S. I. pp. 77, 341. 4 A. I. p. 125. 5 A. I. pp. 129–130. 6 सो. प्रा. इ. प. १७१. 7 I. A. p. 128,

वृत्तमिदमुपलभ्य विक्रमो राजिगं प्रतिकर्तुं तत्कालमेव बलं सज्जीकृत्य काञ्चीं प्रतस्थे। राजिगस्तु सन्धिबन्धेन सोमदेवं विक्रमस्य पृष्ठकोपाय प्रगुणमकरोत्। सोमेश्वरस्तु भ्रातृप्रतीकारोचितावसरं विज्ञाय कुलरिपुणापि चोलराजिगेन सन्धिबन्धे दोषं नामन्यत। विक्रमे राजिगसैन्यसमीपवर्त्तिनि सोमेश्वरोऽपि कल्याणात्प्रस्थितो विक्रमबलपृष्ठतोऽवतस्थे।[1]

स्वाग्रजेन युद्धस्यावश्यविधेयतामुपलभ्य विक्रमश्चिरं चेखिद्यते स्म। भ्रातृयुद्धं कथमपि नोचितमिति च निरणैषीत्। भ्रातृसकाशं सन्देशवचनानि संप्रेष्य भ्रातृयुद्धावरोधाय चिरमचेष्टत। स तु शपथशतैः सर्वं प्रपद्य क्षणमनुगुणं विक्रमं प्रहर्तुमैक्षत। तथापि विक्रमो युद्धसन्नद्धो नाभवत्। परं शिवः स्वप्ने प्रत्यक्षीभूय विक्रमं युद्धायादिदेश।

---

—विक्रमे चोलराज्यान्निर्गतमात्रे एव नवविप्लवे प्रवृत्तेऽधिराजराजेन्द्रः प्राणानत्यजत्, राजेन्द्रचोलश्च तद्राज्यं निजाधीनमकरोत्। इत्थमनायासेनैवाधिष्ठितमहासाम्राज्यश्चोलचालुक्यराज्ये एकीभावमनयत्।[2]

ई० १०७६ वर्षे दिवमुपयाते तु विजयादित्ये राजेन्द्रः स्वतनयं मुंमडिचोलं (राजराजं) वेंगिराजप्रतिनिधिशासकमकार्षीत्, किन्तु वर्षमात्रमेव परिपाल्य स तत्पदं परितत्याज। ततश्च तद्भ्राता वीरचोलः १०७८ ई० वर्षे तत्पदं जग्राह, १०८४ ई० वर्षं यावच्च तत्र स्थित्वा प्रत्याययौ। तदनन्तरं चोलगंगस्तत्पदं गृह्णन्नपि न चिरं तत्रातिष्ठदिति पुनरपि वीरचोलस्तत्पदमगत्या स्वीचकार। १०८८–८९ ई० वर्षं यावत्स तत्रासीत्। परं तत्पश्चादित्थं शासकनियुक्तिप्रणाली परित्यक्ता स्यादिति संभाव्यते।[3]

सर् वाल्टर् इलियॉट्महोदयः प्राच्यचालुक्यराज्यविद्वानां चोलीयैरभेदमुपलभ्य चोलशाखाया वेंगिदेशाधिकृतिं कल्पयति स्मेत्यनुमीयते।

कुलोत्तुङ्गचोलः प्राच्यचालुक्येषु श्रेष्ठतमो नृपतिरासीत्। अयमेव 'कलिंगत्तुपरनी' काव्ये नायकत्वेन वर्णितः।[4] तस्मिन्नुपरते तत्तनयो विक्रमचोलः १११८ ई० वर्षात् ११३५ ई० वर्षं यावच्छशास।

अयमेव राजेन्द्रः (कुलोत्तुङ्गचोलः) राजिग इति बिल्हणेन निरदेशि। विक्रमो यस्य चोलराजस्य पुत्रीं परिजग्राह स आसीद्वीरराजेन्द्रः। किञ्च तत्पुत्रोऽधिराजराजेन्द्र एव विक्रमस्य श्यालको बभूव।[5]

---

1 विक्र. षष्ठ. २७–५४. 2 H. I. S. I. pp. 82–83. 3 I. H. Q. XIII pp. 96–98. 4 सो. प्रा. इ. प. १७०–१७४. 5 A. I. pp. 133–136. सो. प्रा. इ. प. १०६–१०७, पश्यत परिशिष्टम् ग.

ततस्तु तुमुलं जन्यमजनि । विजयश्रीर्विक्रममेव स्वीचकार । राजिगः पलाय्य क्वचिद्गात्, सोमेश्वरश्च बन्धने न्यवेशि (क) ।[1]

विक्रमस्तुङ्गभद्रां प्रत्याययौ । अग्रजाय राज्यं पुनरर्पयितुं कृतमतिः स शङ्करेण रुषा न्यषेधि । विवशीभूय स राज्यभारमुवोढ । जयसिंहश्च वनवासमण्डलशासकपदेऽभ्यषिच्यत (ख) ।[2]

---

(क) युद्धमिदं १०७६ ई० वर्षेऽभवदिति पुरातनलेखैः प्रमाणीभवति ।[3] तत्रास्ति सोमेश्वरदुराचारवर्णनम्, परं राजिगस्य नास्ति निर्देशः ।

(ख) विक्रमादित्यचरितेऽयं कलङ्क इव प्रतीयते । विक्रमः सोमेश्वरं योग्यतायां गुणेषु प्रतापशौर्यादिषु च नूनमत्यरिच्यत । परमस्मिन्वस्तुनि स सर्वात्मना निर्दूषण आसीदिति वक्तुं दुष्करम् । किञ्चात्र स कियदवधि दोषभागासीदित्यपि निर्णेतुं न सुकरम् ।

बिल्हणो विक्रमचरितं यथासाध्यमुत्कृष्टतमं चारुतमं च साधयितुं सर्वथाचेष्टत । स हि नानोपायैरनेकप्रसङ्गेषु विक्रमं देवानां सविशेषकृपापात्रं, लोभशून्यं, भातृवत्सलं च प्रमाणीकृतवान् । विक्रमो राज्यं लेशतोऽपि नेयेषेति बिल्हणः प्रतिपादयति । तद्गुणाकृष्टा राज्यलक्ष्मीः स्वयमेव तं वव्रे । शंकरस्तस्मै बलाद्राज्यं दापयति स्मेति वा चारुतरोक्तिः । विषयमेतमधिकृत्य डा० ब्युहूलरप्रभृतय इतिहासविदः कविमत्यर्थमुपजहसुः ।[4]

राज्यग्रहग्रस्ताः सोदरा अप्यन्योन्यं नूनमेव कलहायन्ते स्म । परमलौकिकौदार्यलोभरहितत्वादिगुणानामपि निदर्शनान्युपलभ्यन्त एव । डा० ब्युहूलरप्रभृतय इतिहासविदस्त्वित्थं मन्यन्ते[5] – 'सोमेश्वरो भुवनैकमल्लो विक्रमं वनवासमण्डलाधीश्वरमकरोत् । परं तावताऽसन्तुष्यन्विक्रमः सोमेश्वरराज्यापहरणाय कपटप्रपञ्चं चिकीर्षति स्म । किन्तु तस्मिन् कपटप्रबन्धे प्रकाशपथातिथौ तस्य कल्याणपरित्यागोऽनिवार्यतामगच्छदिति प्रतीयते । तस्य जयकेशिप्रभृतिसामन्तावर्जन – शाश्वतिक ( कुलपरंपरागत ) – शत्रुचोलमैत्रीसम्बन्धादयः कपटप्रपञ्चाः सोमेश्वरराज्यापहरणायैव पूर्वरङ्गात्मका आसन्' इति ।

परं श्रीमान् ए. वी. वेङ्कटराम महोदयः,[6] श्रीमान् एस्. के. ऐयंगरमहोदयो-[7]ऽन्ये च महान्त इतिहासवेत्तारोऽत्र विप्रतिपद्यमानाः सयुक्तिप्रमाणोपन्यासपुरःसरमेवमाहुः – सोमेश्वरोऽत्यर्थमयोग्यः शासकोऽभूत् ।[8] विक्रमादित्यो राज्यसूत्रं स्वहस्ते ना-

---

1 विक्र. षष्ठ. ५५–९१ 2 विक्र. षष्ठ. ९२–९९. 3 A. I. p. 133. H. I. S. I. p. 86 (Epi. Car. VII Sk. 124.). 4 Buhler Intro. pp. 37–38 fn. सो. प्रा इ. प. १०८–९. 5 Intro. pp. 33–38 fn. 6 Life pp. 35–39. 7 A. I. pp. 135–36. 8 A. S. I. 1924–25 p. 116.

प्रहिष्यच्चे त् चालुक्यसाम्राज्यस्य सर्वनाश एवाभविष्यत्।[1] तस्यैवायं प्रभावो यत्प्रबलतमो रिपू राजेन्द्रचोलः ( कुलोत्तुङ्गचोलः ) अन्ये चारातयश्चालुक्यसाम्राज्यं लेशतोऽपि नाबाधन्त।[2] स किल चालुक्यसाम्राज्यस्याक्षुण्णतासम्पादनलालसयैव प्रेरितोऽगतिकगतिमाश्रित्य राज्यभारं स्वीचकार। तस्य राज्यकालेऽपि ( प्रायशः ११९७ ई० वत्सरसंनिधौ ) तत्सामन्तभूपतयः स्वातन्त्र्याधिगतये भृशमचेष्टन्त, परं तस्य कर्मदाक्ष्येणैव चालुक्यसाम्राज्यं हानिलवमपि नान्वभवत्।[3] बहवश्च सोमेश्वर ( द्वितीय )–सामन्ता राज्यलाभकर्मणि तस्मै साहाय्यमददुः।[4]

आहवमल्लनिधनानन्तरं विक्रमराज्यलाभं यावद्यदपि वृत्तं कविर्न्यबध्नात्तत्सकलमपि वृत्तान्तराणीव पुरातनलेखप्रभृतिप्रमाणैः प्रमाणीक्रियन्ते। परं विक्रमस्य दोषरहितत्वसाधनाय काव्यस्य चारुतासंपादनाय च कविः स्वप्रतिभाबलं सर्वात्मनोपयुयोजेत्यभ्युपगन्तव्यमेव। वृत्तक्रमातिविपर्यासस्याप्ययमेव हेतुः। कविर्वृत्तानीत्थमवर्णयत् :—

विक्रमदिग्विजयः, आहवमल्लनिधनम्, सोमेश्वरराज्याभिषेकः, विक्रमाङ्कस्य कल्याणं प्रति गमनम्, सोमेश्वरदुराचारः, विक्रमस्य जयसिंहादिभिः सार्कं कल्याणान्निर्गमनम्, सोमेश्वरसैन्ययुद्धं तत्पराजयश्च, विक्रमाङ्कस्य मलयदेशनृपतीन्प्रत्यभियानम्, जयकेशिमैत्रीसम्बन्धः, आलुपेन्द्रसन्धिबन्धः, केरलनृपतिभयम्, चोलराजसन्धिसम्बन्धः, चोलराजमृत्युः, चोलसूनुराज्यलाभः, राजिगकृतं चोलराज्यापहरणम्, सोमेश्वरराजिगाभ्यां विक्रमयुद्धम्, विक्रमस्य राज्यलाभश्चेति।

परमयं क्रमः सर्वात्मनाऽस्ति विपर्यस्तः। तथाहि :– आहवमल्लः ३० मार्च, १०६८ ई० दिवसे पञ्चत्वमञ्चति स्म। ११ एप्रिल, १०६८ ई० दिवसे च सोमेश्वरो राज्येऽभ्यषिच्यत।[5] किञ्च २५ दिसम्बर, १०७५ ई० – ३० जून, १०७६ ई० दिवसयोरन्तराले विक्रमः सोमेश्वरसकाशाद्राज्यमग्रहीष्टेत्यपि निःसंशयम्।[6]

कविवचसेत्थमाभासते[7] यत् – आहवमल्लनिधनानन्तरं भ्रातरौ चिराय स्नेहवृत्त्या कालमत्यवाहयताम्। ततश्च विरोधे जातमात्रे एव विक्रमः कल्याणाद्विनिर्गत्य चिरायेतस्ततो व्यचरत्, बहून्नृपान्नानोपायैरावर्जयत्, ततश्च चोलराजपुत्रीमुदवहत्। सोमेश्वरराज्यकालस्य दीर्घतरोंऽशस्त्वेवमेव व्यतीयाय। सर्वात्मनान्ते च चोलनरपतिनिधनादिवृत्तान्यभवन्निति प्रतीयते। यतो हि चोलनृपतिसन्धिः, अधिराजराजेन्द्रस्य निधनं, राजिगकृतं चोलराज्यापहरणं युद्धं चेति वृत्तानि कालानुक्रमतिसंनिहितानीति कविवचो व्यनक्ति।[8]

---

1 A. I. p. 143. 2 A. I. p. 52. 3 A. I. pp. 141–42. 4 A. I. p. 136. 5 H. I. S. I. p. 82. 6 H. I. S. I. p. 85. 7 विक्र. चतु. ९३–षष्ठ १. 8 विक्र. षष्ठ. ७–९९.

परं 'वीरराजेन्द्रः शरणागतं विनयावनतं च विक्रमं कण्ठिकया भूषयति स्म, सोमेश्वराच्च रट्टपाडीप्रदेशमाच्छिद्य तस्मै ( विक्रमाय ) प्रादात्' इति तदीयसप्तमवर्षीयलेखेन ( १०६९ ई० ) प्रसिद्ध्यति। अत्र चालुक्यराज्योत्तराधिकारित्वापादनमेव कण्ठिकाभूषणत्वेनाभिप्रेतमित्यनुमीयते।[1] इत्थञ्चैतत्सिद्ध्यति यत् सोमेश्वरराज्यलाभकालात्प्रभृत्येव विक्रमो राज्यं स्वहस्तगतं चिकीर्षन्कपटप्रबन्धरतो बभूव। प्रागुक्तवस्तुपर्यालोचनपुरःसरं, विक्रमस्यादित एव राज्यप्राप्तिकपटप्रबन्धरतत्वं भ्रातृद्वयस्य चारम्भादेव दौर्मनस्यसत्त्वमभ्युपगम्यते चेदियमपराऽसंगतिरुपतिष्ठते।

सोमेश्वरराज्यकालान्तर्वर्ती ई० १०७४ ( सेप्टेम्बर, ओक्टूबर ) वत्सरीयलेख[2]स्तदात्वे विक्रमादित्यस्य सोमेश्वराधीनतायां वनवासमण्डलशासकत्वं, तयोश्च विद्यमानं स्नेहसम्बन्धं सूचयति। विक्रमादित्यो गूढवर्त्मना कपटप्रपञ्चपरोऽभवदित्यभ्युपगम्यते चेद्बिल्हणोक्तिरसंगतिं भजते। वीरराजेन्द्रे सोमेश्वराद्रट्टपाडीप्रदेशमाच्छिद्य विक्रमायार्पयत्यपि सोमेश्वरः कथमेतदसोढ, तथात्वेऽपि च तयोर्भ्रात्रोः स्नेहसम्बन्धोऽदूषित एवाभवदित्यसंगतमिवाभाति। सकृद् विरुद्धावपि तौ पुनरपि समगच्छेतामिति, वीरराजेन्द्र–लेखगतोऽयमंशः स्वप्रशंसामात्रमेव ( असत्यः ) इति वा संभाव्यते।

वीरराजेन्द्रः ई० १०७० वर्षे स्वर्गस्थ एवासीत्। तस्याष्टमं राज्यवर्षम् १३ मार्च, १०७० ई० दिवसे प्रारेभे। पुरातनलेखेन चैकेन तस्याष्टमवर्षेऽपि कृतशासनत्वं प्रमाणीभवति। वीरराजेन्द्र–राजेन्द्रचोलयोरन्तरालेऽधिराजराजेन्द्रो नूनमेव शास्ति स्म, परं तदचिरायैवेति निश्चितम्। यतो हि ९ जून, १०७० ई० दिवसाद्राजेन्द्रचोलराज्यकालः प्रावर्त्तत।[3] विक्रमराज्यप्राप्तेर्नाचिरात्प्रागेव राजेन्द्रचोलश्चोलराज्यमधिचकारेति बिल्हणः प्रतिपादयति। तत्तु न सङ्गतम्।

पश्चिमगंगवंशजो गंगपरमनडिभुवनैकवीर उदयादित्यः १०७५ ई० वर्षे सोमेश्वराधीनो भूत्वा, प्रदेशान्तरैः साकं वनवासमण्डलमपि शास्ति स्म। ई० १०७४ वत्सरीये ( सेप्टेम्बर, ओक्टूबर ) आश्विनमासे च विक्रमादित्यो वनवासमण्डलमशादित्यपि प्रमाणीक्रियते।[4] एवञ्चैतयोर्वत्सरयोरन्तराले कदाचन विक्रमसोमेश्वरयोः प्रकटं दौर्मनस्यमभूदिति। श्रीमान् ए० वी० वेङ्कटराममहोदयस्तु १०७६ ई० वर्षं यावदुभयोर्भ्रात्रोः प्रेमसम्बन्धं रट्टपाडीप्रदेशस्य सहयुक्तशासकत्वं च निर्दिशति।[5]

रणे पराजितो राजिगः पलाय्य क्वचिदगादिति बिल्हणो निरूपयति।[6] तद्वचोऽभ्युपगम्यते चेद्विक्रमस्य तुङ्गभद्रां प्रति निवर्तनं नैरर्थक्यं भजते। कथं नाम विक्रमेण

---

1 सो. प्रा. इ. प. १०५. 2 H. I. S. I. p. 84. 3 H. I. S. I. p. 82. 4 H. I. S. I. p. 84. 5 Life p. 36. 6 विक्र. षष्ठ. ९०.

श्रीः

श्रीत्रिभुवनमल्लदेवविद्यापति-

काश्मीरकभट्टश्रीबिल्हणविरचितम्

# विक्रमाङ्कदेवचरितम्

## प्रथमः सर्गः

भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः ।
यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥ १ ॥

श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति ।
नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ॥ २ ॥

वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य ।
श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव ॥ ३ ॥

एकः स्तनस्तुङ्गतरः परस्य वार्त्तामिव प्रष्टुमगान्मुखाग्रम् ।
यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातु वः पर्वतराजपुत्री ॥ ४ ॥

सान्द्रां मुदं यच्छतु नन्दको वः सोल्लासलक्ष्मीप्रतिबिम्बगर्भः ।
कुर्वन्नजस्रं यमुनाप्रवाह-सलीलराधास्मरणं मुरारेः ॥ ५ ॥

पार्श्वस्थपृथ्वीधर[1]राजकन्या-प्रकोपविस्फूर्जित[2]कातरस्य ।
नमोऽस्तु ते मातरिति प्रणामाः शिवस्य सन्ध्याविषया जयन्ति ॥ ६ ॥

वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव ।
मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सप्रसादास्तु सरस्वती वः ॥ ७ ॥

अशेषविघ्नप्रतिषेधदक्ष-मन्त्राक्षतानामिव दिङ्मुखेषु ।
विक्षेपलीला करशीकराणां करोतु वः प्रीतिमिभाननस्य ॥ ८ ॥

अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः ।
वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥ ९ ॥

जयन्ति ते पञ्चमनादमित्र-चित्रोक्तिसन्दर्भविभूषणेषु ।
सरस्वती यद्वदनेषु नित्यमाभाति[3] वीणामिव वादयन्ती ॥ १० ॥

साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ।
यदस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति[4] ॥ ११ ॥

गृह्णन्तु सर्वे यदि वा यथेष्टं नास्ति क्षतिः कापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु[5] बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥ १२ ॥

सहस्रशः सन्तु विशारदानां वैदर्भलीलानिधयः प्रबन्धाः ।
तथापि वैचित्र्यरहस्यलुब्धाः श्रद्धां विधास्यन्ति सचेतसोऽत्र ॥ १३ ॥

कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ १४ ॥

---

१ पार्श्वपृथ्वीधर- प्र. । २ -विस्फूर्जथु- रा. टि. । ३ -नारविन्देष्वाभाति रा. टि. । ४ प्रचुरीभवन्ति रा. टि. । ५ मुष्टेषु रा. टि. ।

प्रौढिप्रकर्षेण पुराणरीति-व्यतिक्रमः श्लाघ्यतमः पदानाम् ।
अत्युन्नतिस्फोटितकञ्चुकानि वन्द्यानि कान्ताकुचमण्डलानि ॥ १५ ॥

व्युत्पत्तिरावर्जितकोविदापि न रञ्जनाय क्रमते जडानाम् ।
न मौक्तिकच्छिद्रकरी शलाका प्रगल्भते कर्मणि टङ्किकायाः ॥ १६ ॥

कथासु ये लब्धरसाः कवीनां ते नानुरज्यन्ति कथान्तरेषु ।
न ग्रन्थिपर्णप्रणयाश्चरन्ति कस्तूरिकागन्धमृगास्तृणेषु ॥ १७ ॥

जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः ।
प्राप्ताग्निनिर्वापणगर्वमम्बु रत्नाङ्कुरज्योतिषि किं करोति ॥ १८ ॥

उल्लेखलीलाघटनापटूनां सचेतसां वैकटिकोपमानाम् ।
विचारशाणोपलपट्टिकासु मत्सूक्तिरत्नान्यतिथीभवन्तु[1] ॥ १९ ॥

न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः ।
द्वेष्यैव केषामपि चन्द्रखण्ड-विपाण्डुरा पुण्ड्रकशर्करापि ॥ २० ॥

सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः ।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥ २१ ॥

रसध्वनेरध्वनि ये चरन्ति संक्रान्तवक्रोक्तिरहस्यमुद्राः ।
तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम् ॥ २२ ॥

अनन्यसामान्यगुणत्वमेव भवत्यनर्थाय महाकवीनाम् ।
ज्ञातुं यदेषां सुलभाः सभासु न जल्पमल्पप्रतिभाः क्षमन्ते ॥ २३ ॥

अलौकिकोल्लेखसमर्पणेन विदग्धचेतःकषपट्टिकासु ।
परीक्षितं काव्यसुवर्णमेतल्लोकस्य कण्ठाभरणत्वमेतु ॥ २४ ॥

---

१ -रत्नान्यविभोभवन्तु- प्र. ; -रत्नानि निधीभवन्तु- ब. ।

किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण ।
किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ २५ ॥

पृथ्वीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि ।
भूपाः कियन्तो न बभूवुरुर्व्यां जानाति नामापि न कोऽपि तेषाम् ॥२६॥

लङ्कापतेः संकुचितं यशो यद् यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवादिकवेः प्रभावो न कोपनीयाः[1] कवयः क्षितीन्द्रैः ॥ २७ ॥

गिरां प्रवृत्तिर्मम नीरसापि मान्या भवित्री नृपतेश्चरित्रैः ।
के वा न शुष्कां मृदमभ्रसिन्धु-संबन्धिनीं मूर्धनि धारयन्ति ॥ २८ ॥

कर्णामृतं सूक्तिरसं विमुच्य दोषे प्रयत्नः सुमहान्खलानाम् ।
निरीक्षते केलिवनं प्रविश्य क्रमेलकः कण्टकजालमेव ॥ २९ ॥

एषास्तु चालुक्यनरेन्द्रवंश[2]-समुद्गतानां गुणमौक्तिकानाम् ।
मद्भारतीसूत्रनिवेशितानामेकावली कण्ठविभूषणं वः ॥ ३० ॥

लोकेषु सप्तस्वपि विश्रुतोऽसौ सरस्वतीविभ्रमभूः स्वयंभूः ।
चत्वारि काव्यानि चतुर्मुखस्य यस्य प्रसिद्धाः श्रुतयश्चतस्रः ॥ ३१ ॥

एकस्य सेवातिशयेन शङ्के पङ्केरुहस्यासनतां गतस्य ।
आराधितो यः सकलं कुटुम्बं चकार लक्ष्मीपदमम्बुजानाम् ॥ ३२ ॥

ब्रह्मर्षिभिर्ब्रह्ममयीममुष्य सार्धं कथां वर्धयतः कदाचित् ।
त्रैलोक्यबन्धोः सुरसिन्धुतीरे प्रत्यूषसन्ध्यासमयो बभूव ॥ ३३ ॥

मृणालसूत्रं निजवल्लभायाः समुत्सुकश्चाटुषु[3] चक्रवाकः ।
अन्योन्यविश्लेषणयन्त्रसूत्र-भ्रान्त्येव चञ्चुस्थितमाचकर्ष ॥ ३४ ॥

---

१ न वञ्चनीयाः रा. टि. । २ चालुक्यवंश- प्र. । ३ समुत्सुकाश्चाटुषु प्र. ।

आरक्तमर्घार्पण[1]तत्पराणां सिद्धाङ्गनानामिव कुङ्कुमेन ।
बिम्बं दधे बिम्बफलप्रतिष्ठां राजीविनीजीवितवल्लभस्य ॥ ३५ ॥

सुधाकरं वार्धकतः क्षपायाः संप्रेक्ष्य मूर्धानमिवानमन्तम् ।
तद्विप्लवायेव सरोजिनीनां स्मितोन्मुखं पङ्कजवक्त्रमासीत् ॥ ३६ ॥

ज्ञात्वा विधातुश्चुलुकात्प्रसूतिं तेजस्विनोऽन्यस्य समस्तजेतुः ।
प्राणेश्वरः पङ्कजिनीवधूनां पूर्वाचलं दुर्गमिवारुरोह ॥ ३७ ॥

जगाम याङ्गेषु रथाङ्गनाम्नां परस्परादर्शनलेपनत्वम् ।
सा चन्द्रिका चन्दनपङ्ककान्तिः शीतांशुशाणाफलके[2] ममज्ज ॥ ३८ ॥

सन्ध्यासमाधौ भगवांस्थितोऽथ शक्रेण बद्धाञ्जलिना प्रणम्य ।
विज्ञापितः शेखरपारिजात-द्विरेफनादद्विगुणैर्वचोभिः ॥ ३९ ॥

आस्ते यदैरावणवारणस्य मदाम्बुसङ्गान्मिलितालिमाला ।
साम्राज्यलक्ष्मीजयतोरणाभे दन्तद्वये वन्दनमालिकेव ॥ ४० ॥

यदातपत्रं मम नेत्रपद्म-सहस्रलोलालिकदम्बनीलम् ।
कुरङ्गनाभीतिलकप्रतिष्ठां मुखे समारोहति राजलक्ष्म्याः ॥ ४१ ॥

यन्नन्दने कल्पमहीरुहाणां छायासु विश्रम्य रतिश्रमेण ।
गायन्ति मे शौर्यरसोर्जितानि गीर्वाणसारङ्गदृशो यशांसि ॥ ४२ ॥

किं वा बहूक्तैः[3] पुरुहूत एष पात्रं महिम्नो यदनङ्कुशस्य ।
स्वामिन् स सर्वोऽपि शिरोधृतानां त्वत्पादसेवारजसां प्रभावः ॥ ४३ ॥

चक्कलकम्[4] ।

---

१ -मर्घार्पण- ब. ; -मर्घ्यार्पण- रा. । २ -शाणीफलके रा. टि. ।
३ बहूक्तैः प्र. । ४ ब. पुस्तके नास्ति ।

निवेदितश्चारजनेन नाथ तथा क्षितौ संप्रति विप्लवो मे ।
मन्ये यथा यज्ञविभागभोगः स्मर्तव्यतामेष्यति निर्जराणाम् ॥ ४४ ॥

धर्मद्रुहामत्र निवारणाय कार्यस्त्वया कश्चिदवार्यवीर्यः ।
रवेरिवांशुप्रसरेण यस्य वंशेन सुस्थाः ककुभः क्रियन्ते ॥ ४५ ॥

पुरन्दरेण प्रतिपाद्यमानमेवं समाकर्ण्य वचो विरिञ्चिः[1] ।
सन्ध्याम्बुपूर्णे चुलुके मुमोच ध्यानानुविद्धानि विलोचनानि ॥ ४६ ॥

प्रकोष्ठपृष्ठस्फुरदिन्द्रनील-रत्नावलीकङ्कणडम्बरेण ।
बन्धाय धर्मप्रतिबन्धकानां वहन्सहोत्थानिव[2] नागपाशान् ॥ ४७ ॥

उत्तर्जनीकेन मुहुः करेण कृताकृतावेक्षणबद्धलक्षः ।
रुषा निषेधन्निव चेष्टितानि दिक्पालवर्गस्य निरर्गलानि ॥ ४८ ॥

भोगाय वैपुल्यविशेषभाजं कर्तुं धरित्रीं निजवंशजानाम् ।
केयूरसंक्रान्तविमानभङ्ग्या भुजोद्धृतक्ष्माभृदिवेक्ष्यमाणः[3] ॥ ४९ ॥

अखर्वगर्वस्मितदन्तुरेण विराजमानोऽधरपल्लवेन ।
समुत्थितः क्षीरविपाण्डुराणि पीत्वेव सद्यो द्विषतां यशांसि ॥ ५० ॥

सुवर्णनिर्माणमभेद्यमस्त्रैः स्वभावसिद्धं कवचं दधानः ।
जयश्रियः काञ्चनविष्टराभं[4] समुद्वहन्नुन्नतमंसकूटम्[5] ॥ ५१ ॥

स्वःसुन्दरीबन्दि[6]परिग्रहाय दत्तोऽञ्जलिः संप्रति दानवेन्द्रैः[7] ।
इति प्रहर्षादमराङ्गनानां नेत्रोत्पलश्रेणिभिरर्च्यमानः[8] ॥ ५२ ॥

---

१ विरञ्चिः रा. । २ वहून्सहोत्था- प्र. ; बध्नन्सहोत्था- ब. । ३ -दिवे॰क्षमाणः ज. । ४ -विष्टुराभं प्र. । ५ -मंशकूटम् ज. । ६ स्वःसुन्दरीवृन्द- ब. । ७ दानवेन्द्रै ज. । ८ -रर्च्यमाणः ज. ।

अपि स्वयं पङ्कजविष्टरेण देवेन दृष्टश्चिरमुत्सुकेन ।
वाञ्छाधिकप्रस्तुत[1]वस्तुसिद्धि-सविस्मयस्मेरमुखाम्बुजेन ॥ ५३ ॥

कषोपले पौरुषकाञ्चनस्य पङ्के यशःपाण्डुसरोरुहाणाम् ।
व्यापारयन्दृष्टिमतिप्रहृष्टामवाप्तपाणिप्रणये कृपाणे ॥ ५४ ॥

हेमाचलस्येव[2] कृतः शिलाभिरुदारजाम्बूनदचारुदेहः ।
अथाविरासीत्सुभटस्त्रिलोक-त्राण[3]प्रवीणश्चुलुकाद्विधातुः ॥ ५५ ॥
नवभिः कुलकम्[4] ।

प्रस्थाप्य शक्रं धृतिमान्भवेति हर्षाश्रुपारिप्लवदृक्सहस्रम् ।
स शासनात्पङ्करुहासनस्य मरुद्विपक्षक्षयदीक्षितोऽभूत् ॥ ५६ ॥

क्ष्माभृत्कुलानामुपरि[5] प्रतिष्ठामवाप्य रत्नाकरभोगयोग्यः ।
क्रमेण तस्मादुदियाय वंशः शौरेः पदाद्गाङ्ग इव प्रवाहः ॥ ५७ ॥

विपक्षवीराद्भुतकीर्तिहारी हारीत इत्यादिपुमान्स यत्र ।
मानव्यनामा च बभूव मानी मानव्ययं यः कृतवानरीणाम् ॥ ५८ ॥

मीलद्विलै[6]सालकपल्लवानि विशीर्णपत्राङ्गलिमण्डनानि ।
मुखानि वैरिप्रमदाजनस्य यद्भूपतीनां जगदुः प्रतापम् ॥ ५९ ॥

उत्खातविश्वोत्कटकण्टकानां यत्रोदितानां पृथिवीपतीनाम्[7] ।
क्रीडागृहप्राङ्गणलीलयैव बभ्राम कीर्तिर्भुवनत्रयेऽपि ॥ ६० ॥

यत्पार्थिवैः शत्रुकठोरकण्ठ-पीठास्थिनिर्लोठन[8]कुण्ठधारैः[9] ।
निन्ये कृपाणः पटुतां तदीय-कपालशाणोपलपट्टिकासु ॥ ६१ ॥

---

१ -प्रस्तुत- ज. । २ हेमाचलस्यैव ब. । ३ -'त्राण'- इति ज. पुस्तके, शोधनात्पूर्वम् । ४ ब. पुस्तके नास्ति । ५ -नामुपरि प्र. । ६ मिलद्विला- ब.; गलद्विला- रा. । ७ पृथवीपतीनाम्- ब. । ८ -निर्लोठन- ज. । ९ -धाराः प्र. ।

निरादरश्चन्द्रशिखामणौ यः प्रीतेऽपि लोकत्रितयैकवीरः ।
क्षिपन्कृपाणं दशमेऽपि मूर्ध्नि स्वयं धृतः क्ष्माधरराजपुत्र्या ॥ ६२ ॥

प्रसाध्य तं रावणमध्युवास यां मैथिलीशः कुलराजधानीम्[१] ।
ते क्षत्रियास्तामवदातकीर्तिं पुरीमयोध्यां विदधुर्निवासम्[२] ॥ ६३[३] ॥

जिगीषवः केऽपि विजित्य विश्वं विलासदीक्षारसिकाः क्रमेण ।
चक्रुः पदं नागरखण्डचुम्बि-पूगद्रुमायां दिशि दक्षिणस्याम् ॥ ६४ ॥

तदुद्भवैर्भूपतिभिः सलीलं चोलीरहःसाक्षिणि दक्षिणाब्धेः ।
करीन्द्रदन्ताङ्कुरलेखिनीभिरलेखि कूले विजयप्रशस्तिः ॥ ६५ ॥

द्वीपक्ष्मापालपरंपराणां दोर्विक्रमादुत्खननोन्मुखास्ते ।
विष्णोः प्रतिष्ठेति विभीषणस्य राज्ये परं संकुचिता बभूवुः ॥ ६६ ॥

द्वीपेषु कर्पूरपरागपाण्डुष्वासाद्य लीलापरिवर्तनानि ।
भ्रान्त्या तुषाराद्रितटे लुठन्तः शीतेन खिन्नास्तुरगा यदीयाः ॥ ६७ ॥

श्रीतैलपो नाम नृपः प्रतापी क्रमेण तद्वंशविशेषकोऽभूत् ।
क्षणेन यः शोणितपङ्कशेषं संख्ये द्विषां वीररसं चकार ॥ ६८ ॥

विश्वंभराकण्टकराष्ट्रकूट-समूलनिर्मूलनकोविदस्य ।
सुखेन यस्यान्तिकमाजगाम चालुक्य[४]चन्द्रस्य नरेन्द्रलक्ष्मीः ॥ ६९ ॥

शौर्योष्मणा स्विन्नकरस्य[५] यस्य संख्येषु खड्गः प्रतिपक्षकालः ।
पुरन्दरप्रेरितपुष्पवृष्टि-परागसङ्गान्निबिडत्वमाप ॥ ७० ॥

---

१ -किल राज- अ. । २ विदधुर्निवासम् ज. । ३ अस्यानन्तरं 'गुग्मम्' इति अ. । ४ चौलुक्य- अ. । ५ -खिन्नकरस्य- रा. ।

यस्याञ्जनश्यामलखड्गपट्ट-जातानि जाने धवलत्वमापुः ।
अरातिनारीशरकाण्डपाण्डु-गण्डस्थलीनिर्लुठनाद्यशांसि ॥ ७१ ॥

स्फूर्जद्यशोहंसविलासपात्रं निस्त्रिंश[1]नीलोत्पलमुत्प्रभं यः ।
उत्तंसहेतोरिव वीरलक्ष्म्याः संग्रामलीलासरसश्चकर्ष ॥ ७२ ॥

विधाय सैन्यं युधि साक्षिमात्रं दासीकृतायाः प्रतिपक्षलक्ष्म्याः ।
यः प्रातिभाव्यार्थमिवाजुहाव महाभुजैः[2] शत्रुनरेन्द्रकीर्तिम् ॥ ७३ ॥

चालुक्यवंशामल[3]मौक्तिकश्रीः सत्याश्रयोऽभूदथ भूमिपालः ।
खड्गेन यस्य भ्रुकुटिक्रुधेव द्विषां कपालान्यपि चूर्णितानि[4] ॥ ७४ ॥

यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः ।
गृहीतदीपा इव विन्दते स्म[5] खड्गान्धकारे रिपुचक्रवालम् ॥ ७५ ॥

अवन्ध्यपातानि रणाङ्गणेषु सलीलमाकृष्टधनुर्गुणस्य ।
यस्यानमत्कोटितया व्यराजदस्त्राणि चुम्बन्निव चापदण्डः ॥ ७६ ॥

भूभृत्सहस्रार्पितदेहरन्ध्रैः क्रौञ्चाचलच्छिद्रविशारदानाम् ।
सेहे न गर्वः पृथुसाहसस्य यस्येषुभिर्भार्गवमार्गणानाम् ॥ ७७ ॥

दृप्तारिदेहे समरोपमर्द-सूत्रावशेषस्थितहारदाम्नि ।
यज्ञोपवीतभ्रमतो बभूव यस्य प्रहर्तुः क्षणमन्तरायः ॥ ७८ ॥

प्राप्तस्ततः श्रीजयसिंहदेवश्चालुक्य[6]सिंहासनमण्डनत्वम् ।
यस्य व्यराजन्त गजाहवेषु मुक्ताफलानीव करे यशांसि[7] ॥ ७९ ॥

---

१ निस्तृंश- ज., ब. । २ महीभुजः ब. । ३ -वंश्यामल- अ. । ४ कपालान्यवचूर्णितानि अ. । ५ भिन्दते स्म ब. ; मन्वते स्म अ. । ६ -श्चौलुक्य- अ. । ७ -फलानीव यशांसि प्र. । -फलानीव महायशांसि ब. ।

यस्य प्रतापेन कदर्थ्यमानाः प्रत्यर्थिभूपालमहामहिष्यः ।
अन्वस्मरंश्चन्दनपङ्किलानि प्रियाङ्कपालीपरिवर्तनानि[1] ॥ ८० ॥

प्रतापभानौ भजति प्रतिष्ठां यस्य प्रभातेष्विव संयुगेषु ।
सूर्योपलानामिव पार्थिवानां केषां न तापः प्रकटीबभूव ॥ ८१ ॥

यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री ।
आर्द्रव्रणाधिष्ठितपृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ ८२ ॥

किरीटमाणिक्यमरीचिवीचि-प्रच्छादिता यस्य विपक्षभूपाः ।
चिताग्निभीत्या समराङ्गणेषु न संगृहीताः सहसा शिवाभिः ॥ ८३ ॥

यात्रासु दिक्पालपुरीं विलुण्ठ्य न दिग्गजान्केवलमग्रहीद्यः ।
पलायितास्ते जयसिन्धुराणां गन्धेन सप्तच्छदबान्धवेन ॥ ८४ ॥

अपारवीरव्रतपारगस्य पराङ्मुखा एव सदा विपक्षाः ।
अधिज्यचापस्य रणेषु यस्य यशः परं संमुखमाजगाम ॥ ८५ ॥

यशोवतंसं नगरं सुराणां कुर्वन्नगर्वः समरोत्सवेषु ।
न्यस्तां स्वहस्तेन पुरन्दरस्य यः पारिजातस्रजमाससाद ॥ ८६ ॥

तस्मादभूदाहवमल्लदेवस्त्रैलोक्यमल्लापरनामधेयः ।
यन्मण्डलाग्रं न मुमोच लक्ष्मीर्धाराजलोत्था जलमानुषीव[2] ॥ ८७ ॥

आख्यायिकासीम्नि कथाद्भुतेषु यः सर्गबन्धे दशरूपके च ।
पवित्रचारित्रतया कवीन्द्रैरारोपितो[3] राम इति द्वितीयः ॥ ८८ ॥

भूपेषु कूपेष्विव रिक्तभावं कृत्वा प्रपापालिकयेव यस्य ।
वीरश्रिया कीर्तिसुधारसस्य दिशां मुखानि प्रणयीकृतानि ॥ ८९ ॥

---

१ –परिवर्तितानि अ. । २ –जलोत्थं जलमानषीव अ. । ३ –रारोप्यतो अ. ।

कौक्षेयकः क्ष्मातिलकस्य यस्य पीत्वातिमात्रं द्विषतां प्रतापम् ।
आलोड्य बाष्पाम्बुभिराचचाम चोलीकपोल[1]स्थलचन्दनानि ॥ ९० ॥

दीप्रप्रतापानलसंनिधानाद् बिभ्रत्पिपासामिव यत्कृपाणः ।
प्रमारपृथ्वीपतिकीर्तिधारां धारामुदारां कवलीचकार[2] ॥ ९१ ॥

अगाधपानीयनिमग्नभूरि-भूभृत्कुटुम्बोऽपि यदीयखड्गः ।
भाग्यक्षयान्मालवभर्तुरासीदेकां न धारां परिहर्तुमीशः ॥ ९२ ॥

निःशेषनिर्वासितराजहंसः खड्गेन बालाम्बुदमेचकेन ।
भोजक्षमाभृद्भुजपञ्जरेऽपि यः कीर्तिहंसीं विरसीचकार ॥ ९३ ॥

भोजक्षमापालविमुक्तधारा-निपातमात्रेण रणेषु यस्य ।
कल्पान्तकालानलचण्डमूर्तिश्चित्रं प्रकोपाग्निरवाप शान्तिम् ॥ ९४ ॥

यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि ।
तत्कीर्तिभिः[3] क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः[4] ॥ ९५ ॥

ध्रुवं रणे यस्य जयामृतेन क्षीबः क्षमाभर्तुरभूत्कृपाणः ।
एका गृहीता यदनेन धारा धारासहस्रं यशसोऽवकीर्णम् ॥ ९६ ॥

शतक्रतोर्मध्यमचक्रवर्ती क्रमादनेकक्रतुदीक्षितोऽपि ।
ऐन्द्रात्पदादभ्यधिके पदे यस्तिष्ठन्न शङ्कास्पदतामथासीत् ॥ ९७ ॥

चिन्तामणिर्यस्य पुरो वराकस्तथाहि वार्ता जनविश्रुतेयम् ।
यत्तत्र सौवर्णतुलाधिरूढे चक्रे स[5] पाषाणतुलाधिरोहम् ॥ ९८ ॥

---

१ चौडीकपोल- अ. । २ कवलीकरोति अ. । ३ सत्कीर्तिभिः रा. । ४ -पाण्डुराणि रा. । ५ चक्रे स्म प्र. ; चक्रेऽस्य ब. ; 'धत्ते स्म' इति ब. पुस्तक-शुद्धिपत्रे ।

विधाय रूपं मशकप्रमाणं भयेन कोणे क्वचन स्थितस्य ।
कलेरिवोत्सारणकारणेन यो यागधूमैर्भुवनं रुरोध ॥ ९९ ॥

स्वाभाविकादुष्णगभस्तिभासः क्षत्रोष्मणो दृष्टिविघातहेतोः ।
यस्मिन् परित्रस्त[1] इति[2] क्षितीन्द्रे क्षणं न चिक्षेप कलिः कटाक्षम् ॥१००॥

अन्यायमेकं कृतवान्कृती यश्चालुक्यगोत्रोद्भववत्सलोऽपि ।
यत्पूर्वभूपालगुणान्प्रजानां विस्मारयामास निजैश्चरित्रैः ॥१०१॥

विशीर्णकर्णा कलहेन यस्य पृथ्वीभुजङ्गस्य निरर्गलेन ।
संगच्छतेऽद्यापि न डाहलश्रीः कर्पूरताडङ्कनिभैर्यशोभिः ॥ १०२[3] ॥

पाठान्तरम्—

कर्णे विशीर्णे कलहेन यस्य पृथ्वीभुजङ्गस्य निरर्गलेन ।
कीर्तिः समाश्लिष्यति डाहलोर्वीं न दन्तताडङ्कनिभाधुनापि ॥ १०३॥

यस्यासिरत्युच्छलता[4] रराज धाराजलेनेव रणेषु धाम्ना ।
दृप्तारिमातङ्गसहस्रसङ्गामभ्युक्ष्य[5] गृह्णन्निव वैरिलक्ष्मीम् ॥ १०४ ॥

यद्वैरिसामन्तनितम्बिनीनामश्रान्तसंतापकदर्थ्यमाने ।
पराङ्मुखं शोषविशङ्कयेव कुचस्थले कुङ्कुमपङ्कमासीत् ॥ १०५ ॥

एकत्र वासादवसानभाजस्ताम्बूललक्ष्म्या इव संस्मरन्ती ।
वक्त्रेषु[6] यद्वैरिविलासिनीनां हासप्रभा तानवमाससाद ॥ १०६ ॥

यं वारिधिः प्रज्वलदस्त्रजालं वेलावनान्तेषु नितान्तभीतः ।
भूयः समुत्सारणकारणेन समागतं भार्गवमाशशङ्के ॥ १०७ ॥

---

१ परित्रस्व प्र.। २ इव अ.। ३ अयं श्लोकः अ. प्र. पुस्तके नास्ति।
४ -रभ्युच्छलता अ.। ५ -सङ्गादभ्युक्ष्य अ.। ६ वक्त्रेषु प्र.।

रत्नोत्करग्राहिषु यद्भटेषु तटत्रुटन्मौक्तिकशुक्तिभङ्ग्या ।
अस्फोटयत्तीरशिलातलेषु रोषेण मूर्धानमिवाम्बुराशिः ॥ १०८ ॥

यं वीक्ष्य पाथोधिरधिज्यचापं शोणाश्मभिः शोणितशोणदेहैः[1] ।
क्षोभादभीक्ष्णं रघुराजबाण-जीर्णव्रणस्फोटमिवाचचक्षे ॥ १०९ ॥

राशीकृतं विश्वमिवावलोक्य वेलावने यस्य चमूसमूहम् ।
अम्भोविभूतेरपरिक्षयेण क्षारत्वमब्धिर्बहु मन्यते स्म ॥ ११० ॥

उत्तम्भयामास पयोनिधेर्यस्तीरे जयस्तम्भमदम्भवीरः ।
असूयितं स्वैरविहारशीलैरालानभीत्या जलवारणेन्द्रैः ॥ १११ ॥

लब्ध्वा यदन्तःपुरसुन्दरीणां लावण्यनिष्यन्दम्[2] उपान्तभाजाम् ।
गृहीतसारस्त्रिदशैः पयोधिः पेयूषसंदर्शनसौख्यमाप ॥ ११२ ॥

जयैकरागी विजयोद्यमेषु दृष्ट्वा प्रयाणावधिमम्बुधिं यः ।
उत्कण्ठितोऽभूद्दशकण्ठशत्रु-सेतौ समस्यापरिपूरणाय ॥ ११३ ॥

दोर्दण्डदर्पाद्द्रविडप्रकाण्डं यः संमुखं धावितमेकवीरम् ।
अभाजनं वीररसस्य चक्रे बाणोत्करच्छिद्रपरंपराभिः ॥ ११४ ॥

पृथ्वीभुजङ्गः परिकम्पिताङ्गीं यशःपटोलुण्ठनकेलिकारः ।
विधृत्य काञ्चीं भुजयोर्बलेन यश्चोलराज्य[3]श्रियमाचकर्ष ॥ ११५ ॥

चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥ ११६ ॥

दहत्यशेषं प्रतियोगिवर्गमनर्गले[4] यद्भुजशौर्यवह्नौ ।
प्रत्यर्थिपृथ्वीपतिचिन्त्यमानो न कोऽपि मन्त्रः प्रतिबन्धकोऽभूत् ॥ ११७ ॥

---

१. -शोणादेहैः प्र.। २ -निस्यन्द- प्र०। ३ यश्चोडराज्य- ज.।
४ -वर्गे निरर्गले अ.।

ब्रूमस्तस्य किमस्त्रकौशलविधौ देवस्य विक्रामतः
पुष्पेषोरिव यस्य दुष्परिहराः सर्वैरखर्वाः शराः ।
राज्ञामप्रतिभानमेव विदधे युद्धेषु यस्योर्जित-
ज्यानिष्ठ्यूतनितान्तनिष्ठुररवप्रासाग्रवादो भुजः ॥ ११८ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते प्रथमः सर्गः[1] ॥ १ ॥



१ 'इति विक्रमाङ्कदेवचरिते महाकाव्ये प्रथमः सर्गः' इति ज. ।

# द्वितीयः सर्गः

चकार कल्याणमिति क्रमादसौ पुरं परार्ध्यं[1] पृथिवीपुरन्दरः ।
यदुच्चहर्म्यावलिदीपसंपदां[2] विभाव्यते कज्जलसंनिभं नभः ॥ १ ॥

निवर्तिताश्चन्दनलेपपाण्डुभिर्नतभ्रुवां यत्र समुन्नतैः स्तनैः ।
मुखानिला एव कदर्थनक्षमा भवन्ति माने[3] मलयाद्रिवायवः ॥ २ ॥

क्षपाकरः कातररश्मिमण्डलः पुरन्ध्रिगण्डस्थलकान्तिसंपदा ।
विकीर्णसंमार्जनभस्मरेणुना[4] बिभर्ति यस्मिन्मुकुरेण तुल्यताम् ॥ ३ ॥

विलासदोलायितदन्तपत्रयोः क्षपासु यत्रेन्दुरलक्ष्यमण्डलः ।
प्रविश्य संक्रान्तिमिषेण योषितां कपोलयोः कान्तिजलं विलुम्पति ॥४॥

गतोऽपि यत्र प्रतिबिम्बवर्त्मना समीपतां वञ्चयितुं प्रगल्भते ।
मुखानि जाग्रन्मदनानि सुभ्रुवां सयामिकानीव न यामिनीपतिः ॥ ५[5] ॥

जलाशया यत्र हसन्ति संततं नवेन्द्रनीलद्रवनिर्मलोदराः ।
शरत्समुत्सारितमेघकर्दमं कलिन्दकन्याह्रदमेचकं नभः ॥ ६ ॥

प्रकर्षवत्या कपिशीर्षमालया यदुद्भटस्फाटिकवप्रसंहतिः[6] ।
विलोकयत्यम्बरकेलिदर्पणे विलासधौतामिव दन्तमण्डलीम् ॥ ७ ॥

पुराङ्गनावक्त्रसहस्रकान्तिभिस्तिरोहिते रात्रिषु तारकापतौ ।
क्व रौप्यकर्पूरकरण्डपाण्डुरः शशीति यत्र भ्रममेति रोहिणी ॥ ८ ॥

---

१ पुरन्दरार्ध्यं अ. । २ –दीपसंपदा ब. । ३ मान्ये अ.; मन्ये अ. प्र. ।
४ –संमार्जितभस्म– अ. । ५ 'अयं श्लोकः अ. पुस्तके नास्ति' इति भ. रि. ।
६ –वप्रसंततिः अ. ।

यदीयलीलास्फटिकस्थलीभुवाममुग्धदुग्धाब्धिसमत्विषां पुरः ।
दवाग्निनिर्दग्धवनस्थलोपमं विलोक्यते कज्जलकश्मलं[1] नभः ॥ ९ ॥

तटद्रुमाणां प्रतिबिम्बमालया सपारिजातामिव दर्शयञ्छ्रियम्[2] ।
स यत्तडागः कुरुते विडम्बनां गृहीतसारस्य सुरैः पयोनिधेः ॥ १० ॥

प्रतिक्षणं क्षालितमन्युना रणे प्रयुक्तरक्षस्य नृपेण मानिना ।
न यस्य कक्षां शतमन्युरक्षिता पुरी पुरप्राग्रहरस्य गाहते[3] ॥ ११ ॥

करोति गण्डस्थलचन्द्रमण्डले विलासवेल्लन्मणिकुण्डलातिथौ ।
न यत्र वित्रस्तकुरङ्गचक्षुषां निघर्षभीत्येव पदं कुरङ्गकः ॥ १२ ॥

समुच्छलन्मौक्तिककान्तिवारिभिः सुवर्णकुम्भैः सुरसद्ममूर्धगैः ।
प्रपा पिपासापरितापशान्तये नभश्चरीणामिव येन निर्मिता ॥ १३ ॥

जगत्त्रयीकार्मणकर्मणि क्षमं निरीक्ष्य लीलायितमेणचक्षुषाम् ।
स्मरेण यत्र स्मरता पराभवं भवाय भूयः परिबोध्यते[4] धनुः ॥ १४ ॥

स्मरप्रशस्तिप्रतिवस्तुतां गताः सलीलदात्यूहसमूहनिस्वनाः ।
भवन्ति यत्र क्षणमात्रविश्रमं[5]-प्रदायिनः कण्ठरवेषु योषिताम् ॥ १५ ॥

निराकृते यत्र रुषां समुद्गमे भुजङ्गसौभाग्यगुणेन सुभ्रुवाम् ।
वनान्तपुंस्कोकिलपञ्चमोर्मयो भवन्ति मानज्वरशेषभेषजम् ॥ १६ ॥

प्रविश्य यद्वेश्मसु रोहिणीपतिर्गुणं महान्तं लभते न संशयः ।
यदेष राहोरुपयात्यलक्ष्यतां[7] पुरन्ध्रिवक्त्रेन्दुसहस्रमध्यगः ॥ १७ ॥

---

१ -कश्मलं ज. । २ दर्शयन् श्रियम् ज. । ३ जायते अ. । ४ प्रति-बोध्यते अ. । ५ -'दात्यूह- (इति) -दाथ्यूह- (इति) वा' इति ब. टि. । ६ -विभ्रम- अ. । ७ -त्यलंकृतां प्र. ।

यदीयसौधध्वजपट्टपट्टिकाः समुच्चलन्मौक्तिककान्तिनिर्झरैः ।
नभस्तलान्दोलनविभ्रमाहृतं[१] विनिक्षिपन्तीव सुरापगापयः ॥ १८ ॥

अविस्मृतत्र्यम्बकनेत्रपावकः स्मरः स्मितेन्दीवरदीर्घचक्षुषाम् ।
विलासपीयूषनिधान[२]कुम्भयोर्न यत्र पार्श्वं[३] कुचयोर्विमुञ्चति ॥ १९ ॥

स्मरस्य यत्राद्भुतमस्त्रकौशलं तथा ह्यसौ चारुदृशां विलोचनैः ।
उपागतैरुत्पलपत्रमित्रतां शिलाकठोराणि मनांसि विध्यति ॥ २० ॥

समुद्रवेला[४] रतिरत्नसंपदां[५] वधूतडित्ताण्डवमेघमण्डली ।
नभःस्थली विभ्रमतारकस्रजां[६] विभाति यत्र स्मरतल्पकल्पना ॥ २१ ॥

त्यजन्ति हंसाः सरसीगुणैः स्थितिं न यत्र वर्षास्वपि हर्षगद्गदाः ।
अलङ्घनीयस्य निकाममुन्नतेर्दिशन्ति वप्रस्य यशस्तु दुर्जनाः ॥ २२ ॥

निशासु यत्रोन्नतसौधसंगतिं[७] विगाहमानस्य विधोः कुरङ्गकः ।
वतंसदूर्वाङ्कुरमेणचक्षुषां ग्रहीतुमाकाङ्क्षति वक्रकन्धरः ॥ २३ ॥

अवागुरं नेत्रकुरङ्गबन्धनं निरक्षरं पञ्चशरस्य शासनम् ।
गृहे गृहे यत्र विचित्रमन्वहं वितन्वते नृत्तमधीरलोचनाः ॥ २४ ॥

अमुष्य लोकत्रितया[८]द्भुतैर्गुणैरतीत्य मार्गं मनसोऽपि तिष्ठतः ।
असौ सदा मानसगोचरस्थिता कथं तुलायामलका प्रगल्भते ॥ २५ ॥

विजित्य सर्वाः ककुभः स भार्गव-प्रचण्डकोदण्डपरिश्रमो नृपः ।
उवास तत्रार्थिशतानि पूरयन् फलं हि पात्रप्रतिपादनं श्रियः ॥ २६ ॥

---

१ –विभ्रमायितं अ. । २ –पेयूषनिधान– अ. । ३ यत्र वासं ब. ; 'वासं' इति हस्तलिखिते ( ज. ) पुस्तके नास्ति , परं १० सर्गे ४६ तमः श्लोको द्रष्टव्यः' इति ब. टि. । ४ समुद्रावेला प्र. । ५ –संपदा ब. । ६ –स्रजा ब. । ७ –संततिं अ. । ८ –विश्वत्रितया– अ. ।

जगत्यनर्घेषु समस्तवस्तुषु क्षितीश्वरः पादतलस्थितेष्वपि[१] ।
अभूद्विना पुत्रमुखेन्दुदर्शनं प्रभातनीलोत्पलदीनलोचनः ॥ २७ ॥

उवाच कण्ठागतबाष्पगद्गदैः पदैः कदाचित्सहधर्मचारिणीम् ।
सरस्वतीहारलतामिवोज्ज्वलां प्रकाशयन्दन्तमयूख[२]चन्द्रिकाम् ॥ २८ ॥

फलेन शून्यः सुतरां दुनोति मामयं गृहस्थाश्रमधर्मपादपः ।
विलोकयामि प्रतिबिम्बमात्मनः सुताभिधानं त्वयि नाधुनापि यत्[३] ॥२९॥

अलक्षणं बालमृगाक्षि मृग्यते[४] न किञ्चिदङ्गेषु तवेदृशः परम् ।
पुराकृतः पुण्यविपर्ययो मम ध्रुवं फलर्द्धिप्रतिबन्धकस्त्वयि ॥ ३० ॥

अवीक्षमाणा सदृशं गुणैर्मम क्रमागता श्रीरियमाश्रयं पुरः ।
पयोधिमध्यस्थितपोतकूपक-स्थिता शकुन्तीव मुहुः प्रकम्पते ॥ ३१ ॥

प्रियप्रसादेन विलाससंपदा तथा न भूषाविभवेन गेहिनी ।
सुतेन निर्व्याजमलीकहासिना यथाङ्कपर्यङ्कगतेन शोभते ॥ ३२ ॥

वहन्ति हिंस्राः पशवः कमात्मनो गुणं वितर्क्यात्मजरक्षणश्रमम् ।
पदार्थसामर्थ्यमचिन्त्यमीदृशं यदत्र विश्राम्यति निर्भरं मनः ॥ ३३ ॥

किमश्वमेधप्रभृतिक्रियाक्रमैः सुतोऽस्ति चेन्नोभयलोकबान्धवः ।
ऋणं[५] पितॄणामपनेतुमक्षमाः कथं लभन्ते गृहमेधिनः शुभम् ॥ ३४ ॥

प्रतापशौर्यादिगुणैरलङ्कृतोऽप्युपैति तावन्न कृतार्थतां नृपः ।
सुतेन दोर्विक्रमलब्धकीर्तिना न यावदारोहति पुत्रिणां धुरि ॥ ३५ ॥

---

१ पादतले स्थितेष्वपि ब. । २ –मयूष– ज. । ३ –नाधुना यतः अ. । ४ लक्ष्यते अ. । ५ क्षणं प्र. ।

निशम्य देवस्य नितान्तदुःखिता कथामिति श्रोत्रपथप्रमाथिनीम् ।
जगाद किञ्चिन्न नरेन्द्रसुन्दरी परं निशश्वास तरङ्गितालका ॥ ३६ ॥

स धीरमुर्वीन्दुरधीरलोचनामथाङ्कमारोप्य कृपार्द्रमानसः ।
हरन्निवातङ्ककलङ्कमुज्ज्वल-द्विजावलीकान्तिजलैरवोचत ॥ ३७ ॥

अलं विषादेन करोषि किं मुखं कवोष्णनिःश्वासविधूसराधरम् ।
अभीष्टवस्तुप्रतिबन्धिनामहं कृताग्रहो निग्रहणाय कर्मणाम् ॥ ३८ ॥

अधीतवेदोऽस्मि कृतश्रुतागमः[1] श्रमोऽस्ति भूयानितिहासवर्त्मसु ।
गुरुष्ववज्ञाविमुखं सदा मनस्तदभ्युपायोऽत्र मया न दुर्लभः ॥ ३९ ॥

किमस्ति दुष्प्रापमसौ निषेव्यते कुलप्रभुर्बालमृगाङ्कशेखरः[2] ।
करस्थितस्यापि चकोरलोचने न पात्रमालस्यहतास्तपस्विनः ॥ ४० ॥

तदेष तावत्तपसे सह त्वया प्रभूतभावः प्रयते यतेन्द्रियः[3] ।
विभावरीवल्लभखण्डमण्डनः स यावदायाति दयां जगद्गुरुः ॥ ४१ ॥

विधाय शान्त्यै कलुषस्य कर्मणस्तदेष सर्वेन्द्रियतापनं तपः ।
नयामि भक्त्या झटिति प्रसन्नतामखण्डया खण्डशशाङ्कशेखरम् ॥४२[4]॥

तथेति देव्या कृतसंमतिस्ततः समस्तचिन्तां विनिवेश्य मन्त्रिषु ।
अभूदनुष्ठानविशेषतत्परः स पार्थिवः प्राथितवस्तु[5]सिद्धये ॥ ४३ ॥

तपः स्वहस्ताहृतपुष्पपूजित-त्रिलोचनः स्थण्डिलवासधूसरः ।
तथा स राजर्षिरसाधयद्यथा महर्षयोऽस्मादपकर्षमाययुः ॥ ४४ ॥

---

१ कृतः श्रुतागमः अ. । २ -शेषरः ज. । ३ प्रभूतभावप्रथितो जितेन्द्रियः अ. । ४ 'अयं श्लोकः अ. पुस्तके नास्ति' इति भ. रि. । ५ -कर्म- अ. ।

स सौकुमार्यैकधनोऽपि सोढवांस्तपोधनैर्दुष्प्रसहं परिश्रमम् ।
रराज तीव्रे तपसि स्थितो नृपः शशीव चण्डद्युति[1]मण्डलातिथिः ॥४५॥

नृपं कठोरव्रतचर्यया कृशं समाहिता सा नरनाथसुन्दरी ।
निशातशाणोल्लिखितं समन्वगात् प्रभेव माणिक्यमतीव[2] निर्मला ॥४६॥

मृगाङ्कचूडस्य किरीटनिम्नगा-तरङ्गवातैरिव वारितश्रमा ।
उपाचरत्सम्यगसौ नराधिपं स्वहस्तलिप्तेश्वरमन्दिराजिरा ॥ ४७ ॥

तथाविधायाः सदृशं यदुन्नतेर्मतं यदौदार्यधनस्य चेतसः ।
तदद्रिकन्यादयितस्य पूजने जितेन्द्रियः कल्पयति स्म पार्थिवः ॥४८॥

इति क्षितीन्द्रश्चिरमिन्दुशेखर[3]-प्रसादनाय व्रतमुग्रमाश्रितः ।
कदाचिदाकर्णयति स्म भारतीं प्रभातपूजासमये नभश्चरीम् ॥ ४९ ॥

अलं चुलुक्यक्षितिपालमण्डन श्रमेण विश्राम्यतु कर्कशं[4] तपः ।
कमप्यपूर्वं त्वयि पार्वतीपतिः प्रसादमारोहति भक्तवत्सलः ॥ ५० ॥

इयं त्वदीया दयिता भविष्यति क्षितीन्द्र पुत्रत्रितयस्य भाजनम् ।
चुलुक्यवंशः शुचितां यदर्जितै[5]र्यशोभिरायास्यति मौक्तिकैरिव ॥ ५१ ॥

निधिः प्रतापस्य पदं जयश्रियः कलालयस्ते[6] तनयस्तु मध्यमः ।
दिलीपमान्धातृमुखादि[7]पार्थिव-प्रथा[8]मतिक्रम्य विशेषमेष्यति ॥ ५२ ॥

सुतद्वयं ते निजकर्मसंभवं मम प्रसादात्तनयस्तु मध्यमः ।
पयोनिधेः पारगतामपि श्रियं स दोर्बलै[9]र्द्राम इवाहरिष्यति ॥ ५३ ॥

---

१ शशीव द्युति- प्र.; शशीव ताराद्युति- ब.। २ माणिक्यमणिं च अ.। ३ -शेषर- ज.। ४ कर्कसं प्र.। ५ यदूर्जितै- ब.। ६ कलानिधिस्ते अ.। ७ -मुखाद्य- अ.। ८ -प्रभा- रा.। ९ स्वदोर्बला- अ.।

गिरं निपीय श्रुतिशुक्तिमागतां सुधामिव व्योमपयोनिधेरिति ।
उदञ्चिरोमाञ्चतया समन्ततः स शैत्यसंपर्कमिव न्यवेदयत् ॥ ५४ ॥

उदञ्चदानन्दजलप्लुतेक्षणस्ततः प्रमोदालसलोचनोत्पलाम् ।
स वल्लभामन्यपुरन्ध्रिदुर्लभैर्गुणैरुपेतां गुणवानतोषयत् ॥ ५५ ॥

शनैर्विधाय व्रतपारणाविधिं धनैः कृतार्थीकृतविप्रमण्डलः ।
अखण्डसौभाग्यविलासया पुनस्तया समं राज्यसुखेष्वरज्यत[1] ॥ ५६ ॥

क्रमेण तस्यां कमनीयमात्मजं शुभे मुहूर्ते पुरुहूतसंनिभः ।
अवाप्य संपादितमांसलोत्सवः परामगान्निर्वृतिमीश्वरः क्षितेः ॥ ५७ ॥

स सोमवन्नेत्रचकोरपारणां चकार गोत्रस्य यदुज्ज्वलाननः ।
यथोचितं सोम इति क्षमापतेस्ततः[2] प्रसन्नादभिधानमासवान् ॥ ५८ ॥

अनन्यसामान्यतनूजशंसिनीं स्मरन्नजस्रं गिरमुद्गतां दिवः ।
द्वितीयगर्भार्थमभूत्स निर्भरं समुत्सुको मध्यमलोकनायकः ॥ ५९ ॥

स्थितस्य गर्भे प्रभयेव कस्यचिद् विलिप्यमानां स्फटिकामलत्विषः ।
स गण्डपालीं बिस[3]दण्डपाण्डुरां ददर्श देव्याः पृथिवीपतिस्ततः ॥६०॥

स हेमवृष्टिं महतीमकारयच्चकार चित्राण्युपयाचितानि च ।
हरप्रसादोचितसूनुलालसश्चकार किं किं न नरेन्द्रचन्द्रमाः ॥ ६१ ॥

उवाह धौतां क्षितिपालवल्लभा सुधाप्रवाहैरिव देहकन्दलीम्[4] ।
विषादपङ्कक्षयतः क्षमापतेर्निरन्तरं तु प्रससाद मानसम् ॥ ६२ ॥

---

१ राज्यसुखे व्यराजत अ. । २ -पतेः सुतः अ. । ३ विश- ज. ।
४ देहकन्दली प्र. ।

निपीड्य चन्द्रं पयसे निवेशिता ध्रुवं तदीयस्तनकुम्भयोः सुधा ।
यदुत्पलश्यामलमाननं तयोः सलाञ्छनच्छायमिव व्यराजत ॥ ६३ ॥

नरेन्द्रकान्ताकुचहेमकुम्भयोः सुधारसं क्षीरमिषेण बिभ्रतोः ।
हिमोपचारार्पितमार्द्रचन्दनं श्रियं दधे गालनशुभ्रवाससः ॥ ६४ ॥

नरेन्द्रपुत्रस्य कृते सुरक्षितं क्षितीशकान्ताकुचकुम्भयोः पयः ।
विलासहारोज्ज्वलमौक्तिकच्छलात् समल्लिकावासमिव व्यधीयत ॥ ६५ ॥

मृगीदृशः श्यामलचूचुकच्छलात् कुचद्वये भूपसुतोपयोगिनि ।
प्रभावसंक्रान्तरसायनौषधी-दलद्वयं नीलमिव व्यराजत ॥ ६६ ॥

निरन्तरायास[1]समर्थमर्थिनां कथं नु दारिद्र्यमसौ सहिष्यते ।
न येन मध्यस्थमपि व्यषह्यत स्थितेन गर्भे नरनाथयोषितः ॥ ६७ ॥

बलेः समुल्लासमपाचकार यः स कारणादत्र कुतोऽपि वर्तते ।
इतीव गर्भः क्षितिपालयोषितः शशंस भङ्गनुदरे वलिस्थितिम् ॥ ६८ ॥

कृतावतारः क्षितिभारशान्तये न पीड्यमानां सहते महीमयम् ।
इतीव सा गर्भभरालसा शनैः पदानि चिक्षेप मृगायतेक्षणा ॥ ६९ ॥

सशब्दकाञ्चीमणिबिम्बितैर्बभौ सखीजनैः साद्भुतगर्भधारिणी ।
उपास्यमाना कुलदेवतागणैः समन्ततो यामिकतां गतैरिव ॥ ७० ॥

अलङ्कृता दुष्प्रसहेन तेजसा रराज सा रत्नमयीषु भूमिषु ।
महागृहाणां प्रतिबिम्बडम्बरैः प्रणम्यमानेव कुलाचलैरपि ॥ ७१ ॥

कलत्रमुर्वीतिलकस्य मेखला-कलापमाणिक्यमरीचिभिर्दधे ।
उदेष्यतः सूर्यसमस्य तेजसः समुद्गतं बालमिवातपं[2] पुरः ॥ ७२ ॥

---

१ निरन्तराभ्यास- अ. । २ 'पाल'- इत्यस्ति 'बाल'- इति वेति ज. पुस्तके स्पष्टं नास्ति ; पालमिवातपं ब. टि. ; जालमिवातपं ब. ; जालमिवाततं रा. ।

क्षपामुखेषु प्रतिबिम्बितः शशी हृदि क्षमावल्लभलोलचक्षुषः ।
जगाम गर्भे दधतः सुखस्थितिं नरेन्द्रसूनोरुपधानतामिव ॥ ७३ ॥

नृपप्रिया स्थापयितुं पदद्वयीमियेष दिक्कुञ्जरकुम्भभित्तिषु ।
चिराय धाराजलपानलम्पटा कृपाणलेखासु मुमोच लोचने ॥ ७४ ॥

मुहुः प्रकोपादुपरि स्थितासु सा चकार तारास्वपि पाटले दृशौ ।
गुरुस्मया[1] कारयितुं दिगङ्गना[2]: पदाब्जसंवाहनमाजुहाव[3] च ॥ ७५ ॥

उदञ्चितभ्रूर्मुखराणि संततं विलोकयामास विभूषणान्यपि ।
अजायत स्तब्धशिरःसु तेजसा गृहप्रदीपेष्वपि बद्धमत्सरा[4] ॥ ७६ ॥

इति स्फुरच्चारुविचित्रदोहदा निवेदयन्ती सुतमोजसां निधिम् ।
प्रतिक्षणं सा हरिणायतेक्षणा दृशोः सुधावर्तिरभून्महीभुजः ॥ ७७ ॥

कृतेषु सर्वेष्वथ शास्त्रवर्त्मना यथाक्रमं पुंसवनादिकर्मसु ।
विशेषचिन्हैर्निजमीशितुः क्षितेर्वधूः समासन्नफलं न्यवेदयत् ॥ ७८ ॥

त्रिलोकलक्ष्म्येव सलीलमीक्षितः कृतद्रवैश्चन्द्रकरैरिवाप्लुतः ।
अदूरवाञ्छालतिकाफलोदयः क्वचिन्न माति स्म मुदा नरेश्वरः ॥ ७९ ॥

भिषग्भिरापादितसर्वभेषजं वितीर्णरक्षाविधिमण्डलाक्षतम् ।
विशारदाभिः प्रसवोचिते विधौ निरन्तरं गोत्रवधूभिरञ्चितम्[5] ॥ ८० ॥

विवेश शुभ्रूरथ सूतिकागृहं प्रधानदैवज्ञनिवेदिते दिने ।
समुल्लसद्भिः[6] शकुनैः सहस्रशः[7] समर्पयन्ती नृपतेर्महोत्सवम् ॥ ८१ ॥
युग्मम्[8] ।

---

१ गुरुस्मयात् अ. । २ दिवाङ्गनाः अ. । ३ –माजुवाह रा. । ४ –ष्वपि मत्सरा प्र. ; –ष्वपि मत्सरान्विता ब. ; –ष्वपि चण्डमत्सरा अ. । ५ –रर्चितम् ज. ; –रर्चितम् अ., ब. ; –रचितम् अ. प्र. । ६ समुन्नमद्भिः अ. । ७ सहस्रसः प्र. । ८ ब, पुस्तके नास्ति ।

ततः प्रदीपेष्वपि तत्र विस्फुरत्प्रभाधरेष्वर्तिवशाज्जपत्स्विव ।
विलासहंसीमपि बालकान्वितां परिच्छदे प्रष्टुमुपायमुत्सुके ॥ ८२ ॥

निखातरक्षौषधिगेहदेहली-समीपसज्जीकृतशस्त्रपाणिषु ।
इतस्ततस्त्राटनमक्षतोत्करैर्विधाय हुंकारिषु मन्त्रवादिषु ॥ ८३ ॥

गृहोदरस्थे जरतीपरिग्रहे किमप्युपांशु स्वमतोपदेशिनि ।
वितीर्णकर्णासु निवासपञ्जरादनल्पशोकासु शुकाङ्गनास्वपि ॥ ८४ ॥

अलभ्यत प्राक्तनचक्रवर्तिना न जन्म यत्राद्भुतधाम्नि केनचित् ।
तथाविधं लग्नमवाप्य नन्दनः शिवप्रसादान्नृपतेरजायत ॥ ८५ ॥

चतुर्भिः पताका ।

सुरप्रसूनान्यपतन्सषट्पद-ध्वनीनि दध्वान सुरेन्द्रदुन्दुभिः ।
परं प्रसादं ककुभः प्रपेदिरे गुणैः कुमारस्य सहोत्थितैरिव ॥ ८६ ॥

नवप्रतापाङ्कुरचक्रकान्तया निरन्तरारात्रिकदीपसंपदा ।
श्रियं जगल्लोचनबालचन्द्रमाः समाजहारोदयसन्ध्ययेव सः ॥ ८७ ॥

आसन्नरत्नगृहभित्तिषु निर्मलासु
लोकोत्तरेण वपुषा प्रतिबिम्बितेन ।
सेवां स्मरिष्यति कृतज्ञतयेति[2] दिग्भि-
रङ्के गृहीत इव राजसुतो रराज ॥ ८८ ॥

अकथयदवनीन्दोर्नन्दनोत्पत्तिवार्ता
प्रथममरवृन्दानन्दिनान्दीनिनादः ।

---

१ -त्रोटन- ब.; -स्ताडन- अ.। २ कृतज्ञ इतीव अ.।

तदनु तदनुरूपोत्साहतः सुन्दरीणां
त्वरितगमनलीलागद्गदो वाग्विलासः ॥ ८९ ॥

चञ्चच्चारणदीयमानकनकं संनद्धगीतध्वनि
स्फूर्जद्गाथकलुण्ठ्यमानकरटि[1]प्रारब्धनृत्तोत्सवम् ।
पूर्णं मङ्गलतूर्यदुन्दुभिरवैरुत्तालवैतालिक-
श्लाघालङ्घितपूर्वपार्थिवमथ क्ष्माभर्तुरासीद्गृहम् ॥ ९० ॥

अथ समुचिते कर्मण्यास्थापरेण पुरोधसा
कथितमवनीनाथः सर्वं विधाय विधानवित् ।
प्रतिमुहुरसौ सूनुस्पर्शान्महोत्सवमन्वभू-
दिह हि गृहिणां गार्हस्थस्य[2] प्रधानमिदं फलम् ॥ ९१ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते द्वितीयः सर्गः ॥ २ ॥



१ –करट– ब. । २ –दिह हि गार्हस्थस्य प्र. ; –दिह हि भुवने गार्ह-
स्थस्य ब. ।

# तृतीयः सर्गः

स विक्रमेणाद्भुततेजसा च चेष्टाविशेषानुमितेन बालः ।
श्रीविक्रमादित्य इति क्षितीन्दोरवाप विख्यातगुणः समाख्याम् ॥ १ ॥

देवस्य चालुक्यविभूषणस्य भार्या यशोरञ्जितदिङ्मुखेन ।
तेनावदातद्युतिना रराज साम्राज्यलक्ष्मीरिव विक्रमेण ॥ २ ॥

आलम्ब्य हारं करपल्लवेन पयोधरं पातुमसौ प्रवृत्तः ।
भोगेष्वबाह्या गुणिनो ममेति स्वभावमात्मीयमिवाभ्यधत्त ॥ ३ ॥

मातृस्तनोत्सङ्गविलासहार-प्रभा प्रविश्येव विनिःसरन्ती ।
तस्यानिमित्तस्मितचन्द्रिकाभून्नरेन्द्रनेत्रोत्सववैजयन्ती ॥ ४ ॥

मुष्टिप्रविष्टारुणरत्नदीप-प्रभालता तस्य समुल्लसन्ती ।
विपक्षकण्ठक्षतजानुलिप्ता कृपाणलेखा सहजेव रेजे ॥ ५ ॥

त्यक्त्वोपविष्टान्यदसौ कुमारः समुत्थितानां सविधे जगाम ।
आगामि तेनाधिकमुन्नतात्मा नीचेषु वैमुख्यमिवाचचक्षे ॥ ६ ॥

धात्रेयिकायाः स्मितपूर्वकं यददत्त हुङ्कारमसौ कुमारः ।
अपूरयत्तेन नृपस्य कर्णौ पेयूषगण्डूषपरंपराभिः ॥ ७ ॥

यदुत्थितः सोऽङ्गुलिसंग्रहेण यत्किञ्चिदव्यक्तमवोचतापि ।
अभीक्ष्णमक्ष्णोः श्रवसोश्च तेन क्षमापतेः संवननं बभूव ॥ ८ ॥

क्रमेण संपादितचूलकर्मा चालुक्यभूपालधुरंधरस्य[1] ।
विनोदलीलाकुसुमोच्चयानां स नन्दनो नन्दनतामवाप ॥ ९ ॥

---

१ –धुरन्धरस्य रा.।

उत्सङ्गमारुह्य[1] नरेश्वरस्य स पांसु[2]लीलापरिधूसराङ्गः ।
निजाङ्गतः संगलितैः परागैश्चक्रे मनःकार्मणचूर्णयोगम् ॥ १० ॥

राज्ञां प्रणामाञ्जलिसंपुटेषु किमप्यवज्ञामुकुलीकृताक्षः ।
तस्यैकहस्ताम्बुरुहप्रणामे कृतार्थमात्मानममंस्त देवः ॥ ११ ॥

प्रतिक्षणं कुन्तलपार्थिवस्य वितन्वतस्तन्मुखचुम्बनानि ।
तदीयदन्तच्छदजन्मनेव रागेण चेतः परिपूर्णमासीत् ॥ १२ ॥

मुखेन्दुसंचारकृताभिलाष - कुरङ्गभीत्यर्थमिवार्पितेन ।
कण्ठावसक्तेन स राजसूनुरराजत व्याघ्रनखाङ्कुरेण ॥ १३ ॥

क्रीडन्समुत्सारितवारनारी - मञ्जीरनादागतराजहंसः ।
एकः क्षितेः पालयिता भविष्यन् स राजहंसासहनत्वमूचे ॥ १४ ॥

स पीडयन्नायसपञ्जरस्थान् क्रीडापरः केसरिणां किशोरान् ।
समाददे भाविरिपुद्विपेन्द्र - युद्धोपयोगीव तदीयशौर्यम् ॥ १५ ॥

प्रामोदयः पादनखैश्चकासे स बालचन्द्रः परिवर्धमानः ।
अभ्यर्थ्यमानः सहखेलनाय बालैरपत्यैरिव शीतरश्मेः ॥ १६ ॥

परां प्रतिष्ठां लिपिषु क्रमेण जगाम सर्वासु नरेन्द्रसूनुः ।
पुण्यात्मनामत्र तथाविधानां निमित्तमात्रं गुरवो भवन्ति ॥ १७ ॥

अभ्यासहेतोः क्षिपतः पृषत्कान् नरेन्द्रसूनोः सकलासु दिक्षु ।
प्रहारभीतेव परिभ्रमन्ती पार्थस्य कीर्तिर्विरलीबभूव ॥ १८ ॥

लावण्यलुब्धाभिरलब्धमेव भूपालकन्यामधुपाङ्गनाभिः ।
कवित्ववक्तृत्वफला चुचुम्ब सरस्वती तस्य मुखारविन्दम् ॥ १९ ॥

---

१ –मासह्य प्र. । २ पांशु– ज. ।

तं बालचन्द्रं परिपूर्यमाणमालोक्य लावण्यकलाकलापैः ।
कुमुद्वतीनामिव कामिनीनां निशासु निद्रा विमुखीबभूव ॥ २० ॥

धैर्येण तस्मिन्नवधीर्य याति स्मरोत्सुकानां नगराङ्गनानाम् ।
आबद्धमुग्धभ्रुकुटिच्छटानां पेतुः सकोपं नयनोत्पलानि ॥ २१ ॥

लावण्यलक्ष्मीकुलधाम्नि तत्र विवर्धमाने शनकैः कुमारे ।
कासामजायन्त न कामिनीनां निद्रादरिद्राणि विलोचनानि ॥ २२ ॥

तेजस्विनामुन्नतिमुन्नतात्मा सेहे न बालोऽपि नरेन्द्रसूनुः ।
देवोऽपि भास्वाञ्छरणेच्छयेव समाश्रितो विष्णुपदं रराज ॥ २३ ॥

उच्चैः स्थितं तस्य किरीटरत्नं तेजोधनानामुपरि स्थितस्य ।
क्षमामिव प्रार्थयितुं लुलोठ संक्रान्तिभङ्ग्या मणिपादपीठे ॥ २४ ॥

अत्रान्तरेऽभूज्जयसिंहनामा पुत्रस्तृतीयोऽपि नराधिपस्य ।
स्वप्नेऽपि संवादयशोदरिद्रश्चन्द्रार्धचूडस्य न हि प्रसादः ॥ २५ ॥

सर्वासु विद्यासु किमप्यकुण्ठमुत्कण्ठमानं समरोत्सवेभ्यः ।
श्रीविक्रमादित्यमथावलोक्य स चिन्तयामास नृपः कदाचित् ॥ २६ ॥

अलङ्करोत्यद्भुतसाहसाङ्कः सिंहासनं चेदयमेकवीरः ।
एतस्य सिंहीमिव राज्यलक्ष्मीमङ्कस्थितां कः क्षमतेऽभियोक्तुम् ॥ २७ ॥

करोमि तावद्युवराजमेनमत्यक्तसाम्राज्यभरस्तनूजम् ।
तटद्वयीसंश्रयणाद्दधातु धुनीव साधारणतां नृपश्रीः ॥ २८ ॥

एवं विनिश्चित्य कृतप्रयत्नमूचे कदाचित्पितरं प्रणम्य ।
सरस्वतीनूपुरसिञ्जितानां सहोदरेण ध्वनिना कुमारः ॥ २९ ॥

---

१ -दरिद्रः चन्द्रा- ज. ; -दरिद्रचन्द्रा- प्र. । २ राज्य- ज. ।

आज्ञा शिरश्चुम्बति पार्थिवानां त्यागोपभोगेषु वशे स्थिता श्रीः ।
तव प्रसादात्सुलभं समस्तमास्तां[1]मयं मे युवराजभावः ॥ ३० ॥

जगाद देवोऽथ मदीप्सितस्य किं वत्स धत्से प्रतिकूलभावम् ।
ननु त्वदुत्पत्तिपरिश्रमे मे स चन्द्रचूडाभरणः प्रमाणम् ॥ ३१ ॥

धत्से जगद्रक्षणयामिकत्वं न चेत्त्वमङ्गीकृतयौवराज्यः ।
मौर्वीरवापूरितदिङ्मुखस्य क्रान्तिः कथं शाम्यतु[2] मद्भुजस्य ॥ ३२ ॥

आकर्ण्य कर्णाटपतेः सखेदमित्थं वचः प्रत्यवदत्कुमारः ।
सरस्वतीलोलदुकूलकान्तां प्रकाशयन्दन्तमयूख[3]लेखाम् ॥ ३३ ॥

वाचालतैषा पुरतः कवीनां कान्त्या मदोऽयं सविधे सुधांशोः[4] ।
त्वत्संनिधौ पाटवनाटनं यत् तथापि भक्त्या किमपि ब्रवीमि ॥ ३४ ॥

विचारचातुर्यमपा[5]करोति तातस्य भूयान्मयि पक्षपातः ।
ज्येष्ठे तनूजे सति सोमदेवे न यौवराज्येऽस्ति ममाधिकारः ॥ ३५ ॥

चालुक्यवंशोऽपि यदि प्रयाति पात्रत्वमाचार[6]विपर्ययस्य ।
अहो महद्वैशसमाः किमन्यदनङ्कुशोऽभूत्कलिकुञ्जरोऽयम् ॥ ३६ ॥

लक्ष्म्याः करं[7] ग्राहयितुं तदार्यो[8] तातस्य योग्यः स्वयमग्रजो मे ।
कार्यं विपर्यासमलीमसेन न मे नृपश्रीपरिरम्भणेन ॥ ३७ ॥

---

१ समास्तमास्ता- प्र. ; समस्तं मास्ता- ब. । २ शाम्यति अ. । ३ -मयूष- ज. । ४ सुधांशौ रा. । ५ विचारचारुर्यमपा- प्र. । ६ पात्रमाचार- प्र. । ७ लक्ष्म्यीः करं ( लक्ष्मीकरं ? ) अ. प्र. ; अयं पाठभेदः भ. रि. पुस्तके नास्ति । ८ तदासौ अ. ।

ज्येष्ठं परिम्लानमुखं विधाय भवामि लक्ष्मीप्रणयोन्मुखश्चेत् ।
किमन्यदन्यायपरायणेन मयैव गोत्रे लिखितः कलङ्कः ॥ ३८ ॥

तातश्चिरं राज्यमलङ्करोतु ज्येष्ठो ममारोहतु[1] यौवराज्यम् ।
सलीलमाक्रान्तदिगन्तरोऽहं द्वयोः पदातिव्रतमुद्वहामि ॥ ३९ ॥

रामस्य पित्रा भरतोऽभिषिक्तः क्रमं समुल्लङ्घ्य यदात्मराज्ये ।
तेनोत्थिता स्त्रीजित इत्यकीर्तिरद्यापि तस्यास्ति दिगन्तरेषु ॥ ४० ॥

तदेष विश्राम्यतु कुन्तलेन्द्र यशोविरोधी मयि पक्षपातः ।
न किं समालोचयति क्षितीन्दुरायासशून्यं मम राज्यसौख्यम्[2] ॥ ४१ ॥

पुत्राद्वचः श्रोत्रपवित्रमेवं श्रुत्वा चमत्कारमगान्नरेन्द्रः ।
इयं हि लक्ष्मीर्धुरि पांसुलानां[3] केषां न चेतः कलुषीकरोति ॥ ४२ ॥

सस्नेहमङ्के विनिवेश्य चैनमुवाच रोमाञ्चतरङ्गिताङ्गः ।
क्षिपन्निवात्युज्ज्वलदन्तकान्त्या प्रसादमुक्तावलिमस्य कण्ठे ॥ ४३ ॥

भाग्यैः प्रभूतैर्भगवानसौ मे सत्यं भवानीदयितः प्रसन्नः ।
चालुक्यगोत्रस्य विभूषणं यत् पुत्रं प्रसादीकृतवान्भवन्तम् ॥ ४४ ॥

एतानि निर्यान्ति वचांसि वक्त्रात् कस्यापरस्य श्रवणामृतानि ।
मधूनि लेह्यानि सुरद्विरेफैर्न पारिजातादपरः प्रसूते ॥ ४५ ॥

यस्याः कृते भूमिभृतां कुमाराः केषां न पात्रं नयविप्लवानाम् ।
उन्मत्तमातङ्गसहस्रगुर्वी सा राज्यलक्ष्मीस्तृणवल्लघुस्ते[4] ॥ ४६ ॥

---

१ ज्येष्ठे ममा- ज. ; जेष्टे ममा- प्र. ; ज्येष्ठे समा- अ. प्र. । २ यौव-राज्यम् ब. । ३ पांशुलानां ज. । ४ राज्यश्रीस्तृण- प्र. ।

लङ्कासमीपाम्बुधिनिर्गतेयं रक्तासवैस्तृप्यति[1] राक्षसीव ।
लक्ष्मीरसौ त्वद्भुजदण्डबद्धा पात्रं भवित्री विनयव्रतस्य[2] ॥ ४७ ॥

जानामि मार्गं भवतोपदिष्टं ममापि चालुक्यकुले प्रसूतिः ।
किं त्वत्र लक्ष्मीर्गुणबन्धहीने निसर्गलोला कथमेति दार्ढ्यम् ॥ ४८ ॥

किञ्चिन्न मे दूषणमस्ति पृच्छ दैवज्ञचक्रं यदि कौतुकं ते ।
एतस्य साम्राज्यममन्यमानाः पापग्रहा एव गृहीतपापाः ॥ ४९ ॥

साम्राज्यलक्ष्मीदयितं जगाद त्वामेव देवोऽपि मृगाङ्कमौलिः ।
लोकस्तुतां मे बहुपुत्रतां तु पुत्रद्वयेन व्यतनोत्परेण ॥ ५० ॥

तन्मे प्रमाणीकुरु वत्स वाक्यं चालुक्यलक्ष्मीश्चिरमुन्नतास्तु ।
निर्मत्सरा[3]ः क्षोणिभृतः स्तुवन्तु ममाकलङ्कं गुणपक्षपातम् ॥ ५१ ॥

श्रुत्वेति वाक्यं पितुरादरेण जगाद भूयो विहसन्कुमारः ।
मद्भाग्यदोषेण दुराग्रहोऽयं तातस्य मत्कीर्तिकलङ्कहेतुः ॥ ५२ ॥

यदि ग्रहास्तस्य न राज्यदूताः कारुण्यशून्यः शशिशेखरो वा ।
तैरेव तातो भविता कृतार्थस्तद्धार्यतां कीर्तिविपर्ययो मे ॥ ५३ ॥

अशक्तिरस्यास्ति न दिग्जयेषु यस्यानुजोऽहं शिरसा धृताज्ञः ।
स्थानस्थ एवाद्भुतकार्यकारी बिभर्तु रक्षामणिना समत्वम्[4] ॥ ५४ ॥

इत्यादिभिश्चित्रतरैर्वचोभिः कृत्वा पितुः कौतुकमुत्सवं च ।
अकारयज्ज्येष्ठमुदारशीलः स यौवराज्यप्रतिपत्तिपात्रम् ॥ ५५ ॥

---

१ –स्तुष्यति अ. । २ विनयव्रतस्य रा. । ३ निर्म्मत्सराः ज. ।
४ –मणिता ( ? ) समत्वम् भ. रि. ।

स्वयं समाधास्यति चन्द्रमौलिरम्लानकीर्तेरभिवाञ्छितं मे ।
कार्यं विचार्येति सुतोपदिष्टं स सर्वमुर्वीपतिरन्वतिष्ठत् ॥ ५६ ॥

ज्येष्ठे कृतेऽपि प्रतिपत्तिपात्रे तमेव लक्ष्मीरनुमन्यते स्म ।
पूरेण निम्ने निहितापि सिन्धुरपेक्षते सागरमार्गमेव ॥ ५७ ॥

देवोपदेशाद्गुणदर्शनाच्च स एव चित्ते नृपतेरुवास ।
यथा स्तुतं रत्नपरीक्षकेण दृष्टप्रभावं च महार्हरत्नम् ॥ ५८ ॥

स यौवराज्यश्रियमाश्रितस्य ज्येष्ठस्य राज्ये च पितुः[1] स्थितस्य ।
कार्यं द्वयोरप्यखिलं बभार भूशेषयोर्भारमिवादिकूर्मः ॥ ५९ ॥

आज्ञापयामास स वन्दिताज्ञं तमेव सर्वत्र रणोत्सवेषु ।
पपौ च भूपस्तदुपार्जितानि यशोवतंसानि जयामृतानि[2] ॥ ६० ॥

तत्कुम्भिकुम्भस्थलचीनपिष्ट-विपाटलो वारिनिधिर्बभासे ।
आपूरितश्चोलबलक्षयोत्थ-रक्तापगानामिव मण्डलेन ॥ ६१ ॥

चालुक्यरामे हरिवाहिनीभिः सहागते तत्र तटीं पयोधिः[3] ।
प्रादुर्भवन्मौक्तिकशुक्तिभङ्ग्या भयेन दन्तानिव निश्चकर्ष ॥ ६२ ॥

तस्मिन्प्रविष्टे मलयाद्रिकुञ्जं तद्वाहिनीकुञ्जरकर्णतालैः ।
वियोगिनीनामुपतापनाय चैत्रं विना चन्दनवायुरासीत् ॥ ६३ ॥

अदर्शयत्कामपि राजहंस-लीलामसौ कुन्तलराजसूनुः ।
निस्त्रिंश[4]धाराजलसंगतं यद् द्विषां यशःक्षीरमिवाचकर्ष ॥ ६४ ॥

---

१ राज्ये तु पितुः रा. । २ यशोमृतानि अ. । ३ तटीं पयोधेः ज. ; तटी पयोधेः अ. । ४ निस्तृंश- ब. ।

तस्मिन्समाकर्षति चापदण्डं वीरप्रकाण्डे विजयोद्यमेषु ।
मुखान्यभूवन्द्रविडाङ्गनानामुष्णोष्णनिःश्वासविधूसराणि ॥ ६५ ॥

तस्मिन्विरुद्धे गिरिनिर्झराम्बु श्रमातिरेकात्पशुवन्निपीय ।
मातेति चोलः क्षितिमादिभर्ता कृत्वा स्तनास्वादमिवोत्ससर्ज ॥ ६६ ॥

स मालवेन्दुं शरणं प्रविष्टमकण्टके स्थापयति स्म राज्ये ।
कन्याप्रदानच्छलतः क्षितीशाः सर्वस्वदानं बहवोऽस्य चक्रुः ॥ ६७ ॥

त्रिलोकवीरः कियतो विजिग्ये न दुर्दमानां[1] प्रतिपार्थिवानाम् ।
दोर्विक्रमेणाद्भुतसाहसेन महाहवानाहवमल्लसूनुः ॥ ६८ ॥

उत्कन्धरानेव रणाङ्गणेषु यस्यातितुङ्गस्य हठात्प्रहर्तुः ।
न नम्रभावादपरो नृपाणामासीत्कृपाणप्रतिषेधमार्गः ॥ ६९ ॥

व्याजावतीर्णेन जनार्दनेन तेनोदरे हाररुचिच्छटाभिः ।
नाभीसरोजोद्गमवारणाय संचारिता चन्द्रमसः प्रभेव ॥ ७० ॥

न भोजराजः कविरञ्जनाय मुञ्जोऽथवा कुञ्जरदानदक्षः ।
हस्ताम्बुजे तस्य गुणिप्रियस्य सहर्षमाविष्कृतहेमवर्षे ॥ ७१ ॥

तस्यारिलक्ष्मीपरिरम्भकेलि-समुत्सुकप्राज्यभुजद्वयस्य ।
केयूररत्नाङ्कुरकण्टकानां तैक्ष्ण्यं कृपाणाहतिभिर्निरस्तम् ॥ ७२ ॥

एकातपत्रोर्जितराज्यलोभाच्छत्रान्तराणामिव वारणाय ।
स भूभृतामुन्नतवंशभाजां दण्डानशेषाञ्छतधा बभञ्ज ॥ ७३ ॥

गायन्ति स्म गृहीतगौडविजयस्तम्बेरमस्याहवे[2] ।
तस्योन्मूलितकामरूपनृपतिप्राज्यप्रतापश्रियः ।

---

१ दुर्दमानां ज. । २ -रमस्याबहे श. ।

भानुस्यन्दनचक्रघोषमुषितप्रत्यूषनिद्रारसाः

पूर्वाद्रेः कटकेषु सिद्धवनिताः प्रालेयशुद्धं यशः ॥ ७४ ॥

आसीत्तस्य समुत्सुकः सुरपतिः संग्रामसंदर्शने

सेहे किं तु न गाढपीडितधनुष्टङ्कारमुच्चैःश्रवाः ।

आरूढः सुरवारणं रणरसक्रुद्धेभगन्धग्रहात्

तेनाप्येष पलायनप्रणयिना दूरं समुत्सारितः ॥ ७५ ॥

काञ्ची पदातिभिरमुष्य विलुण्ठिताभूद्

देवालयध्वजपटावलिमात्रशेषा ।

लुण्टाकलुसनिखिलाम्बरडम्बराणां

कौपीनकार्पणपरेव पुराङ्गनानाम् ॥ ७६ ॥

अत्र द्राविड[1]भूमिपालदलनक्रीडारसोड्डामरे[2]

कोदण्डध्वनिभिर्विधुन्वति घनध्वानानुकारैर्जगत् ।

वैदेहीरमणस्य रावणशिरच्छेदेऽप्यशान्तक्रुधः

प्रत्यावृत्तिरकाण्डकम्पतरलैराशङ्कि लङ्काचरैः ॥ ७७ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति

काश्मीरकभट्टश्रीबिल्हणविरचिते तृतीयः सर्गः[3] ॥ ३ ॥



---

१ द्रावित- ब.। २ -क्रीडारसौड्डामरे ज.; -क्रीडारसोमरे प्र.; -क्रीडारसोमरवे ब. टि.; -क्रीडारसोत्थे रवे ब.; -क्रीडारसोत्थे रणे रा.। ३ इति श्रीविक्रमादित्यदेवचरिते महाकाव्ये भट्टश्रीबिल्हणविरचिते तृतीयः सर्गः ज.।

# चतुर्थः सर्गः

कार्यतो युवराजत्वे राजसूनुरवस्थितः ।
स दिग्विजयमव्याज-वीरः स्मर इवाकरोत् ॥ १ ॥

अभज्यन्त गजैस्तस्य लीलया मलयद्रुमाः ।
समं केरलकान्तानां चूर्णकुन्तलवल्लिभिः ॥ २ ॥

मदस्तम्बेरमैस्तस्य मलये निर्द्रुमीकृते ।
मन्ये चन्दनवायूनामभूद्दुर्भिक्षमक्षयम् ॥ ३ ॥

चन्दनस्यन्दै[1]डिण्डीरच्छलेन मलयाचलः ।
पिण्डं श्रीखण्डवृक्षाणां परोक्षाणामिवाकरोत् ॥ ४ ॥

सान्द्रचन्दननिस्यन्द-पङ्किलैस्तस्य वारणैः ।
क्षणमौर्वाग्निसंतापः प्रविश्य शमितोऽम्बुधेः ॥ ५ ॥

और्वाग्नितप्तपाथोधौ[2] चन्दनस्यन्दवासिताः ।
शीतोपचारसाम्राज्यं भेजुर्मलयनिम्नगाः ॥ ६ ॥

सखीव निखिलैस्तस्य सेनासीमन्तिनीजनैः ।
प्रीत्या मलयवायूनां जन्मभूमिरदृश्यत ॥ ७ ॥

मलयेन तदीयस्त्री-सुरभिश्वसितानिलैः ।
गुहाश्चन्दनवायूनां बीजार्थमिव पूरिताः ॥ ८ ॥

---

१ चन्दनस्यन्दि- अ. । २ -तप्ते पाथोधौ अ. ।

गजोन्मूलितनिक्षिप्त-चन्दनद्रुमसंपदः ।
स मूल्यमिव रत्नानि जग्राह महतोऽम्बुधेः ॥ ९ ॥

शिलाभिः करटिक्षुण्ण-श्रीखण्डस्यन्दपाण्डुभिः ।
मलयस्तद्बलक्षोभादस्थिशेष इवाभवत् ॥ १० ॥

अम्भोधिः श्रीभुजङ्गस्य निद्राभङ्गविधायिना ।
चमूकलकलेनेव कुपितः क्षोभमाययौ[1] ॥ ११ ॥

क्षुण्णास्तत्करिभिस्तोयं[2]-द्विपाङ्घ्रिनिगडोपमाः ।
शयानाः कुण्डलीभूय वार्धितीरे महोरगाः ॥ १२ ॥

दधिरे तद्गजाः पाद-लग्नपाथोधिमौक्तिकाः ।
क्षुण्णनक्षत्रपुञ्जस्य सौन्दर्यं सुरदन्तिनः ॥ १३ ॥

तस्य वाहनमेकैकं गाहमानममन्यत ।
मन्दुरास्मरणायातमुच्चैःश्रवसमम्बुधिं[3] ॥ १४ ॥

तद्दन्तिपदसंघट्ट-त्रुटन्मौक्तिकशुक्तिकः ।
चक्रेऽम्बुधिर्भयोद्भ्रान्तै[4]-हृदयस्फुटनभ्रमम् ॥ १५ ॥

अन्विष्यन्मरणोपायं दुःखात्तत्सैन्यलुण्ठितः ।
कालकूटं हरग्रस्तं शुशोच पयसां निधिः ॥ १६ ॥

विद्रुमेषु समुद्रस्य कान्ताबिम्बौष्ठकान्तिषु ।
अराजन्राजपुत्रस्य प्रीतिपात्रीकृता दृशः ॥ १७ ॥

---

१ क्षोभनां ययौ अ. । २ तत्करिस्तोय- ब. टि. । ३ -मम्बुधैः प्र. । ४ -र्भयोद्भ्रान्तः अ. ।

तेन केरलभूपाल-कीलालकलुषीकृतः ।
अगस्त्यमुनि[1]संत्रासमत्याज्यत पयोनिधिः ॥ १८ ॥

उदरालोडनोद्भ्रान्तै[2]-दन्तसंक्रान्तपन्नगैः ।
पाथोधेरन्त्रमालेव तद्दन्तिभिरकृष्यत ॥ १९ ॥

तद्भयात्सिंहलद्वीप-भूपतिः शरणागतः ।
विशश्रामाश्रमपदे लोपामुद्रापतेर्मुनेः ॥ २० ॥

धुनानेन धनुश्चित्रं कृतास्तेन मुखेन्दवः ।
गाङ्गकुण्ड[3]पुरस्त्रीणां गलत्कुण्डलमण्डलाः ॥ २१ ॥

यशःकूर्चिकया चित्रं दिग्भित्तिषु निविष्टया ।
द्रविडीगण्डफलके तेनावर्त्यत पाण्डिमा ॥ २२ ॥

गलितोत्तुङ्गशृङ्गत्वाद् द्विषां तेन जिगीषुणा ।
अपि लूनशिरस्केव राजधानी व्यधीयत ॥ २३ ॥

तत्प्रतापमवोचन्त वक्त्रैर्वि[4]गलदश्रुभिः ।
पुरन्ध्रयो नरेन्द्राणां जलार्द्रासमतां[5] गतैः ॥ २४ ॥

चोलान्तःपुरगेहेषु सिंहानां तस्य बाहुना ।
लोललाङ्गूलदण्डानां द्वाररक्षा समर्पिता ॥ २५ ॥

चिन्तया दुर्बलं देहं द्रविडो यत्पलायितः ।
संकटाद्रिदरीद्वार-प्रवेशे बहुमन्यत ॥ २६ ॥

---

१ अगस्तिमुनि– अ. । २ –लोडनाक्रान्त– ब. । ३ 'गाण्डकुण्ड' इति, शोधनात्पूर्वं, ज. पुस्तकेऽस्ति' इति ब. टि. । ४ तत्प्रतापमिवाचख्युर्वक्त्रै विग– अ. । ५ जलार्द्रा ममतां ब. ।

दृश्यन्तेऽद्यापि तद्भीति-विद्रुतानां द्रुमालिषु ।
अलकाः[1] श्चोलकान्तानां कर्पूरतिलकाङ्किताः ॥ २७ ॥

क्षणाद्विगलितानर्घ्य-पदार्था द्रविडक्षितेः ।
प्राकारसूत्रशेषाभूत् काञ्ची तद्बाहुकम्पिता ॥ २८ ॥

तेनानास्पदमात्मीय-प्रतापोत्कर्षरागिणा ।
चक्रेऽनङ्गप्रतापस्य वेङ्गि[2]भूपाङ्गनाजनः ॥ २९ ॥

आक्रान्तरिपुचक्रेण चक्रकोटपतेः परम् ।
लिखिताश्चित्रशालासु तेनामुच्यन्त दन्तिनः ॥ ३० ॥

कृतकार्यः परावृत्य कियत्यप्यध्वनि स्थितः ।
अथ गम्यत्वमरतेरकस्मादेव सोऽगमत् ॥ ३१ ॥

स शङ्कातङ्कमासाद्य स्फुरणाद्वामचक्षुषः ।
श्रेयोऽस्तु तातपादानामिति सास्रं[3]मवोचत ॥ ३२ ॥

अदृश्यैः कैश्चिदागत्य चिन्तया शून्यचेतसः ।
तस्यामङ्गलवार्तेव कापि कर्णे न्यधीयत ॥ ३३ ॥

शुभाशुभानि वस्तूनि संमुखानि शरीरिणाम् ।
प्रतिबिम्बमिवायान्ति पूर्वमेवान्तरात्मनि ॥ ३४ ॥

अवगाहितनिःशेष-शास्त्रनिर्मलधीरपि ।
अकारणमसौ[4] प्राप्तः कुमारो यदधीरताम् ॥ ३५ ॥

---

१ अळिका– रा. । २ 'वेङ्गि'– इत्यस्ति 'चेङ्गि'– इति वेति ज. पुस्तके स्पष्टं नास्ति' इति ब. टि. ; चेङ्गि– ब. ; 'वेङ्गि'– इति ब. पुस्तकशुद्धिपत्रे ; चेङ्गि– रा. ; वं ( वें ) गि– भ.टि. । ३ सास्र– ब. । ४ अकारणामसौ रा. ।

सर्वस्वदानमालोच्य दुर्निमित्तप्रशान्तये ।
अप्रयाणमसौ चक्रे ततः कृष्णनदीतटे ॥ ३६ ॥

स तत्क्षणात्परिम्लान-मुखं संमुखपातिनम् ।
ददर्श राजधानीतः प्रधानं दूतमागतम् ॥ ३७ ॥

अप्रियावेदने जिह्वामवगम्य पराङ्मुखीम् ।
कथयन्तमिवानर्थं श्वासैरत्यर्थमायतैः ॥ ३८ ॥

निर्यद्भिरतिमात्रोष्णैर्मुखनिःश्वासवायुभिः ।
निवेदयन्तं दुर्वार्त्ता-वज्रानलमुपस्थितम्[1] ॥ ३९ ॥

ककुभां भर्तृभक्तानां पृच्छन्तीनां[2] नृपस्थितिम् ।
विद्रवन्तमिवाभान्तमत्यन्तत्वरितैः पदैः ॥ ४० ॥

अनर्थवार्त्तावहन-महापातकदूषितम्[3] ।
गणयित्वेव धैर्येण सर्वथापि निराकृतम् ॥ ४१ ॥

कृतप्रणाममासन्नमथ तं राजनन्दनः ।
कुशलं तातपादानामिति पप्रच्छ वत्सलः[4] ॥ ४२ ॥

पञ्चभिः कुलकम्[5] ।

उपविश्य शनैः पार्श्वे स निरुत्साहया[6] गिरा ।
कथयामास नासाग्र-विलुठद्बाष्पशीकरः ॥ ४३ ॥

विधेहि दृढमात्मानं मावधीरय धीरताम् ।
कुमार व्यापिपत्यॆष दुर्वार्त्ताप्रलयाम्बुदः ॥ ४४ ॥

---

१ –वज्रानलमवस्थितम् अ. । २ पृच्छतीनां ब. । ३ –पातकदुःखितम् अ. ।
४ वच्छलः ज. । ५ पंचभिः कुलकम् इति केवलम् अ. पुस्तके । ६ नीरुत्सवया अ. ।

आपाण्डुपाण्ड्यमालोल-चोलमाक्रान्तसिंहलम् ।
देवस्त्वद्विजयं श्रुत्वा भेजे सुखमयीं[1] स्थितिम् ॥ ४५ ॥

अकाण्डे विधिचाण्डालस्तस्मै दाहज्वरं[2] ददौ ।
न कैश्चिदपि लभ्यन्ते निष्कम्पाः सुखसंपदः ॥ ४६ ॥

अपरिश्रान्तसंतापश्चन्दनालेपनेन सः ।
त्वदङ्कपालीपेयूषमाचकाङ्क्ष पुनः पुनः ॥ ४७ ॥

क्रमादर्धप्रबुद्धानि शिशिक्षे वीक्षितानि सः ।
वासवस्येव दूतेषु कुर्वन्गजनिमीलिकाम् ॥ ४८ ॥

अन्तर्दाहमिवालोक्य[3] प्रियां कीर्तिं विनिर्गताम् ।
दर्शयन्दशनज्योत्स्नामथोवाच स मन्त्रिणः ॥ ४९ ॥

क्षिप्ता मुकुटमाणिक्य-पङ्क्तिकासु महीभुजाम् ।
टङ्केनेव प्रतापेन निजाज्ञाक्षरमालिका ॥ ५० ॥

दिग्भित्तयः शरश्रेणि-कृतच्छिद्रपरंपराः ।
स्वयशोराजहंसस्य प्रापिताः पञ्जरश्रियम् ॥ ५१ ॥

अदरिद्रीकृता भूमिर्विमुद्राभिर्विभूतिभिः[4] ।
नीताः कुलवधूसाम्यं साधूनां वेश्मसु श्रियः ॥ ५२ ॥

प्राप्तः कोदण्डपाण्डित्य-जातलक्ष्मीसमागमः ।
काकुत्स्थनिबिडस्थामा सूनुर्विक्रमलाञ्छनः ॥ ५३ ॥

---

१ सुखसुखीं अ. । २ -स्तस्य दाहज्वरं अ. । ३ -दाहमवालोक्य ज. ।
४ -कृतास्ताभिर्विमु- अ. ।

तेनैव युवराजत्वं समारोप्य यशस्विना ।
एष साम्राज्यभारस्य वोढा सोमेश्वरः कृतः ॥ ५४ ॥

इति मे कृतकृत्यस्य माहेश्वरशिरोमणेः ।
गिरिजानाथनगरे समारोहणमुत्सवः ॥ ५५ ॥

आत्मानमुन्मदद्वाःस्थ-गलहस्तितसेवकाः ।
अगम्यमपि दैवस्य विदन्ति हतपार्थिवाः ॥ ५६ ॥

मम शुद्धे कुले जन्म चालुक्यवसुधाभृताम्[1] ।
कियत्योऽपि[2] गताः श्रोत्र-मैत्रीं शास्त्रार्थविप्रुषः ॥ ५७ ॥

जानामि करिकर्णान्त-चञ्चलं हतजीवितम् ।
मम नान्यत्र विश्वासः पार्वतीजीवितेश्वरात् ॥ ५८ ॥

उत्सङ्गे तुङ्गभद्रायास्तदेष शिवचिन्तया ।
वाञ्छाम्यहं निराकर्तुं देहग्रहविडम्बनाम् ॥ ५९ ॥

यातोऽयं[3] मुपकाराय कायः श्रीकण्ठसेवया ।
कृतघ्नव्रतमेतस्य यत्र तत्र विसर्जनम् ॥ ६० ॥

तथेति वचनं राज्ञः प्रत्यपद्यन्त मन्त्रिणः ।
उचिताचरणे केषां नोत्साहचतुरं मनः ॥ ६१ ॥

ततः कतिपयैरेव प्रयाणैः प्रणयिप्रियः ।
तां क्षोणीपतिरद्राक्षीद् दक्षिणापथजाह्नवीम् ॥ ६२ ॥

तुङ्गभद्रा नरेन्द्रेण तेनामन्यत मानिना ।
तरङ्गहस्तैरुत्क्षिप्य क्षिपन्तीवेन्द्रमन्दिरे ॥ ६३ ॥

---

१ -वसुधाश्रिते अ. । २ कियन्त्योऽपि ब. । ३ जातोऽय- अ. ।

उद्दण्डा तेन डिण्डीर-पिण्ड[1]पङ्क्तिरदृश्यत ।
विमानहंसमालेव प्रहिता पद्मसद्मना ॥ ६४ ॥

अतिदूरं समुत्प्लुत्य निपतद्भिः स शीकरैः ।
अराजत धराचन्द्रः प्रत्युद्गत इव ग्रहैः ॥ ६५ ॥

तत्रावतीर्य धौरेयो धीराणां धरणीपतिः ।
स्नात्वा चण्डीशचरण-द्वन्द्वचिन्तापरोऽभवत् ॥ ६६ ॥

अदत्त चापरिच्छिन्नमखिन्नः काञ्चनोत्करम् ।
न कृच्छ्रेऽपि महाभागास्त्यागव्रतपराङ्मुखाः ॥ ६७ ॥

प्रविश्य कण्ठदघ्नेऽथ सरित्तोये जगाम सः ।
कल्लोलतूर्यनिर्घोषैश्चन्द्रचूडामणेः पुरीम् ॥ ६८ ॥

इत्युक्त्वा विरते तत्र कृतनेत्राम्बुदुर्दिनः ।
हृतासिधेनुः पार्श्वस्थैः साक्रन्दगलकन्दलः ॥ ६९ ॥

स्वभावादार्द्रभावेन पितृस्नेहाच्च तादृशः ।
तथा रुरोद वपुषा भूपृष्ठलुठितेन सः ॥ ७० ॥

एवंविधदुराचार-गृहीतनियमं यमम् ।
मन्यते स्म यथा वंशे तिग्मांशुरपि कण्टकम् ॥ ७१ ॥

विशेषकम्[2] ।

एतद्दुःखानभिज्ञेभ्यो दिनेभ्यः स्पृहयन्मुहुः ।
दिवसोऽपि यथात्मानं मन्दभाग्यममन्यत ॥ ७२ ॥

---

१ डिण्डीरे पिण्ड- ज., ब.। २ केवलम् अ. पुस्तके।

अथ कालकलाः स्थित्वा कियतीरप्यसौ तथा ।
अचिन्तयदविश्रान्त-बाष्पसंतानदुर्दिनः ॥ ७३ ॥

तवादिकूर्म कर्माणि निषेधन्ति सुखस्थितिम् ।
प्रयाहि शेष निष्पेषादस्थिपञ्जरशेषताम् ॥ ७४ ॥

दिग्गजास्त्यजत स्वैर-क्रीडाविहरणादरम् ।
संभूय भूयः सर्वेऽपि धारयन्तु धरामिमाम् ॥ ७५ ॥

बाहुराहवमल्लस्य सुवर्णस्तम्भविभ्रमः ।
पुरन्दरधुरां धर्तुं धात्रा व्यवहितः कृतः ॥ ७६ ॥

निजासु राजधानीषु स्थितिं दधतु पार्थिवाः ।
तादृशः पुनरुत्साहो वीरसिंहासने कुतः ॥ ७७ ॥

तद्बाहुदण्डविश्लेषे किं पौरुष करिष्यसि ।
प्रतिपालकवैधुर्यात् प्रताप परितप्यसे ॥ ७८ ॥

पद्मे पद्माकरानेव पुनः सद्मत्वमानय ।
अयं त्वया पतिभ्रंश-संतापोऽन्यत्र दुःसहः ॥ ७९ ॥

श्लाघ्यं शेषफणाचक्र-विटङ्कात्पतनं भुवः ।
अथवा स्नेहपाण्डित्यं मृत्पिण्डस्येदृशं कुतः ॥ ८० ॥

अपूर्वः कोऽपि दुर्मेधाः शङ्के वेधाः समुत्थितः ।
पुराणः क्लेशैर्निष्पन्नां स्वकृतिं नाशयेत्कथम् ॥ ८१ ॥

अहो शौर्यमहो धैर्यं चित्रं गाम्भीर्यविभ्रमाः ।
यत्सत्यं[3] क्वचिदेकत्र गुणास्ते दुर्लभाः पुनः ॥ ८२ ॥

---

१ श्लाघ्यशेष- ब. ; श्लाघ्यः शेष- रा. । २ पुराणक्लेश- ज., ब. । ३ तत्सत्यं अ. ।

कुण्ठीकृतारिशस्त्रस्य तस्य वज्रोपमाकृतेः ।
भाग्यानामेव मे दोषादेष जातः परिक्षयः ॥ ८३ ॥

पाठान्तरम्[1]—

मद्भाग्यदोषादेवैष जाने जातः परिक्षयः ।

विधास्यति कथं धाता सर्गरत्नं तथाविधम् ।
कथं वा संघटिष्यन्ते तादृशाः परमाणवः ॥ ८४ ॥

प्रधावत्संमुखानेक-वाहिनीगाहनक्षमः ।
अम्भोधिरिव दुष्प्रापः सत्त्वराशिस्तथाविधः ॥ ८५ ॥

आर्येण सौकुमार्यैक-भाजनेन हहा कथम् ।
अयं विषादवज्राग्निरसह्यत मया विना ॥ ८६ ॥

साक्रन्दमिति चान्यच्च स संचिन्त्य[2] पुनः पुनः ।
शनैर्विवेकदीपेन पन्थानं प्रत्यपद्यत ॥ ८७ ॥

यथाविधि विधायाथ संस्थितस्य[3] पितुः क्रियाम् ।
अग्रजालोकनोत्कण्ठा-प्रेरितः[4] सोऽचलत्पुरः ॥ ८८ ॥

कियद्भिरपि सोऽध्वानमुल्लङ्घ्य दिवसैस्ततः ।
निःशब्दसैन्यसंघात-सहितः प्राविशत्पुरीम् ॥ ८९ ॥

सरोजिनीव हंसेन नयेनेव नरेन्द्रता ।
कविना सुखगोष्ठीव चन्द्रेणेव विभावरी ॥ ९० ॥

---

१ इदं पाठान्तरम् अ. पुस्तके नास्ति । २ संचित्य प्र. । ३ सुस्थितस्य रा. । ४ -प्रेषितः रा. ।

लक्ष्मीरिव प्रदानेन कवित्वेनेव वाग्मिता ।
मेने तेनापवित्रेव पित्रा विरहिता पुरी ॥ ९१ ॥
युगलकम् ।

अग्रे समागतेनाथ मानितः सोऽग्रजन्मना ।
सह तेनैव सक्लेशं विवेश नृपमन्दिरम् ॥ ९२ ॥

अन्योन्यकण्ठाश्लेषेण पीडितस्येव निर्ययुः ।
बाष्पाम्भसस्तयोर्धारा[1]श्चिरं तत्रातिमांसलाः ॥ ९३ ॥

क्रमात्ताभ्यामदुःखाभ्यामन्योन्यस्नेहवृत्तिभिः ।
केऽपि कैतववाह्याभि[2]रत्यवाह्यन्त वासराः ॥ ९४ ॥

ज्येष्ठं गुणैर्गरिष्ठोऽपि पितुस्तुल्यममंस्त सः ।
महात्मनाममार्गेण न भवन्ति प्रवृत्तयः ॥ ९५ ॥

स दिग्वलयमालोड्य वस्तुजातमुपार्जितम् ।
तस्मै समर्पयामास नास्ति लोभो यशस्विनाम् ॥ ९६ ॥

जातः पापरतः कैश्चिद्दिनैः सोमेश्वरस्ततः ।
एषा भगवती केन भज्यते भवितव्यता ॥ ९७ ॥

मदिरेव नरेन्द्रश्रीस्तस्याभून्मदकारणम् ।
न विवेद परिभ्रष्टं यदशेषं यशोंशुकम् ॥ ९८ ॥

बाधिर्यमिव मङ्गल्य-तूर्यध्वनिभिरागतः ।
ईषदप्येष नाश्रौषीद् वचनानि महात्मनाम् ॥ ९९ ॥

---

१ -स्तयोर्द्धारा- प्र. । २ कैतववाह्याभि- ब. ।

कुर्वन्नङ्गेषु वैक्लव्यमाविष्कृतमदज्वरः ।
स निनाय श्रियं राजा राजयक्ष्मेव संक्षयम् ॥ १०० ॥

अपास्तकुन्तलोल्लासा वैराग्यं दधती धरा ।
जीवत्येव धवे तस्मिन् विधवेव व्यराजत ॥ १०१ ॥

चक्रुः स्तम्बेरमाः[1] पृष्ठे तदारोहणदूषिते ।
अभ्युक्षणमिवोदस्त-हस्तशीकरवारिभिः ॥ १०२ ॥

फालैर्दिव्य[2]मिवागृह्णन् मण्डलभ्रमणोद्यताः ।
अयोग्यतां साधयितुं तस्य सेनातुरङ्गमाः ॥ १०३ ॥

स जातु जातुषीं मेने मन्ये नरपतिश्रियम् ।
एतद्विलयभीत्येव[3] क्षात्रं तेजो यदत्यजत् ॥ १०४ ॥

ज्ञातास्वादैः[4] स्वयं लक्ष्म्याः पिशाच्या इव चुम्बनात् ।
रुधिरं कण्ठरन्ध्रेभ्यः सर्वेषामाचकाङ्क्ष सः ॥ १०५ ॥

उद्धूतचामरोद्दाम-समीरासं[5]ङ्गिनेव सः ।
रजसा पूर्यमाणोऽभून्मार्गं द्रष्टुमनीश्वरः ॥ १०६ ॥

तेजोनिधीनां रत्नानां संभारं धारयन्नपि ।
बभूव दैवोपहतस्तमःस्तोमैस्तिरोहितः ॥ १०७ ॥

उपरि प्रतिबन्धेन ध्यात्वेवं[6] नमतोऽखिलान् ।
अधोगमनमेवासौ विह्वलो बह्वमन्यत ॥ १०८ ॥

---

१ चक्रुस्तम्बेरमाः रा. । २ पालैर्दिव्य– रा. ; स्फालैर्दिव्य– अ. । ३ एतद्व-लभीत्येव प्र. ; एतद्वलनभीत्येव ब. । ४ जातास्वादः रा. । ५ –समीराः स– इति, शोधनात्पूर्वं, ज. ; –समीराः स– प्र. ; –समीरस– ब. । ६ उपरि प्रतिबिंबेन व्याधेव अ. ; उपरि प्रतिबिबन व्याधेच अ. प्र. ।

पिशाच इव सर्वेषां छलान्वेषणतत्परः ।
नासौ किमपि कर्तव्यं विवेद मदमूर्च्छया ॥ १०९ ॥

व्यरज्यत समस्तोऽपि लोभैकवसतेर्जनः ।
त्यागो हि[1] नाम भूपानां विश्वसंवननौषधम् ॥ ११० ॥

अकार्येऽपि कुमारस्य तात्पर्यमतनोदसौ ।
किं लक्ष्मीसुखमुग्धानामसंभाव्यं दुरात्मनाम् ॥ १११ ॥

भ्रमयन्नङ्कुशं दर्पाद् द्विपेन्द्रमधिरुह्य सः ।
अख्याति[3]बीजवापाय चखानेव नभःस्थलीम् ॥ ११२[4] ॥

प्रणयप्रवणैवासीत् तस्य श्रीः सपरिग्रहा ।
परं नाङ्गीकरोति स्म विक्रमाङ्कः कलङ्किनीम् ॥ ११३[5] ॥

बहुना किं प्रलापेन तथा राज्यं चकार सः ।
यथेन्दुमित्रे चालुक्य-गोत्रे प्राप कलङ्कताम् ॥ ११४ ॥

न शशाक निराकर्तुमग्रजस्य दुराग्रहम् ।
राज्यग्रहगृहीतानां को मन्त्रः किं च भेषजम् ॥ ११५ ॥

अचिन्तयच्च किं कार्यं विपर्यस्तधियामुना ।
अकीर्तिसंविभागस्य गमिष्याम्यत्र पात्रताम् ॥ ११६ ॥

त्यागमेव प्रशंसन्ति गुरोरुत्पथगामिनः ।
तदितः साधयाम्येष दक्षिणाम्बुधिसंमुखः ॥ ११७ ॥

---

१ त्यागोऽपि अ. । २ सुखल ( छ ? ) ब्धाना– अ. । ३ आख्याति– ब. । ४ अयं श्लोकः अ. पुस्तके नास्ति । ५ प्र. पुस्तके वर्तमानोऽप्ययं श्लोकः ब. पुस्तके नास्ति ।

मया निपीड्यमानास्ते निबिडं द्रविडादयः ।
आर्यं विपर्यस्तमपि प्रभवन्ति न बाधितुम् ॥ ११८ ॥

इति स मनसा निश्चित्यार्थं चुलुक्यशिखामणिः
श्रवणसरणिं भिन्दन्भेरीरवेण विनिर्ययौ ।
अपि च कुपितः क्ष्माभृत्सेनागजेषु निजेषुभिः
कतिषु विदधे धैर्यध्वंसं न साहसलाञ्छनः ॥ ११९ ॥

प्रत्यक्ता मधुनेव काननमही मौर्वीव चापोज्झिता
शुक्तिर्मौक्तिकवर्जितेव कविता माधुर्यहीनेव च ।
तेनैकेन निराकृता न शुशुभे चालुक्यराज्यस्थितिः
सामर्थ्यं शुभजन्मनां कथयितुं कस्यास्ति वाग्विस्तरः ॥ १२० ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते चतुर्थः सर्गः ॥ ४ ॥



१. 'महाकाव्ये श्रीकाश्मीरकत्रिभुवनमल्लदेवविद्यापतिभट्टश्रीबिल्हण' इति ज. ।

# पञ्चमः सर्गः

नैष दुर्मतिरिमं सहिष्यते राज्यकण्टकविशोधनोद्यतः ।
अग्रजादिति विशङ्क्य संकटं सिंहदेवमनुजं निनाय सः ॥ १ ॥

गुप्तभूषणरवेव सर्वतस्तूर्यमङ्गलनिनादशान्तितः ।
श्रीरलक्ष्यत विलक्ष्यचेतसा[1] तस्य पृष्ठचलितेव भूभुजा ॥ २ ॥

अङ्कवर्तिनमशङ्कमाः कथं नाहमेनं[2]मुपरुद्धवानिति ।
तल्पनिर्लुठनशीर्णचन्दनः पर्यतप्यत विभावरीषु सः ॥ ३ ॥

तस्य मग्नमवनीपतेर्मनस्त्रासपङ्कपटले पटीयसि ।
भूरिसंख्यभरकर्षणक्षमैरप्यकृष्यत न मत्तदन्तिभिः ॥ ४ ॥

स व्यसर्जयदथ क्कथन्मनाः पुष्कलं बलममुष्य पृष्ठतः ।
किं न संभवति चर्मचक्षुषां कर्म लुब्धमनसामसात्त्विकम्[3] ॥ ५ ॥

प्राप्तमप्यनयपङ्कशङ्कितस्तद्बलं न सहसा जघान सः ।
अप्रतर्क्यभुजवीर्यशालिनः संकटे[4]ऽप्यगहनास्तथाविधाः ॥ ६ ॥

अन्तकः प्रतिभटक्षमाभृतां निर्दयप्रहणनोद्यतं ततः ।
तन्मद[5]द्विरदपादचूर्णितं[6] सैन्यमेककवलं चकार सः ॥ ७ ॥

किं बहुप्रलपितैः पुनः पुनः प्रत्यनीकपृतनाः समागताः ।
कालवक्त्रकुहरे निवेश्य स स्वाङ्गशेषमकरोन्महीपतिम् ॥ ८ ॥

---

१ विलक्षचेतसा ब., रा. । २ कथहमेन- प्र. ; कथं हन्तुमेन- ब. ।
३ -मनसां न सात्त्विकम् अ. । ४ संकटेऽपि गहना- अ. । ५ उन्मद- अ. ।
६ -पादजूर्णितं प्र. ।

राजहंसमिव बाहुपञ्जरे श्रीविलासभुवि लालयन्यशः ।
तत्र तत्र शतपत्र[1]लोचनश्चित्रमभ्युदयमाससाद सः ॥ ९ ॥

मन्युपङ्ककलुषं समुद्वहन् भ्रातृदुश्चरितचिन्तनान्मनः[2] ।
सुप्रसन्नपयसा प्रसन्नतां द्रागनीयत स तुङ्गभद्रया ॥ १० ॥

तत्करीन्द्रनिवहावगाहनैर्वाहिनी प्रतिपथेन[3] सागमत् ।
दन्तिदानजलनिम्नगाः पुनर्लेभिरे प्रणयमापगापतेः ॥ ११ ॥

वारणः प्रतिगजं विलोकयंस्तद्विमर्दरसमांसलस्पृहः ।
आददे न विशदं नदीजलं शीलमीदृशममर्षशालिनाम् ॥ १२ ॥

षट्पदध्वनिभिराकुलीकृतः पातुमैच्छदुदकं न कुञ्जरः ।
तान्प्रविश्य पयसि न्यपीडयद् दूषणं हि मुखरत्वमर्थिनाम् ॥ १३ ॥

अत्यजत्प्रतिगजं मतङ्गजः पार्श्वसंगतकरेणुलोभतः ।
यत्र तत्र भुजदण्डचण्डिमा चित्रमप्रतिहतो मनोभुवः ॥ १४ ॥

रुद्धवर्त्मसु[4] गजेषु वाजिनः प्रापुरम्भसि निमज्जनं चिरात् ।
लब्धतीरतरुकण्टकैः पुनर्नेक्षितापि तटिनी क्रमेलकैः ॥ १५ ॥

अस्मरद्द्विरददानवारिणा तेन वारिनिधि[5]राविलीकृतः ।
हन्त संततमदस्य विभ्रमानभ्रमुप्रियतमस्य दन्तिनः ॥ १६ ॥

स्नानसक्तपरिवारसुन्दरी-वृन्दमध्यमवधीरिताङ्कुशः[6] ।
यज्जगाम मदलङ्घितः करी भाग्यसंपदुपरि स्थितस्य सा ॥ १७ ॥

---

१ तत्र तत्रातपत्र- प्र.; तत्र तामरसपत्र- ब.। २ -चिन्तया मनः अ.। ३ पतिपथेन रा.। ४ बद्धवर्त्मसु अ.। ५ ज. पुस्तके नितान्तमस्पष्टमपि 'तेन वारिनिधि' इत्यक्षरषट्कं ब. पुस्तके विद्यते, यस्य च याथार्थ्यम् अ. पुस्तकं प्रमाणयति। ६ -मवधीताङ्कुशः प्र.।

तां विधाय कतिचिद्दिनानि स प्रेयसीघुसृणपङ्किलां नदीम् ।
चोलसंमुखमगाहताहव-प्रातिदुर्ललितबाहुराग्रहम्[1][2] ॥ १८ ॥

केलिकाननशकुन्तकूजितच्छाद्यमानगलकन्दलस्वनाः ।
प्राप्नुवन्ति न विदग्धतागुणं यत्र दर्शयितुमेणलोचनाः ॥ १९ ॥

यत्र तिष्ठति विरोधमुद्वहन् दाहतः प्रभृति तेजसा सह ।
मेचकक्रमुककाननावली-मीलितोष्णकिरणार्चिषि स्मरः ॥ २० ॥

यत्र मारुतविधूतकेतक-व्रातधूलिधवलासु भूमिषु ।
कामिनीशरणमाश्रिते[3] स्मरे भर्गवन्हिरिव भस्मसाद्भूत् ॥ २१ ॥

नारिकेलफलखण्डताण्डव-क्षुण्णतत्कुहरवारिवीचयः ।
यत्र यान्ति मरुतः स्मरास्त्रतां धूतपक्वकदलीसमृद्धयः ॥ २२ ॥

अध्युवास वनवासमण्डलं तद्दिनानि कतिचिन्नृपात्मजः ।
योषितामुपवनस्थलीभुवः कर्तुमद्भुतविलाससाक्षिणीः[4] ॥ २३ ॥

पञ्चभिः कुलकम्[5] ।

उच्चचाल पुरतः शनैरसौ लीलया मलयदेशभूभुजाम् ।
पूर्वदर्शितपराक्रमस्मृतिं[6] सैन्यतूर्यनिनदैः प्रबोधयन् ॥ २४ ॥

एनमेत्य जयकेशिपार्थिवः प्रार्थितादधिकमर्पयन्धनम्[7] ।
निश्चलामकृत हासचन्द्रिकां कोङ्कणप्रणयिनीमुखेन्दुषु ॥ २५ ॥

आलुपेन्द्रमवदातविक्रमस्त्यक्तचापलमसाववर्धयत्[8] ।
दीपयत्यविनयाग्रदूतिका कोपमप्रणतिरेव तादृशाम् ॥ २६ ॥

---

१ चोड- ज. । २ -मवगाहिता- प्र. । ३ कामिनीः शरण- अ. । ४ कर्तुमुद्धतविलाससाक्षिताम् अ. । ५ इदं ज. पुस्तके एव । ६ -स्मृति प्र. । ७ -मर्पयद्धनम् ज. ; मार्पयद्धनम् अ. । ८ आलपेन्द्र- अ. ।

व्याप्तैरविरतं शिलीमुखैः केरलक्षितिपवामचक्षुषाम् ।
पूर्वकल्पितमसावदर्शयद् गण्डपालिषु निवासमश्रुणः ॥ २७ ॥

तं विभाव्य रभसादुपागतं क्ष्माभुजङ्गमुपजातसाध्वसा ।
लोलवारिनिधिनीलकुण्डला द्राविडक्षितिपभूरकम्पत ॥ २८ ॥

तस्य सज्जधनुषः प्रतिक्रिया - शून्यपौरुषविशेषशालिनः ।
द्राविडेन्द्रपुरुषस्ततः सभामाजगाम नयमार्गकोविदः ॥ २९ ॥

मौलिचुम्बितवसुन्धरातलः कुन्तलेन्द्रतनयं प्रणम्य सः ।
व्याजहार दशनांशुपल्लव - न्यस्तकोमलपदां सरस्वतीम् ॥ ३० ॥

कश्चुलुक्यनृपवंशमण्डन त्वद्गुणान्गणयितुं प्रगल्भते ।
धाम पङ्करुहिणीविलासिनः कस्य संकलयितुं विदग्धता ॥ ३१ ॥

वर्णयामि विमलत्वमम्भसः किं त्वदीयकरवालवर्तिनः ।
एति यत्प्रभवमैन्दवीं द्युतिं विश्वशुक्तिपुटमौक्तिकं यशः ॥ ३२ ॥

खड्गवारि भवतः किमुच्यते लोलशैवलमिवारिकुन्तलैः ।
यत्र[1] राजति निवेशितं त्वया राजहंसनिवहोपमं[2] यशः ॥ ३३ ॥

त्वद्भुज[3]प्रणयिचापनिस्वनः कैरसौ समरसीम्नि सह्यते ।
व्यक्तिमेति रिपुमन्दिरेषु यः क्रन्दितध्वनिभिरेणचक्षुषाम् ॥ ३४ ॥

निर्मदत्वमुपयान्ति हन्त ते ज्यारवैः करटिनो दिशामपि ।
कश्मलैः परिहृता इवालिभिर्यद्व्रजन्ति ककुभः प्रसन्नताम् ॥ ३५ ॥

त्वादृशेन विजिगीषुणा विना क्षत्रमक्षममसाध्यसाधने ।
प्लावनाय जगतः प्रगल्भते नो युगान्तसमयं विनाम्बुधिः ॥ ३६ ॥

---

१ तत्र अ. । २ -हंस इव होमलं अ. । ३ त्वद्गुण- अ. ।

अग्रजे तृणवदर्पितं निजं राज्यमूर्जितगुणेन यत्त्वया ।
वज्रलेपघटितेव तेन ते निश्चला जगति कीर्तिचन्द्रिका ॥ ३७ ॥

किं करोषि निजयाथवा भुवा त्वं समस्तवसुधातलेश्वरः ।
केसरी वसति यत्र भूधरे तत्र याति मृगराजतामसौ ॥ ३८ ॥

याति पुण्यफलपात्रतामसौ यां भुवं निवससे महाभट ।
सा कुपार्थिवकदर्थनोज्झिता त्वां पतिं हि लभते गुणोज्ज्वलम् ॥ ३९ ॥

त्वद्भिया गिरिगुहाश्रये[1] स्थिताः साहसाङ्क गलितत्रपा नृपाः ।
ज्यारवप्रतिरवेण तानपि त्वद्धनुः समरसीम्नि बाधते ॥ ४० ॥

उत्प्रतापदहनं मुखं वहन्नाहवे त्वदसिरिन्द्रजालिकः[2] ।
दिव्यमस्तकसमागमं द्विषां लूनमर्त्यशिरसां करोति यत् ॥ ४१ ॥

भाग्यभूमिमपि भारतादिषु त्वादृशं न श्रृणुमः प्रतापिनम् ।
दर्शनेन विजयश्रियं रणेष्वन्यसङ्गविमुखीं करोति यः ॥ ४२ ॥

किं किरीटमणयः क्षमाभुजां लोहकर्षकदृषत्सहोदराः ।
आनयन्ति यदुपान्तवर्त्मनि त्वत्कृपाणमतिदूरवर्तिनम् ॥ ४३ ॥

चोलभूमिपतिरुज्ज्वलैर्गुणैः किं नु वक्ति[3] भवतानुरञ्जितः ।
पश्यतस्तृणसमां तव श्रियं श्रीप्रदानकथनेन लज्जते ॥ ४४ ॥

अन्यपौरुषगुणेष्वपि श्रुतिं प्राप्तवत्सु[4] घनगर्जितेष्विव ।
राजहंसवनितेव मानसान्नास्य निःसरति तावकी स्तुतिः ॥ ४५ ॥

कन्यकां कुलविभूषणं गुणैरद्भुतैस्त्रिभुवनातिशायिनीम् ।
त्वत्करप्रणयिनीं विधाय स प्राप्तुमिच्छति समस्तवन्द्यताम् ॥ ४६ ॥

---

१ गिरिगुहासु ये अ. । २ त्वदसिरैन्द्र- रा. । ३ 'किं न वक्ति' इति सर्वत्र ।
४ प्राप्नुवत्सु अ. ।

तेन तस्य वचनेन चारुणा प्राप कुन्तलपतिः प्रसन्नताम् ।
तीव्ररोषविषवेगशान्तये भेषजं विनय एव तादृशाम् ॥ ४७ ॥

कीदृशी शशिमुखी भवेदिति स्पृश्यते स्म हृदये स चिन्तया ।
कामुकेषु मिषमात्रमीक्षते नित्यकुण्डलितकार्मुकः स्मरः ॥ ४८ ॥

अब्रवीच्च मनसः प्रसन्नतां दन्तकान्तिभिरुदीरयन्निव ।
ओष्ठपृष्ठलुठितस्मिताञ्चलः कुन्तलीनयनपूर्णचन्द्रमाः ॥ ४९ ॥

ईदृशीं सुजनतामजानता कार्मुकेण मुखरत्वमत्र मे ।
यत्कृतं किमपि तेन लज्जया भारती कथमपि प्रवर्तते ॥ ५० ॥

दोषजातमवधीर्य मानसे धारयन्ति गुणमेव सज्जनाः ।
क्षारभावमपनीय गृह्णते वारिधेः सलिलमेव वारिदाः ॥ ५१ ॥

दिग्जयव्यसनिना पुनः पुनस्तस्य किं प्रियमनुष्ठितं मया ।
रज्यते मयि दृढं तथाप्यसौ वेत्ति कश्चरितमुन्नतात्मनाम् ॥ ५२ ॥

तस्य भूरिगुणरत्नशालिनः स्नेहपूतहृदयस्य वाञ्छितम् ।
पारयामि न विधातुमन्यथा यत्स्थितं मनसि तद्विधीयताम् ॥ ५३ ॥

दर्शयन्तममृतद्रवोपमां वाचमिन्दुकरनिर्मलामिति ।
विक्रमाङ्कमपयात[1]साध्वसः साधुरेनमथ स व्यजिज्ञपत् ॥ ५४ ॥

किं तवान्यदुचितं वदान्यता यत्समादिशति तत्त्वया कृतम् ।
प्रार्थितार्थपरिपन्थितामगात्[2] कश्चुलुक्यकुलपार्थिवोऽर्थिनाम् ॥ ५५ ॥

वेत्सि मे पतिमवञ्चकं यदि स्वच्छतां स्पृशति चात्र ते मनः ।
तन्निवृत्य कुरु तुङ्गभद्रया मुद्रिते पदमुपान्तवर्त्मनि ॥ ५६ ॥

---

१ -मुपयात- अ. । २ -परिपन्थितां व्रजेत्कश्चिलुक्य- अ. ।

कैश्चिदेव सततप्रयाणकैस्तत्र शुद्धहृदयः करिष्यति ।
स त्वया परिचयं प्रतापिना पर्वणीन्दुरिव तिग्मरश्मिना ॥ ५७ ॥
गाहतेऽत्र धृतकार्मुके त्वयि प्रीतिदानमपि भीतिदानताम् ।
तेन तस्य महती विलक्षता यत्र[1] वेत्सि गुणपक्षपातिताम् ॥ ५८ ॥
नाद्य यावदवलोकिता जनैः क्वापि तस्य वचसामसत्यता ।
मादृशां शुभविपर्ययाद्यदि व्यक्तिमेष्यति भवादृशेषु सा ॥ ५९ ॥
एवमादिभिरनेन बोधितः कोविदेन वचनैः पुनः पुनः ।
ज्ञातचोलहृदयः स्वयं च स प्राङ्गिवेदितमगान्नदीतटम् ॥ ६० ॥
चोलभूमिपतिरप्यनन्तरं निर्जगाम नगरात्कृतोत्सवः ।
पुष्पसायकपताकया तया कन्यया सह सहासवक्त्रया ॥ ६१ ॥
सन्धिबन्धमवलोक्य निश्चलं तस्य कुन्तलनरेन्द्रसूनुना ।
शान्तसाध्वसमहारुजः प्रजाः स्वेषु धामसु बबन्धुरादरम् ॥ ६२ ॥
दिग्गजश्रवणभङ्गकारिभिर्दुन्दुभिध्वनिभिरस्य भैरवैः ।
अभ्रमभ्रमुभुजङ्गडिण्डिम-ध्वाननिर्भरमिव व्यराजत ॥ ६३ ॥
सर्वतः श्रवणभैरवस्फुरद्-दुन्दुभिप्रतिरवापदेशतः ।
सस्वनं द्विरदवृन्दघट्टनादस्फुटन्निव दिगन्तभित्तयः ॥ ६४ ॥
कर्णतालपवनोर्मिशीतलैः सिञ्चति स्म करशीकराम्बुभिः ।
दिग्गजानिव भयेन मूर्छितांस्तस्य वारणपरम्परा[2] पुरः ॥ ६५ ॥
तच्चमूरजसि[3] दूरमुद्गते यत्र दिग्भ्रममधत्त भास्करः ।
हेतुरत्र रजसां निवारणं कुञ्जरध्वजपटान्तवीजनैः[4] ॥ ६६ ॥

---

१ यत्र रा.। २ -परम्पराः ज.। ३ तत्र भूरजसि ब.। ४ -पतान्त- प्र.।

क्षोणिरेणुमिषतः सदाध्वगः स्यन्दने रचयति स्म भास्करः ।
पश्चिमाद्रिविषमस्थलीभुवां पूरणार्थमिव संग्रहं मृदः ॥ ६७ ॥

नन्दनद्रुमनिकुञ्जपुञ्जितैः पांसुभिः[1] कुसुमधूलिवासितैः ।
चौर्यकेलिशयनोपयोगतस्[2]तुष्यति स्म सुरपांसुला[3]जनः ॥ ६८ ॥

वीक्ष्य पुष्पमधु पांसुदूषितं[4] नन्दनं ध्रुवममुच्यतालिभिः ।
अन्धकारपटलच्छलेन यद् भृङ्गपूरितमिवाभवन्नभः ॥ ६९ ॥

जैत्रवाजिपृतनाखुरक्षत[5]-क्षोणिधूलिपटलीभिरध्वसु ।
तद्बलस्य सुगमत्वमागमन् पूरितानि[6] विषमस्थलान्यपि ॥ ७० ॥

चेतसोऽपि दधतीरलङ्घ्यतां लङ्घयद्भिरवटस्थलीभुवः ।
तस्य वाजिभिरजायत क्षितिर्भ्रान्तवातहरिणेव सर्वतः ॥ ७१ ॥

तेन सैन्य[7]धनुषां शिलीमुख-ज्यालताप्रणयिनां विभूतिभिः ।
तत्र तत्र विजयश्रियः कृते केलिकाननमिव व्यधीयत ॥ ७२ ॥

अप्रयाणरहितैः स पार्थिवः[8] प्राप कैरपि दिनैस्तरङ्गिणीम् ।
कार्यजातमसमाप्य धीमतां[9] निद्रया परिचयोऽपि कीदृशः ॥ ७३ ॥

रञ्जितः परिजनोऽस्य शीतल-स्वच्छया सपदि तुङ्गभद्रया ।
आगताः किमपि पृष्ठतस्तु ये पङ्कशेषमलभन्त ते जलम् ॥ ७४ ॥

दक्षिणार्णवतटादुपागतैस्तद्ध्वजैः पिशुनतां गतैरिव ।
शीघ्रमक्रियत मध्यवर्तिभिः सा प्रतीपगतिरब्धिवल्लभा ॥ ७५ ॥

---

१ पांशुभिः ज. । २ -शयनोपदेशत- अ. । ३ सुरपांशुला- ज. । ४ पांशुदूषितं ज. । ५ -कुरक्षत- प्र. । ६ सुभगत्वमागमत्पूरितानि ब. ; तद्बलानि सुगमत्वमानयन्पूरितानि अ. । ७ तेषु सैन्य- अ. । ८ स पार्थिवैः ज. । ९ धीतां प्र. ।

सिन्धुतीरनिलयानुरोधतस्तत्तथा बलमवाप दीर्घताम् ।
अन्तरक्षपितरात्रिभिर्जनैः प्राप्यते स्म नृपमन्दिरं यथा ॥ ७६ ॥

चोलकेलिसलिलावगाहन-प्राप्तभूरिघनसारपाण्डुरा ।
सा हिमाचलविटङ्कनिर्गता जाह्नवीव तटिनी व्यराजत ॥ ७७ ॥

तत्र दक्षिणतटे कृतस्थितिः कुन्तलेन्दुरवलोक्य तद्बलम् ।
बाहुमाहवसहस्रदीक्षितं वन्दते स्म परिचुम्बति स्म च ॥ ७८ ॥

द्राविडोऽपि नृपतिः कुतूहलाद् वीक्ष्य तत्कटकमुत्कटद्विपम् ।
राज्यमुद्धृतमनर्थपङ्कतः कन्यकावितरणादमन्यत ॥ ७९ ॥

प्रेषितैरथ तयोः परस्परं प्रेम्णि योग्यपुरुषैः प्रपञ्चिते ।
संगमः सकललोकसंमतो जायते स्म गुरुपुष्ययोरिव ॥ ८० ॥

एष स प्रियतमः श्रियः स्वयं कर्मणा मम शुभेन दर्शितः ।
इत्युदश्रुनयनः प्रभावतः कुन्तलक्षितिपतेरमंस्त सः ॥ ८१ ॥

पादयोः प्रणतये कृतोद्यमं तं मुदा द्रविडपार्थिवं ततः ।
विक्रमाङ्कनृपतिर्न्यवर्तयत्[2] तस्य संभ्रमविशेषतोषितैः[3] ॥ ८२ ॥

किं करोषि वयसाधिकेन मे क्षिप्यतां शिरसि पादपल्लवः ।
अद्यजातमपि मूर्ध्नि धार्यते किं न रत्नममलं वयोधिकैः[4] ॥ ८३ ॥

इत्युदीरितवता निरन्तरं तेन हर्षजलपूर्णचक्षुषा ।
कुन्तलेन्दुरगमन्मुदं परां द्राविडक्षितिपमालिलिङ्ग च ॥ ८४ ॥

अर्धासनप्रणयि[5]पूर्णमनोरथोऽथ
श्रीकुन्तलेश्वरमवोचत चोलभूपः ।

---

१ वन्दते प- प्र.; वन्दते च प- ब.। २ -नृपतिर्व्यवर्तयत् अ.।
३ -तोक्षतः अ.। ४ अब्धिजात- अ.। ५ -प्रणयि- अ.।

प्रत्यादिशन्दशनचन्द्रिकया किरीट-
रत्नातपं सदसि राजपरंपराणाम् ॥ ८५ ॥

अङ्गानि चन्दनरसादपि शीतलानि
चन्द्रातपं वमति बाहुरयं यशोभिः ।
चालुक्यगोत्रतिलकं[1] क्व वसत्यसौ ते
दुर्वृत्तभूपपरितापगुरुः प्रतापः ॥ ८६ ॥

धैर्यस्य[2] धाम निधिरद्भुतचेष्टितानां
दृष्टान्तभूरनवधेः करुणारसस्य ।
त्वं वेधसा विरचितः सकलादिराज-
निर्माण[3]सारपरमाणुसमुच्चयेन ॥ ८७ ॥

कन्या विभूषणमियं भुवनत्रयस्य
सिंहासनं विपुलमेतदयं ममात्मा ।
व्यस्तं समस्तमथवा तदिदं गृहाण
पुण्यैर्मम प्रणयमेतु यशःपताका ॥ ८८ ॥

कन्यान्तःपुरधाम्नि धैर्यनिधिना माधुर्यधुर्यैः पदै-
रित्यादि द्रविडेश्वरेण निबिडप्रेम्णा मुहुर्व्याहृतः ।
चोलीनां कुटिलासु कुन्तललतादोलासु लोलां दृशं
देवः सोऽथ विनोदयन्मुदमगाच्चालुक्यविद्याधरः ॥८९॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति[4]-
काश्मीरकभट्टश्रीबिल्हणविरचिते पञ्चमः सर्गः ॥ ५ ॥



---

१ -तिलकः ब. । २ वैधर्य अ. । ३ सकलादिराजः निर्माण- अ. ।
४ 'त्रिभुवनमल्लदेवविद्यापति' इति ज. पुस्तके नास्ति ।

# षष्ठः सर्गः

सह विभवभरेण तत्र पुत्रीं गुणनिधये नृपनन्दनाय दत्त्वा ।
कथमपि परिणेतुरभ्यनुज्ञामथ समवाप्य चचाल चोलराजः ॥ १ ॥

द्रविडनरपतेरदत्त वित्तं निरवधि कुन्तलनाथनन्दनोऽपि ।
यशसि रसिकतामुपागतानां तृणगणना गुणरागिणां धनेषु ॥ २ ॥

मुदितमनसि जातमानसिद्धौ गतवति तत्र गुणैकपक्षपाती ।
प्रतिपदमुदकण्ठत[1] क्षितीन्दुः कुसुममृदूनि मनांसि निर्मलानाम् ॥ ३ ॥

द्रविडपतिकथाद्भुतक्षणेषु क्षितिपतिसूनुरसौ गुणानुरागी ।
पुलकपरिकरैः कपोलपालीं विपुलमतिः परिपूरयांचकार ॥ ४ ॥

किमिति न गमनान्निवारितोऽसौ परिचयमेष्यति चक्षुषोः पुनः किम् ।
इति सुजनशिखामणिः कुमारः किमपि चिरं परिचिन्तयांचकार ॥ ५ ॥

द्रविडनृपतिपुत्रिकां चकार त्रिभुवनदुर्लभसंपदास्पदं सः ।
प्रणयिषु शुभचेतसां प्रसादः प्रसरति सन्ततिमप्यनुग्रहीतुम् ॥ ६ ॥

रणरभसविलासकौतुकेन स्थितिमथ बिभ्रदसौ यशोवतंसाम् ।
विधिहतकदुराग्रहादकाण्डे गतमशृणोद्द्रविडेन्द्रमिन्द्रधाम्नि ॥ ७ ॥

मृदुहृदयतया गुणानुरागादतिमहतः प्रणयाच्च राजपुत्रः ।
हिमकरकरकाण्डपाण्डुगण्ड-स्थलगलदश्रुजलश्चिरं ललाप ॥ ८ ॥

द्रविडविषयराज्यविप्लवेन श्रवणपथातिथिना ततः सखेदः ।
अभिजनवति चोलराजपुत्रे श्रियमभिषेक्तुमसौ समुच्चचाल ॥ ९ ॥

---

१ प्रतिपदमदुत्कण्ठत अ. ।

करटिशतविकीर्णकर्णताल[1]-व्यजनसमीरणशीतलीकृतानि ।
अथ धरणिभुजां पिबन्यशांसि क्षितिपतिरादिपुरीमवाप काञ्चीम् ॥१०॥

समजनि कलमेखलाकलाप-ध्वनिजयडिण्डिमसज्जपुष्पचापम् ।
अथ चटुलकटाक्षबाणवर्ष-प्रगुणममुष्य पुरः पुरन्ध्रिचक्रम् ॥ ११ ॥

अधरहसितकिंशुका शुकाय क्रमुकदलं वदनस्थमर्पयन्ती ।
क्षितिपतितनयेऽत्र कापि नेत्र-प्रणयिनि चुम्बनचातुरीमुवाच ॥ १२ ॥

गृहशिखरमगम्यमध्यरोहद् द्रुतं[2]मवधीरितपातभीतिरन्या ।
मरणमपि तृणं समर्थयन्ते मनसिजपौरुषवासितास्तरुण्यः ॥ १३ ॥

कलकलमपरा मुधा विधाय क्षितितिलकान्नयनान्तमाससाद[3] ।
अवतरति मृगीदृशां तृतीयं मनसिजचक्षुरुपाये[4]दर्शनेषु ॥ १४ ॥

हृदि विहितपदेन शुद्धभासा कृतमधरं[5] धरणीन्द्रसूनुनेव ।
निपतितमवधीर्य हारमन्या हरिणविलोलविलोचना जगाम ॥ १५ ॥

उरसि मनसिजावतंसलीला-समुचितकोमलपल्लवानुकाराम् ।
नखलिपिमपरा प्रकाशयन्ती सुरतविमर्दसहत्वमाचचक्षे ॥ १६ ॥

अभजत मणिकुण्डलं परस्याः श्रवणपरिच्युतमंसदेशमेत्य ।
गलविगलित[6]पुष्पबाणचक्र-श्रियमसितोत्पलचारुलोचनायाः ॥ १७ ॥

परिकलितचुलुक्यराजपुत्र-प्रथमविलोकनकौतुकत्वराणाम् ।
इति नगरकुरङ्ग[7]लोचनानामभवदनङ्गविलोभनो विलासः ॥ १८ ॥

---

१ -विकीर्णताल- प्र. । २ -मगम्यमारुरोह द्रुत- अ. । ३ -तिलकं नयनान्तमानिनाय अ. । ४ -चक्षुरपाय- अ. । ५ कृतमधुरं अ. । ६ करविगलित- अ. । ७ चपलकुरङ्ग- अ. ।

नरपतितनयः कयापि कोप-स्फुरितै[1]रदच्छदलेखयालुलोके ।
प्रकटितपटुपञ्चबाणलीला-कलकिलकिञ्चितमीक्ष[2]णाञ्चलेन ॥ १९ ॥

कनकसदनवेदिकान्तराल-ग्रथितपदः क्षितिपालनन्दनोऽसौ ।
सुरशिखरितटीविटङ्क[3]मध्य-प्रणयिनमुष्णकरं निराचकार ॥ २० ॥

कतिचिदपि दिनानि तत्र नीत्वा परिसरभूमिषु भूरिभिर्विलासैः ।
चरणतलनिविष्टदुष्टवर्गः पुरमवलोकयति स्म गाङ्गकुण्डम् ॥ २१ ॥

द्रविडनरपतिप्रतापभीत्या किमपि गते पयसां निधौ परस्तात् ।
यदविहितविवाहमङ्गलाया बहिरिव निर्गतमादिधाम लक्ष्म्याः ॥ २२ ॥

गगनमुपगतेन शोभते यन्निरुपमकाञ्चनवप्रमण्डलेन ।
सुरपुरमिव हेमशैलमध्ये विबुधविभूतिभरात्कृतप्रवेशम् ॥ २३ ॥

विघटितपरिपन्थिसैन्यसार्थः पदमधिरोप्य स तत्र चोलसूनुम् ।
नयनचुलुकै[4]र्लुण्ठ्यमानकान्तिर्द्रविडवधूभिरुवास मासमात्रम् ॥ २४ ॥

विघटनमटवीधनुर्धराणां विषमपथेषु विधाय लीलयैव ।
पुनरपि स जगाम तुङ्गभद्रां विरचितवन्दनमालिकां तरङ्गैः ॥ २५ ॥

अथ कतिषुचिदेव दैवयोगात् परिगलितेषु दिनेषु चोलसूनोः ।
श्रियमहरत राजिगाभिधानः प्रकृतिविरोधहतस्य वेङ्गिनाथैः[5] ॥ २६ ॥

कुटिलमतिरसौ विशङ्कमानः पुनरमुमेव पराभवप्रगल्भम् ।
प्रगुणमकृत पृष्ठकोपहेतोः प्रकृतिविरोधिनमस्य सोमदेवम् ॥ २७ ॥

---

१ कोपच्छुरित- अ. । २ -किञ्चितिमीक्ष- अ. । ३ -तटीटङ्क- प्र. । ४ नयनचुलक्य- प्र. । ५ 'चेङ्गि' इत्यस्ति 'वेङ्गि' इति वेति ज. पुस्तके स्पष्टं नास्ति' इति ब. टि. ; चेङ्गिनाथः ब., रा. ; वेङ्गिनाथः ब. पुस्तकशुद्धिपत्रे ।

सुभट[1]शतनिशातखड्गधारा-विहरणसव्रणपादपल्लवेव ।
अपि नयनिपुणेषु नो भरेण क्षिपति पदं किमुत प्रमादिषु श्रीः ॥२८॥

अवतरति मतिः कुपार्थिवानां सुकृतविपर्ययतः कुतोऽपि तादृक् ।
झटिति विघटते यया नृपश्रीस्तटगिरिसंघटितेव नौः पयोधेः ॥ २९ ॥

व्रतमिदमिह शस्त्रदेवतानां दृढमधुनापि कलौ निरङ्कुशेऽपि ।
अविनयपथवर्तिनं यदेताः प्रबलमपि[2] प्रधनेषु वञ्चयन्ति ॥ ३० ॥

इति मुषितधियः श्रिया प्रयान्त्या रभसवशादविचिन्त्य दग्धभूपाः[3] ।
बलभरबहुमानतः पतङ्ग-व्रतमुपयान्ति परप्रतापदीपे ॥ ३१ ॥

सकलमपि विदन्ति हन्त शून्यं क्षितिपतयः प्रतिहारवारणाभिः[4] ।
क्षणमपि परलोकचिन्तनाय प्रकृतिजडा यदमी न संरभन्ते ॥ ३२ ॥

विदधति कुधियोऽत्र देवबुद्धिं स्फटिकशिलाघटनासु वर्तुलासु ।
इति मनसि विधार्य[5] दग्धभूपास्त्रिनयन[6]लिङ्गमपि स्पृशन्ति मिथ्या ॥३३॥

अविरततरुणीसहस्रमध्य-स्थितिविगलत्पुरुषव्रता इवैते ।
प्रतिपदमतिकातराः क्षितीशाः[7] परिकलयन्ति भयं समन्ततोऽपि ॥३४॥

अभिसरणपरा सदा वराकी समरमहाध्वसु रक्तपङ्किलेषु ।
हृदि धरणिभुजामियं नृपश्रीर्निहितपदैव कलङ्कमातनोति ॥ ३५ ॥

गुणिनमगुणिनं वितर्कयन्ती स्वजनममित्रमनाप्तमाप्तवर्गम् ।
वितरति मतिविप्लवं नृपाणामियमुपसर्पणमात्रकेण लक्ष्मीः ॥ ३६ ॥

---

१ सभट- प्र. । २ प्रबलमतिं अ. ; अयं पाठभेदः भ. रि. पुस्तके नास्ति । ३ दग्धभूताः अ. ; अयं पाठभेदः भ. रि. पुस्तके नास्ति । ४ -वारुणाभिः अ. । ५ निधाय अ. । ६ -भूता त्रिनयन- प्र. । ७ क्षितीशाः प्र. ।

विधिलिखितमिदं कुटुम्बमध्ये नृपतिपदं समुपैति कश्चिदेव ।
इति हृदि न विचारयन्ति भूपाः कुलमपि निर्दलयन्ति राज्यलुब्धाः ॥ ३७ ॥

अनुचितममुना[1] किमग्रजस्य व्यवसितमुन्नतचेतसा यदस्मिन्[2] ।
अपकरणधिया चकार सन्धिं कुलरिपुणा सह चोलराजिगेन ॥ ३८ ॥

अथ नृपतनये कृतप्रयाणे गलितनयस्य वधाय[3] राजिगस्य ।
त्वरिततरमुपागतोऽस्य पृष्ठे सह सकलेन बलेन सोमदेवः ॥ ३९ ॥

अनुसरदसितातपत्रमैत्रीं[4] मधुकरमण्डलमाससाद येषाम् ।
अतिविपुलकपोलदानपङ्क-प्रभवसरोरुहिणीदलानुकारम् ॥ ४० ॥

अगणितसृणिभिः प्रधावितैर्यैः कुलगिरयः परिघट्टितास्तटेषु ।
मुमुचुरिव मुखैरजस्रमस्रं विगलितधातुतरङ्गिणीमिषेण ॥ ४१ ॥

निजदशनयुगैकबद्धवासां श्रियमिव कर्तुमुपोढकौतुका ये ।
स्मरणशरणपङ्कजानि[5] चक्रुः सततममर्षपुरःसराः सरांसि ॥ ४२ ॥

श्रवणमधुरविस्फुरद्ध्वनीनां व्यधुरुपकारधियेव षट्पदानाम् ।
मदसलिलमुदारसौरभं ये विटपिविधूननपातिभिः प्रसूनैः ॥ ४३ ॥

निजतनुभरगौरवाद्गलन्तीं[6] क्षितिमिव ये दधति स्म शैलतुङ्गाः ।
मदमुकुलितलोचनाश्चलन्तः किमपि करैः सविलासमुन्नमद्भिः ॥ ४४ ॥

---

१ अनुचितमिदमाः ( 'आः' इत्यस्य मूर्ध्नि 'खेदो' इति टिप्पणी ) अ. ; अनुचितमिदमाः भ. रि. ; अनुचितमिदमीस्वेन्दोः भ. प्र. । २ -चेतसो यदस्य अ. । ३ विधाय अ. । ४ -दसितं त्रिपत्र- अ. । ५ विदलितसरसीरुहाणि अ. । ६ -वात्पतन्तीं अ. ।

रणजलधिविलोडनप्रचण्डा गिरय इव द्विरदेश्वरास्तदीयाः ।
दधुरतिमहतीमतीतसंख्याः श्रियमधिरोहितयोधमण्डलास्ते ॥ ४५ ॥

सम्बन्धकुलकम्[1] ।

कुलिशकठिनलोहबन्धयोगान्निर्ज[2]गृहकुट्टिमवद्विलङ्घ्यते स्म ।
विशिखशक[3]लकण्टकावकीर्णा रणखुरली खुर[4]मण्डलैर्यदीयैः ॥ ४६ ॥

व्यजनचटुलवालधिप्रपञ्च-प्रचुरसमीरणपुञ्जमध्यवर्ती[5] ।
त्वरितगमनलङ्घितोऽपि येषां मरुदविभाव्यतया न लज्जते स्म[6] ॥ ४७ ॥

प्रतिफलननिभा[7]त्सहस्रभासा मणिमयपल्ययनप्रतिष्ठितैर्न[8] ।
निजरथवहनार्थमर्थिता ये[9] स्वयमधिरुह्य परीक्षिता[10] इवासन् ॥ ४८ ॥

जवस[11]मुचितधावनानुरूपा[12] किमिति कृता पृथुला न नाथ पृथ्वी[13] ।
नभसि खुरपुटैरिति[14] स्फुरद्भिर्विधिमिव ये स्म मुहुः प्रतिक्षिपन्ति ॥४९॥

---

१ ज. पुस्तके विद्यमानमप्येतत् ब. पुस्तके नास्ति । २ अ. पुस्तकमन्तरा सर्वत्र -योगा निज- । ३ विशिखराक- प्र. । ४ -खुरली रघुम- प्र; -खुरली रथम- ब. । ५ -सगारणपुञ्जमन्यवर्त्तम् प्र. ; इदं ज. पुस्तकेऽस्पष्ट-मस्ति ; -समीरणपुञ्जमध्यवृत्ती अ. । ६ विलज्जते स्म अ. ; अयं पाठभेदः भ. रि. पुस्तके नास्ति । ७ प्रतिपलनवशा- अ. ; प्रतिफलननिभा प्र. ; प्रतिफलननिभाः ब. । ८ -यनान्तवर्तिनीषु अ. प्र. ; -यनान्तवर्तनीषु अ., भ. रि. । ९ -मसाश्रिनाथि ब. टि. ; -मर्थिनापि प्र. ; -मर्थिना ये अ. ; -माश्रिता ये ब. । १० परिक्षिता प्र. । ११ 'रजम' इति ब. पुस्तकशुद्धिपत्रे ; जवम- रा. । १२ जवमनुचितधाव-नानुरूप प्र. ; रवमनुमितधावनानुरूपं ब. । १३ कृत पृथुला नाय पृथ्वी प्र. ; कृता पृथुला न नाथ पृथ्वी ( 'नाथ' इत्यस्य मूर्ध्नि हे इति टिप्पणी ) अ. ; कृत पृथुली न हे नाथ पृथ्वी अ. प्र. ; कृता पृथुला त्वया न पृथ्वी ब. । १४ खुररवैरिति अ. ।

प्रतिदिशमधिरोहिताश्ववारा:[1] परिचितकाञ्चनचित्रवर्मबन्धाः[2] ।
अगणितकृतपङ्क्तयो हयास्ते कमिव न चक्रुरुपक्रमं तदीयाः[3] ॥ ५० ॥

पञ्चभिः कुलकम्[4] ।

असितविलसितेन[5] तद्बलानामसिलतिकानिवहेन निर्मलेन ।
गगनगिरितटी नवेन्द्रनीलै[6]-द्युतिशतनिर्झरधारिणीव रेजे ॥ ५१ ॥

क नु न[7] विलसति स्म कुन्तमाला कलितशिखण्डिशिखण्डमण्डनश्रीः ।
क्षणमविरहिता[8] विपक्षसेना[9]-भटशिरसामिव मण्डलैस्तदीया[10] ॥५२॥

बहुभिरभिहितैः किमद्भुतैर्वा भयजननं भुवनैकमल्लसैन्यम् ।
रणरसचलितं विलोक्य केषामलभत चेतसि नान्तरं विकल्पः ॥ ५३ ॥

द्रविडबलभरे क्रमादवाप्ते निकटमुदारभुजस्य राजसूनोः ।
अपि नृपतिरसौ समीपमागादपकरणावसरं चिरादवाप्य ॥ ५४ ॥

ग्रहकलितमिवाग्रजं विलोक्य प्रहरणसंमुखमश्रुपूर्णनेत्रः ।
किमपि किमपि[11] विक्रमाङ्कदेवश्चिरमनुचिन्त्य निवेदयांचकार ॥ ५५ ॥

अहह महदनर्थबीजमेतद् विधिहतकेन विरोधसारिणीभिः[12] ।
अविनयरसपूरपूरिताभिर्विहितमकीर्तिफलप्रदानसज्जम् ॥ ५६ ॥

---

१ –रोहिताश्ववराः प्र. । २ –चित्रकर्मबन्धाः भ. रि. । ३ ४५श्लोकात् ५०श्लोकं यावत् ज. पुस्तके अक्षराणि , घर्षणेन केनचनान्येन वा कारणेन , क्वचित्क्वचिन्नितान्तमस्पष्टानि सन्ति ; तथापि 'रणखुरलीखुर' इति 'पृथुला न नाथ' इत्यादि च सुवाच्यमस्ति । ४ इदं ब. पुस्तके नास्ति । ५ –बिलसितन प्र. । ६ –नीला ब. । ७ क न न अ. । ८ –मधिविहता अ. प्र. ; –मपिविहता भ. रि. । ९ विपक्षसेन– प्र. । १० मण्डली त तदीयाः अ. ; मण्डली तदीयाः अ. प्र. ; मण्डलीस्तदीयाः भ. रि. । ११ 'ज. पुस्तके एकमेव 'किमपि' अस्ति' इति ब. डि. । १२ –सारणीभिः ब. ।

इह निहतनयः समागतो यत् सम[1]मसुना परिपन्थिनाग्रजो मे ।
समरशिरसि संचरन्पृषत्कैः[2] कथमपरामृशता मया निवार्यः ॥ ५७ ॥

पितुरपि परिपन्थिनीं विधाय श्रियमहमत्र निवेशयांबभूव ।
सपदि कथमिमं कदर्थयामि व्यथयति मामहहा[3] महाननर्थः ॥ ५८ ॥

अपसरणमितः करोमि किंस्वित्[4] प्रसरति गोत्रवधाय नैष बाहुः ।
परमयमयशांसि दुष्टलोकः किमपि निपात्य मयि प्रमोदमेति ॥ ५९ ॥

इति गिरमभिधाय निष्कलङ्कां विशदमनाः शनकैर्यशोधनोऽसौ[5] ।
अनुनयवचनानि तस्य पार्श्वे कति न विसर्जयति स्म राजपुत्रः ॥ ६० ॥

स तु शपथशतैः[6] प्रपद्य सर्वं वितथवचाः कुलपांसनत्वमासः ।
क्षणमनुगुणमैक्षत प्रहर्तुं मलिनधियां धिगनार्जवं चरित्रम् ॥ ६१ ॥

किमिदमुपनतं यशोविरोधि त्रिदिवगतः किमु वक्ष्यते[7] पिता मे ।
इति मनसि निधाय जातनिद्रं नृपतनयं शशिमौलिरादिदेश ॥ ६२ ॥

त्वमिह महति वत्स देवकार्ये ननु गुणवानवतारितो मयैव ।
तरलयति मुधा विकल्पदोला किमिति[8] मनस्तव शुद्धधैर्यधाम्नः ॥६३॥

सपदि न शुभमस्ति भोगहेतोस्तिल[9]परिमाणमपि त्वदग्रजस्य ।
इह हि विहितभूरिदुष्कृतानां[10] विगलति पुण्यचयः[11] पुरातनोऽपि ॥६४॥

भव भुवनमहोत्सवे तदत्र प्रगुणधनुः परिपन्थिनां प्रमाथे ।
स्मरसि न किमिति स्थितिस्तवैषा ननु भुवि धर्मविरोधिनां वधाय ॥६५॥

---

१ यं सम- अ. । २ संचरत्पृषत्कैः अ. । ३ मे हहहा अ. । ४ किञ्चित् ज. । ५ शतशो यशोधनोऽसौ अ. । ६ शतशपथैः अ. । ७ वक्षते ज. । ८ कमिति प्र. । ९ मोहहेतोस्तिल- ब. । १० दुःखितानां अ. । ११ पुण्यवयः प्र. ।

गिरमिति स निशम्य विश्वभर्तुर्गिरितनयादयितस्य मुक्तनिद्रः ।
वचनमिदमलङ्घ्यमिन्दुमौलेरिति रणकर्मणि निश्चयं चकार[1] ॥६६॥

प्रसरदुभयतः[2] प्रहारसज्जं बलयुगलं तदवेक्ष्य वीक्षते स्म ।
समुचितसमरोपभोगलोभात्[3] प्रतिकलमुत्पुलकं भुजद्वयं सः ॥ ६७ ॥

मदकरटिनमुत्कटप्रतापः प्रकटितै[4]र्वीरमृदङ्गधीरनादः ।
मथनगिरिमिवाधिरुह्य[5] वेगात् प्रतिबलवारिधिलोडनं चकार ॥ ६८ ॥

अहमहमिकया प्रधाविताभ्यां मिलितममुष्य बलं तयोर्बलाभ्याम् ।
सलिलमभिमुखं सहाम्बु[6]राशेस्तदनु महानद्योरिवोदकाभ्याम् ॥६९॥

मुखमसितपताकया पतन्त्या ध्वजगरुडः परिचुम्बितं दधानः ।
वदनपरिगृहीतपन्नगस्य व्यतनुत सत्यगरुत्मतः प्रतिष्ठाम् ॥ ७० ॥

प्रकटितपटुमौक्तिकावतंस-द्विरदशिरःस्थलसंगतिं[7] प्रपद्य ।
अलभत परमार्थसिंहलीलां करिवरकेतुपरिच्युतो[8] मृगेन्द्रः ॥ ७१ ॥

कथमपि विनिपत्य संचरन्तः क्षतजतरङ्गवतीषु चिह्नमत्स्याः ।
सुरयुवतिविलोचनानि संख्ये विदधुरकृत्रिममत्स्यशङ्कितानि ॥ ७२ ॥

रुधिरपटलकर्दमेन दूरं रणभुवि दुर्गमतामुपागतायाम् ।
गमनं[9]मनिमिषप्रियाजनस्य प्रियमकरोदवलम्बनानपेक्षम् ॥ ७३ ॥

प्रहतिनिवहमूर्छितोऽधिरोहः स्वकरटिकर्णपुटानिलैः प्रबुध्य ।
अपरसुभटपातिते प्रहर्तर्यनुशयमापदलब्धवैरशुद्धिः ॥ ७४ ॥

---

१ निश्चयांचकार अ. । २ प्रसभमुभयतः अ; प्रसरदुभयत प्र. । ३ -भोग लाभात् अ. । ४ -प्रतापप्रकटित- अ. । ५ -मिवारुह्य प्र. । ६ महाम्बु- अ. । ७ -स्थलसंगतं अ. । ८ -वरचिह्नपरिच्युतो अ. । ९ गगन- अ. ।

नयनगतमरातिवीरचूडा-मणिदलनप्रभवं परागमेकः ।
करिदशनविदारितात्मवक्षः-स्थलरुधिराञ्जलिभिर्निराचकार ॥ ७५ ॥

महति समरसंकटे भटोऽन्यः प्रतिभटनिर्दलनात्समाप्तशस्त्रः ।
अगणितमरणः प्रविश्य वेगादरिकरतः करवालमाचकर्ष ॥ ७६ ॥

असुभिरपि[1] यियासुभिः प्रविश्य प्रतिभटमूर्धनि कोऽपि दत्तपादः ।
फलममनुत जन्मनोऽपि[2] लब्धं यशसि रतिर्महतां न देहपिण्डे ॥७७॥

विघटितकवचश्चचार कश्चित् प्रतिभटमुज्झितकङ्कटं विलोक्य ।
विमलविजयलालसाः खलानामवसरमल्पमपि प्रतिक्षिपन्ति ॥ ७८ ॥

रुधिरभृतकपालपङ्क्तिमध्ये मदकरटी विनिपत्य कर्णतालैः ।
शिशिरमिव चकार पानपात्र-प्रणयिनमासवमागतस्य मृत्योः ॥ ७९ ॥

उपरि निपतितः कपालशुक्तेः श्रवणपुटः करिणः कृपाणलूनः ।
समरभुवि कृतान्तपानलीला-चषकपिधानविलासमाससाद ॥ ८० ॥

अनियतविजयश्रियि प्रवृत्ते[3] चिरमिति तत्र महाहवप्रबन्धे ।
प्रतिसुभटकपालपाटनाय द्विरदमुदञ्चयति[4] स्म राजसूनुः ॥ ८१ ॥

क्षणमुदचलदुच्चलत्पताके[5] द्रविडबले क्षणमग्रजस्य सैन्ये ।
रणभुवि स चचार यत्र यत्र[6] न्यपिबदरातियशांसि तत्र तत्र ॥ ८२ ॥

पददलितबृहत्कपालजाले करटिनि तस्य दुरापभाजनानाम् ।
सुभटरुधिरसीधुपानकेलिर्व्यघटत तत्र पिशाचसुन्दरीणाम् ॥ ८३ ॥

---

१ असुभिरपि ज. । २ फलमिह मनुजन्मनोऽपि अ. । ३ -श्रिय प्रवृत्ते अ. । ४ -मुदञ्चरति अ. । ५ -दुच्चलत्पताके अ. । ६ तत्र रा. ।

ध्रुवमरिषु पदं व्यधत्त लक्ष्मीः सुरभिकुशेशयकोशकेलिसक्ता ।
नृपसुतकरवाललेखया यन्मधुकरमालिकयेव चुम्ब्यते स्म ॥ ८४ ॥

अनुकृतसमवर्तिपानलीला-चषककरालकपालशुक्तिमध्ये[1] ।
करिदशनपरंपरा निपत्य श्रियमतनोदुपदंशमूलकानाम् ॥ ८५ ॥

वशमवनिपतिद्वयं नयन्ती चटुलपृषत्ककटाक्षमालिकाभिः ।
क्षितिपतितनयेन[2] वीरलक्ष्मीः सुचिरमनर्त्यत सङ्गराग्ररङ्गे ॥ ८६ ॥

कुलिशनिशितकङ्कपत्रभिन्नास्त्रिभुवनभीमभुजस्य राजसूनोः ।
प्रतिभटकरटिस्थिताः प्रवीराः प्रणतिपरा इव संमुखा निपेतुः ॥ ८७ ॥

द्विरदपतिरमुष्य शत्रुसेना-भटमुखपद्मविमर्दकेलिकालः ।
झटिति रणसरश्चकार लक्ष्मी-करधृतविभ्रमपुण्डरीकशेषम्[3] ॥ ८८ ॥

धृतसुभटकरङ्कमङ्कवर्ति-द्विरदघटाविकटास्थिचक्रवालम् ।
रणमनणु कृतान्तभुक्तशेष-प्रणयि बभूव शिवासहस्रभोग्यम्[4] ॥ ८९ ॥

किमपरमुपरि प्रतापभाजां विहितपदः स बभञ्ज राजयुग्मम् ।
द्रविडपतिरगात्क्वचित्पलाय्य न्यविशत बन्धनधाम्नि सोमदेवः ॥ ९० ॥

उभयनरपतिप्रतापलक्ष्म्यौ विलुलुठतुश्चरणद्वये तदीये ।
त्रिभुवनमहनीयबाहुवीर्य-द्रविणविभूतिमतां किमस्त्यसाध्यम्[5] ॥ ९१ ॥

विहितसमरदेवतासपर्यः[6] परिकरितः क्षितिपालयुग्मलक्ष्म्या ।
अथ शिथिलितकङ्कटस्तटान्त-स्थितकटकां स जगाम तुङ्गभद्राम् ॥ ९२ ॥

वितरितुमिदमग्रजस्य सर्वं पुनरुपजातमतिः स राजपुत्रः ।
तुहिनकिरणखण्डमण्डनेन स्फुरदशरीरगिरा रुषा न्यषेधि ॥ ९३ ॥

---

१ -शुक्तिकानाम् अ. । २ -तनयस्य अ. । ३ पुण्डरीककोशम् ब. ।
४ -सहस्रयोग्यम् ब. । ५ किमस्त(स्त्य)साध्यम् भ. रि. । ६ -देवतासपर्यः प्र. ।

मुखपरिचितराजहंसभङ्ग्या सरसिरुहेष्विव पूरयत्सु शङ्खान् ।
सरिति घटिकयेव शोधयन्त्यां प्रतिफलितो[1]र्कमिषेण लग्नवेलाम् ॥ ९४ ॥

अतिशिशिरतया मरुत्सु भक्त्या[2] कुलसरितामिव वारि धारयत्सु ।
नभसि विकिरतीव गाङ्गमम्भः पवनसमाहृतशीकरच्छलेन ॥ ९५ ॥

अतिविशदतया दिशां मुखेषु स्मितमिव केतकमित्रमुद्वहत्सु ।
निखिलभुवनमानसेषु हर्ष-प्रसरवशेन नितान्तमुत्सुकेषु ॥ ९६ ॥

वरकरिषु गभीरदुन्दुभीनां ध्वनिमिव संजनयत्सु गर्जितेन ।
दिशि दिशि तुरगेषु सान्द्रशङ्ख-स्वनकमनीयसहर्षहेषितेषु ॥ ९७ ॥

अथ सुरपथवल्गद्दिव्यभेरीनिनादं
　　प्रशमितपरितापं भर्तृलाभात्पृथिव्याः ।
अलभत चिरचिन्ताचान्तचालुक्यलक्ष्मी-
　　क्लममुषमभिषेकं विक्रमादित्यदेवः ॥ ९८ ॥

पञ्चभिः कुलकम्[3] ।

श्रीचालुक्यनरेन्द्रसूनुरनुजं तत्रैव पुण्ये दिने
　　कारुण्यातिशयादसूत्रयदसौ पात्रं महत्याः श्रियः ॥
दासी यद्भवनेषु विक्रमधनक्रीता ननु श्रीरियं[4]
　　तेषामाश्रित[5]पोषणाय गहनं किं नाम पृथ्वीभुजाम् ॥ ९९ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते षष्ठः सर्गः[6] ॥ ६ ॥

---

१ प्रतिफलता- अ. ।　२ सत्त्वया ज. ।　३ इदं ज. पुस्तके एव ।
४ -क्रीतानुश्रीरियम् प्र. ।　५ तेषाश्रित- प्र. ।　६ 'छ श्री श्रमणसङ्घाय' इति
अ. प्र. पुस्तके विशेषः ।

# सप्तमः सर्गः

स सर्वमावर्ज्य रिपुप्रमाथी मनोरथानामथ पूरणेन ।
परिभ्रमन्युद्धकुतूहलेन दिग्दन्तिशेषा:[1] ककुभश्चकार ॥ १ ॥

गते समाप्तिं नरनाथचक्रे निचोलकारासित[2]चापदण्डः ।
निर्वाप्य चोलस्य पुनः प्रतापं क्रमेण कल्याणमसौ विवेश ॥ २ ॥

अत्रान्तरे मन्मथबालमित्रं[3] लतावधूविभ्रमसूत्रधारः ।
स्थानोपदेशी पिकपञ्चमस्य शृङ्गारबन्धुर्मधुराविरासीत् ॥ ३ ॥

शीतर्तुभीत्या विविशुः समस्ताः किं कन्दरासीमनि चन्दनाद्रेः ।
यन्निःसरन्ति स्म हिमव्यपाये दिवा च रात्रौ च ततः समीराः ॥ ४ ॥

कृतप्रकोपाः पवनाशनानां निवासदानादिव पन्नगानाम् ।
विनिर्ययुश्चन्दनशैलकुञ्जादाशां[4]मुदीचीं प्रति गन्धवाहाः ॥ ५ ॥

रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥ ६ ॥

अहो नु चैत्रं प्रति कापि भक्तिरकृत्रिमा केरलमारुतस्य ।
द्राघिष्ठमध्वानमसौ विलङ्घ्य सर्वत्र तस्यानुचरो यदासीत् ॥ ७ ॥

देया शिलापट्टकपाटमुद्रा[5] श्रीखण्डशैलस्य दरीगृहेषु ।
वियोगिनीकण्टक एष वायुः कारागृहस्यास्तु चिरादभिज्ञः ॥ ८ ॥

---

१ दिग्दन्तिसशेषाः प्र. । २ निचोलकावासित भ. रि. । ३ –बाणमित्रं ब. । ४ –कुञ्जाद्दिशा– अ. । ५ –कपाटमुद्रा प्र. ; –पट्टमुद्रा अ. ।

विरूक्षणीयः सखि दाक्षिणात्यस्त्वया न वायुः परुषैर्वचोभिः ।
यत्कोपनिःश्वासपरंपराभिः पीनत्वमायात्ययमुष्णतां च ॥ ९ ॥

बाणेन हत्वा मृगमस्य यात्रा निवार्यतां दक्षिणमारुतस्य ।
इत्यर्थनीयः शबराधिराजः श्रीखण्डपृथ्वीधरकन्दरस्थः[1] ॥ १० ॥

यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः ।
केलिप्रसङ्गे शबराङ्गनानां स हि स्मरग्लानिमपाकरोति ॥ ११[2] ॥

दुराग्रहश्चन्दनमारुतस्य सदा यदन्यर्तुपराङ्मुखोऽयम् ।
अनेन चैत्रः सुतरामसह्यश्चन्द्रोदयेनेव शरत्प्रदोषः ॥ १२ ॥

वियोगिनीनां किमु पापमेतन्मेधाथवा दक्षिणमारुतस्य ।
कदापि दिङ्मोह[3]वशाद्यदेष न चन्दनाद्रेः परतः प्रयाति ॥ १३ ॥

इति भ्रमत्सौरभमांसलेन निमीलितानां मलयानिलेन ।
अभूच्चिरं भूमिगृहस्थितानां प्रलापमाला प्रियकाङ्क्षिणीनाम् ॥ १४ ॥

कुलकम्[4] ।

कन्दर्पदेवस्य विमानसृष्टिः प्रासादमाला[5] रसपार्थिवस्य ।
चैत्रस्य सर्वर्तुविशेषचिह्नं दोलाविलासः सुदृशां रराज[6] ॥ १५ ॥

दोलाधिरूढस्य[7] वधूजनस्य नितम्बभारेण गतागतेषु ।
त्रुटिर्यदालम्बगुणेषु नाभूत् सा भाग्यशक्तिः कुसुमायुधस्य ॥ १६ ॥

जनेषु दोलातरलाः पुरन्ध्रीः संभूय भूयःसु विलोकयत्सु ।
लक्ष्यस्य विस्तीर्णतया मनोभूरवन्ध्यपातैरिषुभिर्ववर्ष ॥ १७ ॥

---

१ श्रीखण्डपृथ्वीकन्दरस्थः प्र.। २ अस्यानन्तरम् 'युग्मम्' इति अ.। ३ दिग्मोह– ब.। ४ केवलम् अ. पुस्तके। ५ प्रसादमाला ब.। ६ बभूव अ.। ७ दोलाधिरूढस्य रा.।

दोलाविनोदेन विलासवत्यः[1] सुदूरमारुह्य निवर्तमानाः ।
अर्धं नभःप्राङ्गणसङ्गिनीनां विलासमापुस्त्रिदशाङ्गनानाम् ॥ १८ ॥

विलासदोलाफलके नितम्ब-विस्ताररुद्धे परितस्तरुण्याः ।
लब्धः परं कुञ्चितकार्मुकेण तत्रावकाशः कुसुमायुधेन ॥ १९ ॥

सौन्दर्यमिन्दीवरलोचनानां दोलासु लोलासु यदुल्ललास ।
यदि प्रमादा[2]ल्लभते कवित्वं जानाति तद्वर्णयितुं मनोभूः ॥ २० ॥

दोलासु यद्दोलनमङ्गनानां यन्मल्लिका यच्च लवङ्गवायुः ।
सा विश्वसंमोहनदीक्षितस्य मुख्याङ्गसंपत्कुसुमायुधस्य ॥ २१ ॥

प्रसार्य पादौ विहितस्थितीनां दोलासु लोलांशुकपल्लवानाम् ।
मनोरथानामपि यन्न गम्यं तद्द्रष्टुमापुः सुदृशां युवानः ॥ २२ ॥

उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बजाड्याः ।
दोलाविलासेन जितश्रमत्वात् प्रकर्षमापुः पुरुषायितेषु ॥ २३ ॥

कुचस्थलैर्निर्दलितो[3] वधूनां संजीवितः श्वाससमीरणेन ।
क्लेशातिरेकान्मलयानिलोऽभूद् भृत्येषु मान्यः कुसुमायुधस्य ॥ २४ ॥

यत्पूरया[4]मास विलासदोलाः पुरन्ध्रिभिः सिञ्जितनूपुराभिः ।
तेनोद्वसां मन्मथराजधानीं मन्ये वसन्तीमकरोद्वसन्तः ॥ २५ ॥

चुचुम्ब वक्त्राणि चकर्ष वस्त्रं चिरं विशश्राम नितम्बबिम्बे ।
दोलाविलासे गुरुरङ्गनानामनङ्कुशः केरलमारुतोऽभूत् ॥ २६ ॥

---

१ नितम्बवत्यः अ. । २ यदि प्रसादा- ब. । ३ -स्थलैर्जर्जरितो अ. ।
४ यं पूरया- अ. ।

गीतेषु याताः किमु शिष्यभावं वामभ्रुवां विभ्रमदोलिनीनाम् ।
पुंस्कोकिलाः काननचारिणो यच्चातुर्यमापुः कलपञ्चमस्य ॥ २७ ॥

सङ्गादजस्रं वनदेवतानां लीलावनान्तस्थितयः शकुन्ताः ।
आरुह्य दोलासु विलासिनीनां[1] ताभिः सह भ्रेमुः[2] रसंभ्रमेण ॥ २८ ॥

हस्तद्वयीगाढगृहीतलोल-दोलागुणानां जघने वधूनाम् ।
असंवृतस्रस्तदुकूलबन्धे किमप्यभूदुच्छ्वसितो मनोभूः ॥ २९ ॥

त्वरोपयातप्रियबाहुपाश-रुद्धेषु कण्ठेषु वियोगिनीनाम् ।
वृथासमाहूतकृतान्तपाशः स्मितं लतानां मधुराततान ॥ ३० ॥

निवारणं पल्लववीजनानां स्थितिर्निवातेषु गृहोदरेषु ।
मूर्च्छाप्रबन्धेषु वियोगिनीनामासीदपूर्वः परिहारमार्गः ॥ ३१ ॥

लीलाशुकाः[3] कोकिलकूजितानामतिप्रहर्षाद्विहिता[4]नुकाराः ।
गृहादधाव्यन्त[5] वियोगिनीभिर्गुणो हि काले गुणिनां गुणाय[6] ॥ ३२ ॥

श्रुत्वेव वृत्तावसरं[7] तुषारं बहिःस्थितानामलिनां निनादैः ।
द्विवर्षकन्यामुखकोमलाभं पङ्कोदरात्पङ्कजमाविरासीत् ॥ ३३ ॥

नवीनदन्तोद्गमसुन्दरेण वासन्तिकाकुड्मलनिर्गमेन ।
उत्सङ्गसङ्गी विपिनस्थलीनां बालो वसन्तः किमपि व्यराजत् ॥ ३४ ॥

सुगन्धिनिःश्वासमिवानुवेलमुद्वेल्लता[8] दक्षिणमारुतेन ।
मुखं प्रसूनस्मितदन्तुरं तच्चुचुम्ब मुग्धस्य मधोर्वनश्रीः ॥ ३५ ॥

---

१ नितम्बिनीनां अ. । २ भ्रेमु- रा. । ३ लीलांशुकाः प्र. । ४ –प्रकर्षाद्विहिता– अ. । ५ –दधायन्त प्र. ; 'दधाव्यन्त' इति, 'दधाव्यन्त' इति वा ज. पुस्तके स्पष्टं नास्ति ; –दवाध्यन्त ब. ; –दकर्ष्यन्त अ. । ६ गुणो हि दोषाय भवेत्कदाचित् अ. । ७ वृत्तावरतं अ. । ८ –वेलमद्वेल्लता प्र. ।

संक्रान्तभृङ्गीपदपङ्क्तिमुद्रं पौष्पं रजः क्ष्माफलके रराज ।
क्रमालिपिज्ञानकृतक्षणस्य क्षुण्णं[1] मधोरक्षरमालयेव ॥ ३६ ॥

समारुरोहोपरि पादपानां लुलोठ पुष्पोत्करेणुपुञ्जे ।
लताप्रसूनांशुकमाचकर्ष क्रीडन्वनैः[2] किं न चकार चैत्रः ॥ ३७ ॥

दक्षः प्रवालौष्ठ[3]समर्पणाय लतावधूनां मुकुलस्तनीनाम् ।
मत्तालिवैतालिकगीतकीर्तिर्भ्रमन्मधुर्यौवनमारुरोह ॥ ३८ ॥

सलीलमङ्गीकृतपञ्चबाण-साम्राज्यभारस्य मधोरभङ्गः ।
एको भुजस्तस्य लवङ्गवायुरन्यः पिकस्त्रीकलपञ्चमोऽभूत् ॥ ३९ ॥

राशीकृताः पुष्पपरागपुञ्जाः पदे पदे दक्षिणमारुतेन ।
मत्तस्य चैत्रद्विरदस्य कर्तुमक्ष्णूणहेतोरिव[4] पांसुतल्पान्[5] ॥ ४० ॥

लभ्रद्विरेफध्वनिपूर्यमाणं वासन्तिकायाः कुसुमं नवीनम् ।
आसादयामास वसन्तमास-जन्मोत्सवे मङ्गलशङ्खलीलाम् ॥ ४१ ॥

गते हिमर्तौ ध्रुवमुष्णखिन्नः शीतोपचारं मलयः सिषेवे ।
यदाजगाम व्यजनोपमानां समीरणश्चन्दनपल्लवानाम् ॥ ४२ ॥

मनस्विनीनां[6] मनसोऽवतीर्य मानस्यँ[7] वेगेन पलायितस्य ।
जीवग्रहायेव वसन्तमित्रं बभ्राम वायुः ककुभां मुखानि ॥ ४३ ॥

वियोगिनीनामवशाल्लुलोठ कण्ठेषु लीलाकलपञ्चमो यः ।
तेनैव चक्रे मदनस्य कार्यं पुण्यैर्यशोऽभूत्पिकपञ्चमस्य ॥ ४४ ॥

---

१ क्षणं ब. । २ क्रीडञ्शनैः अ. । ३ दक्षप्रवालौष्ठ– ब. । ४ –मक्षुणहोतारिव अ.; –मक्षुणहेतोरिव भ. रि. । ५ पांशुतल्पान् ज. । ६ मनोवतीनां ज., ब., अ. । ७ 'मानस्य' इति, 'गानस्य' इति वा ज. पुस्तके स्पष्टं नास्ति ; गानस्य ब. ; मासस्य रा. ।

पदातिसंवर्गणकारणेन पदे पदे चम्पकराशिभङ्ग्या ।
वसन्तसामन्तविकीर्यमाणं हेमेव रेजे स्मरपार्थिवस्य ॥ ४५ ॥

चचार चूतद्रुममञ्जरीषु चुचुम्ब नानाकलिकामुखानि ।
स्त्रीराज्यमध्यस्थ इव द्विरेफः स्थातुं न लेभे क्षणमेवमेव[1] ॥ ४६ ॥

विलासिनामादिगुरुस्त्रिलोक्यामन्योन्यलीलाभुजबन्धनेषु[2] ।
उत्तम्भिताशोकपलाशपाणिर्न चैत्रमल्लः प्रतिमल्लमाप ॥ ४७ ॥

पुरन्ध्रिगण्डूषसुराभिलाषं पश्यन्नशोको बकुलद्रुमस्य ।
प्रियप्रियापादतलप्रहारमात्मानमल्पव्यसनं विवेद ॥ ४८ ॥

चूतद्रुमालीभुजपञ्जरेण रणद्विरेफावलिकङ्कणेन ।
मित्रं[3] मधुः कोकिलमञ्जुनाद - पूर्वाभिभाषी स्मरमालिलिङ्ग ॥ ४९ ॥

उन्निद्रपङ्क्तिस्थितचम्पकानि चकाशिरे केलिवनान्तराणि ।
वियोगिनीनां कवलीकृतानां सुवर्णकाञ्चीभिरिवाञ्चितानि ॥ ५० ॥

मर्मव्यथाविस्मयघूर्णमान - मूर्धोच्छलत्[4]कुण्डलविभ्रमेण ।
शब्दानुसारेण वियोगिनीभिः क्षिप्ताः पिकानामिव कण्ठपाशाः ॥ ५१ ॥

उदञ्चयन्किंशुकपुष्पसूचीः[5] सलीलमाधूतलताकशाग्रः ।
वियोगिनां निग्रहणाय सज्जः कामाज्ञया दक्षिणमारुतोऽभूत् ॥ ५२ ॥

प्रसूननाराचपरंपराभिर्वर्षत्सु योधेष्विव पादपेषु ।
वसन्तमत्तद्विरदाधिरूढः प्रौढत्वमाप स्मरभूमिपालः ॥ ५३ ॥

---

१ क्षणमेकमेव अ. । २ -भुजबन्धनेन अ. । ३ मैत्रं प्र. । ४ -घूर्णमाना मूर्धो- ब. । ५ पुष्पश्रुचीः ज.; पुष्पवीचीः अ. ।

समर्प्यमाणाद्भुतकौसुमास्त्रैश्चैत्रेण चित्रीकृतकाननेन ।
अधिज्यधन्वापि पराङ्मुखोऽभून्निषङ्गभारे भगवाननङ्गः ॥ ५४ ॥

शृङ्गारिणीमार्जितदन्तपङ्क्ति-कान्त्येव निर्यन्त्रणमुच्छलन्त्या ।
प्रक्षाल्यमानस्य शनैरवापुरनिन्द्यमिन्दोः किरणाः प्रसादम् ॥ ५५ ॥

त्वं चैत्र मित्रं यदि मन्मथस्य तस्मिन्ननङ्गे कथमक्षताङ्गः ।
ज्ञातं तवान्तर्गतमागतोऽसि मिषेण नाशाय वियोगिनीनाम् ॥ ५६ ॥

नूनं महापातकिनं वितर्क्य वियोगिवर्गक्षयदीक्षितं त्वाम् ।
पस्पर्श न त्र्यम्बकनेत्रवह्निः पापैरखण्डैः प्रियखण्डितानाम् ॥ ५७ ॥

हराहवे पञ्चशरं विमुच्य पलायितः क्षत्रपराङ्मुखस्त्वम् ।
अस्य क्षताङ्गस्य पुरोऽधुनात्र हा चैत्रचण्डाल कथं स्थितोऽसि ॥ ५८ ॥

इहैव सङ्गः फलवान्बभूव त्वया महापातकिनो[2] पिकानाम् ।
यदर्धदग्धोल्मुककश्मलेन देहेन लोकस्य बहिश्चरन्ति ॥ ५९ ॥

त्वं दृष्टदोषोऽपि पुनः स्मरेण यत्संगृहीतः शृणु तत्र हेतुम् ।
अङ्गीकृतस्त्रीवधपातकेन केनापि न स्वीकृत एष भारः ॥ ६० ॥

इत्थं वियोगज्वरजर्जराणामुद्वेजितानां मधुमासलक्ष्म्या ।
आसन्मुहुः पक्ष्मललोचनानां चैत्रे विचित्रोक्तिविचेष्टितानि ॥ ६१ ॥

गम्भीरता[3] चाटुपराङ्मुखत्वं सौभाग्य[4]मन्यप्रमदारदाङ्कः ।
दोषोऽपि यूनां गुण एव मेने पुरन्ध्रिभिर्मानपराङ्मुखीभिः ॥ ६२ ॥

---

१ –कौसुमास्त्रै– ब. । २ –पातकिनां ब. । ३ गम्भीरिता ज. ।
४ दुर्भाग्य– ब. ।

मानग्रन्थिकदर्थनाय कथिताः सर्वत्र पुंस्कोकिलाः
केलीकर्मणि दाक्षिणात्यमरुतामध्यक्षभावोऽर्पितः ।
पुष्पास्त्रस्य जगत्त्रयेऽपि विरह[1]प्रत्यूहहेवाकिनः
संनद्धोऽयमसाध्यसाधनविधौ साम्राज्यमन्त्री[2] मधुः ॥ ६३ ॥

लीलास्नानविधिक्षमं मधुलिहां पुष्पेषु जातं मधु
स्थायित्वं कलकण्ठकण्ठकुहरेष्वासेवते पञ्चमः ।
एकच्छत्रजगज्जयार्जनरुचेर्देवस्य शृङ्गारिण-
श्चैत्रश्चित्रमकाण्ड एव समभूत्त्रैलोक्यजैत्रो भटः ॥ ६४ ॥

भृङ्गैर्विश्ववियोगिवर्गदलनोत्तालस्य वैतालिकैः
प्रारब्धा विरुदावलीव पठितुं शृङ्गारबन्धोर्मधोः ।
नादः कोकिलयोषितां प्रमुषितत्रैलोक्यमानग्रहः
कामः संप्रति कौतुकाद्यदि परं पौष्पं धुनीते धनुः ॥ ६५ ॥

कूजत्कोकिलकोपिता गुलिधनुः[3]शिक्षां समासेवते
खिन्ना चन्दनमारुतेन मलये दावाग्निमाकाङ्क्षति ।
किञ्चान्विष्यति दुर्मना दलयितुं कामेन मैत्रीं मधोः
कर्तुं धावति दुर्लभे त्वयि सखी कां कां न वातूलताम् ॥ ६६ ॥

संनद्धं माधवीनां मधु मधुपवधूकेलिगण्डूषयोग्यं
विश्राम्यन्ति श्रमेण[4] क्वचिदपि मरुतो न क्षणं दाक्षिणात्याः ।
क्रीडाशैलीभवन्ति प्रतिकलमलिनां कौसुमाः पांसुकूटा-
श्चैत्रे पुष्पास्त्रमित्रे तदिह विरहिणां कीदृशी जीविताशा ॥ ६७ ॥

---

१ विरहि- अ. । २ साम्राज्यमैत्री ब. । ३ गुलधनुः- ज. ; गुडधनुः- ब. ; गुरुधनुः- रा. । ४ विश्राम्यन्त्यश्रमेण अ. ।

पुष्पैर्भ्राजिष्णुभल्लाकरणिमगणितैः शाखिनः के न याता-
श्चञ्चन्निस्त्रिंशलेखामयमिव भुवनं भृङ्गमालाभिरास्ते ।
त्रैलोक्याकाण्डचण्डप्रहरणनिबिडोत्साहकण्डूलदोष्णः
पुष्पेषोर्जैत्रशस्त्रव्यतिकरविषये साधु सज्जो वसन्तः ॥ ६८ ॥

शून्याः श्रीखण्डे[1]वातैरभिलषति भुवश्चन्दनाद्रेः परस्ता-
ल्लीलोद्याने सखीनां सृजति कलकलं कोकिलोत्सारणाय ।
स्तौति क्रीडावनालीनिखिलपरिमलाचान्तये चञ्चरीकां-
श्चारु[2]भ्रूस्त्वद्वियोगे कमिव न भजते जीवरक्षाभ्युपायम्[3] ॥ ६९ ॥

मलयगिरिसमीराः सिंहलद्वीपकान्ता-
मुख[4]परिचयलब्धस्फारकर्पूरवासाः ।
द्रविडयुवतिदोलाकेलिलोलन्नितम्ब-
स्थलशिथिलितवेगाः सेव्यतामाप्नुवन्ति ॥ ७० ॥

पानीयं नालिकेरीफलकुहरकुहूत्कारि कल्लोलयन्तः
कावेरीतीरतालद्रुमभरितसुराभाण्डभाङ्कारचण्डाः ।
उन्मीलन्नीलमोचापरिचयशिशिरा वान्त्यमी द्राविडीनां
कर्पूरापाण्डुगण्डस्थललुठितै[5]रया वायवो दाक्षिणात्याः ॥ ७१ ॥

भृङ्गालीभिरधिज्यमन्मथधनुर्लीलां लभन्ते[6] लताः
किं पुष्पं न बिभर्ति पुष्पधनुषस्त्रैलोक्यजैत्रास्त्रताम् ।
दोलां[7]न्दोलनकेलिलोलवनितासंचारिताम्रोऽधुना
पञ्चेषुश्चललक्ष्यभेदविधिना गर्वं समारोहति ॥ ७२ ॥

---

१ शून्या श्रीखण्ड- प्र. । २ चञ्चरीकान् चारुभ्रू- ज.; चञ्चरीकान चारुभ्रू- प्र. । ३ -रक्षाप्युपायम् प्र. । ४ -कान्तमुख- प्र. । ५ -लुलित- अ. । ६ भजन्ते अ. । ७ 'दोला' इति प्र. पुस्तके नास्ति ।

उन्माद्यन्मधुपेन पुष्पमधुना[1] केलीभुवः पङ्किलाः

सर्वे भङ्गभयं दिशन्ति कुसुमप्राग्भारतः पादपाः ।

चैत्रेणास्त्रपरंपराव्ययविधौ दैन्यं परित्याजितः

कामः संप्रति बाणमोक्षरसिको लक्ष्येष्वलक्ष्येषु च[2] ॥ ७३ ॥

नीता नूतनयौवनप्रणयिना चैत्रेण चित्रां लिपिं

हर्षाद्वर्षति का न काननमही पुष्पैः कटाक्षैरिव ।

दोलारूढपुरन्ध्रिपीनजघनप्राग्भारमाधुन्वतः

किं मानद्रुमभञ्जनाय गहनं लङ्कानिलस्याधुना ॥ ७४ ॥

पौलस्त्योद्यानलीलाविटपितलमिलन्मैथिलीपादमुद्राः[3]

कर्पूरद्वीपवेलाचलविपिनतटीपांसुकेलीरसज्ञाः ।

क्रीडाताम्बूलचूर्णग्लपितमुखहृतक्लान्तयः केरलीना-

मामोदन्ते समीराः स्मरसुभटजयाकाङ्क्षिणो दाक्षिणात्याः ॥७५॥

यश्चूताङ्कुरकन्दलीकवलनात्कर्णामृतग्रामणी -

श्छायामात्रपरिग्रहेऽपि[4] जगृहे पञ्चेषुजैत्रेषुताम् ।

ताम्यत्तालुविटङ्कसंकटतटीसंचारतः पञ्चमः

सोऽयं कोकिलकामिनीगलबिलादामूलमुन्मूलति ॥ ७६ ॥

विरहविधुरकामिनीसहस्र-प्रहितमनोभवलेखसूक्तिमिश्रैः ।

सुरभिसमयवर्णनैरकुर्वन्निति नृपतेरथ बन्दिनः प्रमोदम्[5] ॥ ७७ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते[6] सप्तमः सर्गः ॥ ७ ॥

---

१ –मधुनः रा. । २ लक्षेष्वलक्षेषु च अ. । ३ –पादसमुद्राः प्र. । ४ –परिग्रहोऽपि रा. । ५ प्रसादम् ब. । ६ एतदनन्तरं 'महाकाव्ये' इति ज. पुस्तके विशेषः ।

# अष्टमः सर्गः

समये तत्र पुष्पास्त्र-मित्रे विक्रमभूपतेः ।
उद्भूतनूतनाश्चर्या श्रोत्रमैत्रीमगात्कथा ॥ १ ॥

यथास्ति विजयस्तम्भ-प्रशस्तिरिव मान्मथी ।
करहाटपतेः पुत्री त्रिजगन्नेत्र[1]कार्मणम् ॥ २ ॥

विद्याधरकुमारी सा गौरीदयितशासनात् ।
कृते कस्यापि कुरुते स्वयंवरमहोत्सवम् ॥ ३ ॥

चन्द्रलेखेति नामास्याश्चन्द्रलेखासमत्विषः ।
मृत्युञ्जयमहामन्त्र-मैत्रीमेति मनोभुवः ॥ ४ ॥

अन्तरङ्गमनङ्गस्य शृङ्गारकुलदैवतम् ।
अङ्गीकरोति तन्वङ्गी सा विलासमयं वयः ॥ ५ ॥

तस्याः पादनखश्रेणिः शोभते लटभभ्रुवः ।
रत्नावलीव लावण्य-रत्नाकरसमुद्गता ॥ ६ ॥

स्तनभारोऽत्र वक्त्रेन्दु-चन्द्रिकावरणं मम ।
इति तत्पादयोर्लग्ना वेद्मि प्राङ्गणपद्मिनी ॥ ७ ॥

अमूल्यस्य मम स्वर्ण-तुलाकोटिद्वयं कियत् ।
इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ८ ॥

तत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन[2] पाण्डुरीकरणं विधोः ॥ ९ ॥

---

१ त्रिगन्नेत्र- प्र. । २ श्रीषण्डलेपेन ज. ।

जाग्रतः कमलाल्लक्ष्मीं यज्जग्राह[1] तदद्भुतम् ।
पादद्वन्द्वस्य मत्तेभ-गतिस्तेये तु का स्तुतिः ॥ १० ॥

अत्यपूर्वस्य रागस्य पूर्वपक्षाय पल्लवाः ।
पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥ ११ ॥

दृश्यन्ते मानसोत्तंसा राजहंसाः क्वचिद्यदि ।
गतौ चरणयोस्तस्याः प्रेक्ष्यते[2] यावदन्तरम् ॥ १२ ॥

नितम्बपीड्यमानेन पादयुग्मेन सुभ्रुवः ।
कृता भृकुटिभङ्गीव[3] नीलनूपुरमालया ॥ १३ ॥

हेममञ्जीरमालाभ्यां भाति जङ्घालताद्वयम् ।
कृतालवालं वालभ्यात् कुंङ्कुमेनेव सुभ्रुवः ॥ १४ ॥

लम्भिताः कदलीस्तम्भास्तदूरुभ्यां पराभवम् ।
अत्यन्तमृदुभिर्लब्धो जडैः क्व जयडिण्डिमः ॥ १५ ॥

मन्ये तदूरू संभाव्य हस्तसर्वस्वहारिणौ ।
वहन्त्यस्पृश्यताहेतोर्मातङ्गत्वं मतङ्गजाः ॥ १६ ॥

नितम्बबिम्बं बिम्बोष्ठी चन्द्रकान्तशिलाघनम् ।
धत्ते कन्दर्पदोःस्तम्भ-प्रशस्तिफलकोपमम् ॥ १७ ॥

विस्तारिणा मुहुस्तस्याः श्रोणीबिम्बेन पीडिता ।
त्रुटिता त्रुटितास्मीति फूत्करोतीति[5] मेखला ॥ १८ ॥

---

१ -लक्ष्मीर्य- ज. । २ प्रक्ष्यते ब. । ३ कृताभूत्कुटिभङ्गीव प्र. । ४ कृतालवालम्बाल्लभ्यात्कु- प्र. ; कृतालवालालम्बाल्लभ्यात्कु- ब. टि. ; कृतालवालं लम्बाभ्यां कु- ब. । ५ पूत्करोतीति ज. ।

अपर्याप्तभुजायामः सखेदोऽस्याः सखीजनः ।
श्रोण्यां कथञ्चित्कुरुते रशनादामबन्धनम् ॥ १९ ॥

अनङ्गरङ्गपीठोऽस्याः शृङ्गारस्वर्णविष्टरः ।
लावण्यसारसंघातः सा घना जघनस्थली ॥ २० ॥

तन्नितम्बस्य निन्दन्ति वृद्धिं परिजनाङ्गनाः ।
काञ्चीनवनवग्रन्थि-ग्रथनेन कदर्थिताः ॥ २१ ॥

नितम्बगौरवेणासौ गौराङ्गी खिद्यते दृढम् ।
हारयत्यपरिस्पन्दा कन्दुकं क्रीडितेषु[1] यत् ॥ २२ ॥

तदीयजघनाभोग-गरिमा विस्मयास्पदम् ।
दूरापाती[2] पृषत्कोऽभूद् येनानङ्गस्य साङ्गना ॥ २३ ॥

नाभिरन्ध्रं प्रविष्टास्याः श्यामला रोमवल्लरी ।
त्रस्ता तिमिरलेखेव मेखलामणिकान्तितः ॥ २४ ॥

भाति रोमावली तस्याः पयोधरभरोन्नतौ ।
जाता रत्नशलाकेव श्रोणिवैदूर्यभूमितः ॥ २५ ॥

नाभिसङ्गेन गौराङ्ग्याः शोभते रोममञ्जरी ।
कन्दर्पहेमकटकाल्लाक्षाधारेव निर्गता ॥ २६ ॥

नाभीवलयसंबद्धा रोमाली भाति सुभ्रुवः ।
सहिता निगडेनेव शृङ्खला स्मरदन्तिनः ॥ २७ ॥

रोमावली विलासिन्याः प्रविष्टा नाभिमण्डलम् ।
कियद्गाम्भीर्यमत्रेति तात्पर्यमिव बिभ्रती[3] ॥ २८ ॥

---

१ कन्दुकक्रीडितेषु ज.। २ दूरपाती ब.। ३ बभ्रती प्र.।

स्तनौ तुङ्गौ समारूढे चापन्यस्तभरे स्मरे ।
कोदण्डाटनिमुद्रेव जाता नाभी नतभ्रुवः ॥ २९ ॥

मन्ये समाप्तलावण्य-सारे सर्गे मृगीदृशः ।
अ रयित्वेव गतो नाभिरन्ध्रं प्रजापतिः ॥ ३० ॥

लिखन्त्याः कामसाम्राज्य-शासनं यौवनश्रियः ।
गलितेव मषीधारा रोमाली नाभिगोलकात् ॥ ३१ ॥

जाने रात्रिषु तन्मध्ये ददाति शनकैः पदम् ।
गम्भीरनाभिकुहर-प्रवेशाशङ्कया स्मरः ॥ ३२ ॥

हारः कुरङ्गशावाक्ष्या राजति स्थूलमौक्तिकः ।
नाभिलावण्यपानीय-घटीयन्त्रगुणोपमः ॥ ३३ ॥

स्तनभाराय मध्येन त्रिवलिव्याजतः कृता ।
तस्याः शङ्कितभङ्गेन भ्रूभङ्गानामिवावलिः ॥ ३४ ॥

तदीयत्रिवलीमार्ग-सोपानारोहणश्रमः ।
अनङ्गत्वादनङ्गस्य जातो रत्येकगोचरः ॥ ३५ ॥

परिहृत्य दुरारोहं तस्याः स्तनतटं कृता ।
कन्दर्परथसंचार-मार्गालीव वलित्रयी ॥ ३६ ॥

दरिद्रमुदरं दृष्ट्वा चक्रे लावण्यपूर्णयोः ।
पन्थानं स्तनयोस्तस्यास्त्रिवलीविषमं विधिः ॥ ३७ ॥

राजति त्रिवली तस्याः स्तनभारोन्नतिक्रमात् ।
उपर्युपरि जातेव हारमुद्रापरंपरा ॥ ३८ ॥

---

१ -प्रवेशाशङ्कया ब. ।

युक्तं मध्ये कृशा तन्वी कार्मुकीकरणाय यत् ।
अत्रैव कुसुमास्त्रेण पीड्यते श्लिष्टमुष्टिना ॥ ३९ ॥

स्तनौ भारार्पणव्यग्रौ काञ्ची कलकलोन्मुखी ।
कस्यां दिशि न मध्यस्य तस्याः कार्श्यं सहेतुकम् ॥ ४० ॥

माति[1] निर्विवरे तस्याश्चित्रं कुचयुगान्तरे ।
क्रीडाकुण्डलितोच्चण्ड-कोदण्डः कुसुमायुधः ॥ ४१ ॥

कुचद्वये चकोराक्षी चिबुकप्रान्तचुम्बिनि ।
नर्मोक्तिषु न शक्नोति स्थातुं लज्जानतानना ॥ ४२ ॥

शङ्के तच्चित्तमक्लेश-साध्यं कुसुमधन्वनः ।
काठिन्यं बहिरेवास्याः स्तनाभ्यां येन धारितम् ॥ ४३ ॥

सा स्तनाञ्जलिबन्धेन मन्मथं प्रथमागतम् ।
करोतीवोन्मुखं बाला बान्धवं यौवनश्रियः ॥ ४४ ॥

अस्त्यप्रतिसमाधेयं स्तनद्वन्द्वस्य दूषणम् ।
स्फुटतां कञ्चुकानां यन्नायात्यावरणीयताम् ॥ ४५ ॥

कुम्भौ सदम्भौ करिणां कलशौ मन्दकौशलौ ।
चक्रवाकौ वराकौ च तदीयकुचयोः पुरः ॥ ४६ ॥

मुखेन्दुचन्द्रिकापूर-प्लाव्यमानौ पुनः पुनः ।
शीतभीताविवान्योन्यं तस्याः पीडयतः स्तनौ ॥ ४७ ॥

तत्कुचौ चरतः किञ्चिन्नूनं मनसिजव्रतम् ।
नित्योन्मुखौ यदासाते मौलिरत्नस्य भास्वतः ॥ ४८ ॥

---

१ भाति ब. ।

सा धारयत्यधीराक्षी दुर्वहं स्तनमण्डलम् ।
गर्वपर्वतमारूढश्चित्रं कुसुमकार्मुकः ॥ ४९ ॥

तस्यास्तुङ्गस्तनच्छाया चकास्ति त्रिवलीतटे ।
लीना तिमिरलेखेव वदनेन्दोरगोचरे ॥ ५० ॥

अयं त्रयाणां ग्रामाणां निधानं मधुरध्वनिः ।
रेखात्रयमितीवास्याः सूत्रितं कण्ठकन्दले ॥ ५१ ॥

असावुद्वेललावण्य-रत्नाकरसमुद्भवः ।
जगद्विजयमङ्गल्य-शङ्खः कुसुमधन्वनः ॥ ५२ ॥

श्रोत्रपीयूषगण्डूषैः काकलीकलगीतिभिः ।
कण्ठः कुण्ठितचातुर्यो विपञ्चीपञ्चमध्वनेः ॥ ५३ ॥

कुसुमायुधकोदण्डे हस्तौ विस्तीर्णचक्षुषः ।
अशोकपल्लवास्त्राणां प्रतिहस्तत्वमागतौ ॥ ५४ ॥

नाहं धार्यमधीराक्षि मुखेन्दोः संमुखं त्वया ।
इतीव लीलापद्मेन करेऽस्याः कान्तिरर्पिता ॥ ५५ ॥

आयूरेखां चकारास्याः करे द्राघीयसीं विधिः ।
शौण्डीर्यगर्वनिर्वाह-प्रत्याशां च मनोभुवः ॥ ५६ ॥

गौराङ्ग्या भुजलावण्य-मीलितं हेमकङ्कणम् ।
कण्ठाश्लेषे वयस्याभिः काठिन्यादन्वमीयत ॥ ५७ ॥

प्रकोष्ठबन्धे बिम्बोष्ठ्यास्तस्याः काञ्चनकङ्कणम् ।
नालं वलयितं हस्ते हेमाब्जस्येव राजते ॥ ५८ ॥

सौवर्णकङ्कणश्रेण्या भाति तद्बाहुकन्दली ।
तूणा चम्पकमौर्व्येव पुष्पचापेन वेष्टिता ॥ ५९ ॥

अङ्गुलीभिः कुरङ्गाक्ष्याः शोभते मुद्रिकावलिः ।
प्रोतेव बाणैः पञ्चेषोः सूक्ष्मलक्ष्यपरंपरा ॥ ६०॥

सहेमकटकं धत्ते सा करं पद्मतस्करम् ।
पद्मिनीवल्लभस्येव मूले वेष्टितमंशुना ॥ ६१ ॥

हस्ते चकास्ति बालायास्तस्याः कङ्कणमालिका ।
मनःकुरङ्गबन्धाय पाशालीव मनोभुवः ॥ ६२ ॥

कृशाङ्ग्याः कुचभारेण दूरमुत्सारितौ भुजौ ।
वहतः कलहायेव वाचालां वलयावलिम् ॥ ६३ ॥

सरले एव दोर्लेखे यदि चञ्चलचक्षुषः ।
अमुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम् ॥ ६४ ॥

बाहू तस्याः कुचाभोग-निरुद्धान्योन्यदर्शनौ ।
मन्त्रितं कथमेताभ्यां मृणालीकीर्तिलुण्ठनम् ॥ ६५ ॥

मुखारविन्ददत्तश्रीः सुतनोररुणोऽधरः ।
कुरुते हारमाणिक्य-प्रदीपान्पाण्डुरत्विषः ॥ ६६ ॥

संततोदयसन्ध्येव वदनेन्दोरनिन्दिता ।
तदोष्ठमुद्रा लावण्य-समुद्रस्येव विद्रुमः ॥ ६७ ॥

मुखं वहति बन्धूक-बन्धुरेणाधरेण सा ।
पूर्णेन्दुमिव सोदर्यादङ्कलालितकौस्तुभम् ॥ ६८ ॥

---

१ तूणचम्पक- ब. । २ तस्या प्र. ।

भाति दन्तच्छदेनास्याः स्वच्छा दशनमालिका ।
सरस्वत्यक्षमालेव पूजापद्मदलाञ्चिता ॥ ६९[1] ॥

अधरोऽसौ कुरङ्गाक्ष्याः शोभते नासिकातले ।
सुवर्णनलिकामध्यान्माणिक्यमिव विच्युतम् ॥ ७० ॥

पुराणबाणत्यागाय नूतनास्त्रकुतूहलात् ।
तन्नासा भाति कामेन तूणेवाधोमुखीकृता[2] ॥ ७१ ॥

अमुष्य मुषिता लक्ष्मीश्चक्षुषेति न नूतनम् ।
न वेद्मि कथयत्यस्याः कर्णे लग्नं किमुत्पलम् ॥ ७२ ॥

मृगीसम्बन्धिनी दृष्टिरसौ यदि न सुभ्रुवः ।
धावति श्रवणोत्तंस-लीलादूर्वाङ्कुरे कुतः ॥ ७३ ॥

तस्याः श्रवणमार्गेण चलिते यदि लोचने ।
कुतः प्रकामधवले धत्तः कृष्णानुरक्तताम् ॥ ७४ ॥

श्रूयतां कौतुकं सोऽपि स्मरः शृङ्गारिणां गुरुः ।
अमुष्याः शिष्यतामेति श्रवणोन्मुखयोर्दृशोः ॥ ७५ ॥

सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया ।
सूत्रितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा ॥ ७६ ॥

किञ्चित्सविभ्रमोदञ्चि-भ्रूलता भाति भामिनी ।
बालक्रीडाप्रतिद्वन्द्वि तर्जयन्तीव यौवनम् ॥ ७७ ॥

भास्वत्कुण्डलमाणिक्य-प्रभाप्रतिहतेरिव ।
नताङ्ग्याः श्रवणोत्सङ्गमारूढा नयनद्वयी ॥ ७८ ॥

---

१ प्र. पुस्तके सप्तम्प्ययं श्लोकः ब. पुस्तके नास्ति । २ तूणीवा- रा. ।

भ्रूलेखायुगलं भाति तस्याश्चटुलचक्षुषः ।
पत्रद्वयीव हरिता नासावंशस्य निर्गता ॥ ७९ ॥

नासावंशविनिर्मुक्त-मुक्ताफलसनाभिना ।
भाति भालतलस्थेन बाला चन्दनबिन्दुना ॥ ८० ॥

तस्याः कचभरव्याजात् तनयस्नेहलालितः ।
आरूढः पार्वतीबुद्ध्या गुहबर्हीव मूर्धनि ॥ ८१ ॥

गण्डे मण्डनमात्मनैव कुरुते वैदग्ध्यगर्वादसौ
त्यक्त्वा हेमविभूषणानि तनुते ताडीदलेष्वाग्रहम् ।
मन्दा कन्दुकखेलनाय भजते सारीषु शिक्षारसं
तन्व्या चित्रमकाण्ड एव लटभाभावे निबद्धो भरः ॥ ८२ ॥

भृङ्गालीमुदरे क्षिपन्ति शतशः पद्मानि शस्त्रीमिव
प्रत्यागच्छति लङ्घनार्थमसकृद्व्योमाङ्गणं चन्द्रमाः ।
वक्त्रेणापहृते कुरङ्गकदृशस्त्रैलोक्यरूपोच्चये
प्रत्यावर्तनवाञ्छयेव कति न क्लेशं समातन्वते ॥ ८३ ॥

दायादत्वं मनसिजधनुर्भ्रूविलासस्य धत्ते
योगक्षेमौ वहति नयनद्वन्द्वमिन्दीवराणाम् ।
तद्गात्राणां पुनरिह जगज्जैत्रलावण्यभाजा-
माभात्यग्रे मलवदखिलं मूलवर्णं सुवर्णम् ॥ ८४ ॥

दृशोः सीमावादः श्रवणयुगलेन प्रतिकलं
स्तनाभ्यां संरुद्धे हृदि मनसिजस्तिष्ठति बलात् ।

---

१ नासा– अ. । २ सारीषु ब. ।

नितम्बः साक्रन्दं क्षिपति[१] रशनादाम परतः

प्रवेशस्तन्वङ्ग्या वपुषि तरुणिम्नो विजयते ॥ ८५ ॥

दोलायां जघनस्थलेन चलता लोलेक्षणा लज्जते

धत्ते दिक्षु निरीक्षणं स्मितमुखी पारावतानां[२] रुतैः ।

स्पर्शः कण्टक[३]कोटिभिः कुटिलया लीलावने नेष्यते

सज्जं मौग्ध्यविसर्जनाय सुतनोः शृङ्गारमित्रं वयः ॥ ८६ ॥

लास्याभ्यासमिषेण चित्रमनया गात्रार्पणं शिक्षितं

लीलापञ्चमदोलनेन दलिता कण्ठस्य कुण्ठा गतिः ।

किं वा वर्णनया समस्तलटभालङ्कारतामेष्यति

स्वल्पेनैव परिश्रमेण रमणी देवस्य रामागुरोः ॥ ८७ ॥

वक्त्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः

श्रोणीमण्डलमङ्गनाकुलगुरोर्देवस्य सिंहासनम् ।

कृत्वा चारुदृशश्चतुष्टयमिदं तुष्टाव मन्ये विधि-

र्हर्षाद्गद्गदगद्यपद्यरचनागर्भैश्चतुर्भिर्मुखैः ॥ ८८ ॥

इत्थं कर्णरसायनं श्रुतवतः कर्णाटपृथ्वीपते-

राकृष्टस्य कुतूहलेन पुनरप्याकाङ्क्षतस्तत्कथाम् ।

प्राप्तः पार्श्वममुष्य पल्लवयितुं तामेव वार्त्तां पुनः

सिञ्जाचालनचञ्चलश्रुतिगलत्ताडङ्कपत्रः स्मरः ॥ ८९ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचितेऽष्टमः सर्गः[४] ॥ ८ ॥

---

१ क्षपति ज. । २ पारापतानां ज. । ३ स्पर्शकण्टक- प्र. । ४ 'समासः' इति ज. पुस्तके विशेषः ।

# नवमः सर्गः

विजृम्भमाणेष्वथ[1] पञ्चबाण-कोदण्डसिञ्जाघनगर्जितेषु ।
विलासिनी[2] मानसमाविवेश सा राजहंसीव नरेश्वरस्य ॥ १ ॥

क्षिप्ते पदे चारुदृशा विशन्त्या बालप्रवालप्रतिमल्लभासि ।
चेतः क्षितीन्दोः स्फटिकावदातमुपाधियोगादिव रक्तमासीत् ॥ २ ॥

वित्रासितश्चैत्रसमीरणेन मयूख[3]दण्डैः स्खलितः सुधांशोः ।
नासौ बभूव स्मरपार्थिवस्य कस्याः पदं रोषविभीषिकायाः ॥ ३ ॥

गृह्णन्गुणानह्नि विभावरीणां दिनप्रशंसां विदधन्निशासु ।
क्रमादसौ तां क्षितिमाचकाङ्क्ष यत्र द्वयं नास्ति दिनं निशा च ॥ ४ ॥

त्रैलोक्यसंमोहनविद्ययेव तया जयास्थां महतीं दधानः ।
तं धन्विनां धुर्यमपि प्रहर्तुं विलासधन्वा धनुराचकर्ष ॥ ५ ॥

निजप्रभानिह्नुतचन्द्रभासा प्रभातलक्ष्म्येव परिस्फुरन्त्या ।
तया समानीयत पाण्डिमानं चालुक्यभूपालकुलप्रदीपः ॥ ६ ॥

शृङ्गाररत्नाकरवेलयेव तया प्रवेशे विहिते तरुण्या ।
नवानुरागेण मनस्तदीयं रत्नोत्करेणेव सनाथमासीत् ॥ ७ ॥

असौ भवित्री सुभगा नतभ्रूः करिष्यते पञ्चशरः प्रसादम् ।
आन्दोलितोऽभूदिति चिन्तयासौ त्रैलोक्यचिन्ताहरणक्षमोऽपि ॥ ८ ॥

यथा यथा निःश्वसिति स्म राजा निरङ्कुशं कार्श्यमदर्शयच्च ।
तथा तथा जागरयन्धनुर्ज्यां भेजे जयास्थां भगवाननङ्गः ॥ ९ ॥

---

१ विजम्भबाणेष्वथ रा. । २ विलासिनो प्र. । ३ मयूष- ज. ।

जाते धरित्रीतिलके चिरेण प्रकोपपात्रे मकरध्वजस्य ।
प्रकाशयन्तीव पतिव्रतात्वं पराङ्मुखी तत्र रतिर्बभूव ॥ १० ॥

उर्वीपतेः पार्वणचन्द्रवक्त्रा समुद्वहन्ती हृदये निवासम् ।
विकासदीक्षामपराङ्गनानां सरोजिनीनामिव संजहार ॥ ११ ॥

नितम्बबिम्बस्य नितम्बवत्याः प्रकामविस्तारवशादिवास्य ।
पृथ्वीपतेरुत्तमनायिकापि न कापि लेभे हृदयेऽवकाशम् ॥ १२ ॥

नितान्तमेकान्तनिषेवणेन द्वेषेण चान्तःपुरसुन्दरीषु ।
प्रच्छादनार्थं विहितक्षणोऽपि क्षोणीपतिस्ताडितडिण्डिमोऽभूत् ॥ १३ ॥

ताडीदले कर्णपरिच्युतेऽपि कन्दर्पलेखभ्रममाससाद ।
उत्तंसमागच्छति षट्पदेऽपि प्रत्याशया कर्णमदत्त देवः ॥ १४ ॥

आकाशगर्भां गिरमाचकाङ्क्ष विलोकयामास विलासभित्तीः ।
तदीयवार्त्ताश्रवणाभिलाषात् कुत्रार्थितां प्राप न पार्थिवेन्द्रः ॥ १५ ॥

सा कीदृशीति क्षितिवल्लभस्य कुतूहलेनोत्तरलीकृतस्य ।
आलिख्य चेतःफलके मनोभूरदर्शयत्सायकतूलिकाभिः ॥ १६ ॥

प्रारम्भि रम्भाललितोरुकान्तेरुपायनीकृत्य मुखं प्रियायाः ।
सेवा सहेवाकविलोचनस्य पृथ्वीभुजङ्गस्य दिगङ्गनाभिः ॥ १७ ॥

मौनग्रहे तस्य परिग्रहेण चित्रार्पितेनेव भियावतस्थे ।
लीलाशुकानामपि शङ्कितानां न निर्ययुः कण्ठतटाद्वचांसि ॥ १८ ॥

निरीक्षमाणः[1] सरसोक्तिदक्षां दूतीमसौ वारपुरन्ध्रिमध्ये ।
मौखर्यचर्यामपि मेखलासु महान्तमुद्भावयति स्म दोषम् ॥ १९ ॥

---

१ निरीक्ष्यमाणः ब. ।

अचिन्तनीयं तुहिनद्रवाणां श्रीखण्डवापीपयसामसाध्यम् ।
असूत्रयत्पत्रिषु पारसीक-तैलाभिमेतस्य कृते[1] मनोभूः ॥ २० ॥

श्रान्ते च निद्रालसलोचने च शून्ये च पञ्चेषुरिषून्विमुञ्चन् ।
न तत्र चित्रं गणयांबभूव क्षत्रव्रतस्य क्षतिमेकवीरः ॥ २१ ॥

सैका पताकां सुभगासु लेभे यया हृतः कुन्तलकामदेवः ।
आसीत्परं पञ्चशरः प्रतापी तस्यापि यस्तापयिता बभूव ॥ २२ ॥

लग्नामिवाङ्के लिखितामिवाग्रे चक्रभ्रमेणेव परिभ्रमन्तीम् ।
क्षपासु लब्धक्षणमात्रनिद्रस्तामेव राजीवमुखीं ददर्श ॥ २३ ॥

चन्द्रातपाच्चन्दनपङ्कवापीं ततस्तमस्मादपि तां जगाम ।
तस्येति बह्व्यः स्मरतापितस्य गतागतैरेव गतास्त्रियामाः ॥ २४ ॥

श्रोत्रामृतस्य स्फटिकप्रणालीं दिव्याम्बुधारां स्मरचातकस्य ।
वार्त्तां गृहीत्वा हरिणेक्षणायाश्चरः क्षमाभर्तुरथाजगाम ॥ २५ ॥

कथारसस्येव मुखस्थितस्य धाराः किरन्दन्तमयूखभङ्ग्या ।
प्रहर्षविस्फारितवक्त्रकान्तिः स कुन्तलक्ष्मातिलकं बभाषे ॥ २६ ॥

अचन्द्रजा नेत्रचकोरवृत्तिरपुष्पनिर्माणमनङ्गशस्त्रम् ।
रागस्य लोकत्रयरञ्जनाय विद्येव विद्याधरराजकन्या ॥ २७ ॥

अकृत्रिमाद्वा गुणपक्षपाताद् विधेः समायोगकुतूहलाद्वा ।
देव त्वदाकर्णनमात्रकेण सा त्वन्मयं पश्यति जीवलोकम् ॥ २८ ॥

अपारमापूरयता पृषत्कैस्तनिम्नि मग्नं वपुरुत्पलाक्ष्याः ।
लक्ष्येषु लब्धः कुसुमायुधेन बालाग्रसूक्ष्मेषु परः प्रकर्षः ॥ २९ ॥

---

१ परं प्र., ब.।

तथा गता चम्पकदामगौरी शरीरयष्टिः कृशतां कृशाङ्ग्याः ।
यथा गलच्चापमनोरथोऽस्यां मौर्वीलतार्थां मदनः करोति ॥ ३० ॥

नूनं स्मरः सौगतदर्शनोत्थं रहस्यमस्याः कथयांबभूव ।
त्वया विना व्यर्थमनोरथा यदात्मन्यवज्ञां प्रकटीकरोति ॥ ३१ ॥

दूरं गता कार्मुककर्मवार्त्ता तस्यास्तनुं तन्तुकृशां वहन्त्याः ।
नितान्तमप्राणतया मृगाक्षी शिञ्जापि जाता न मनोभवस्य ॥ ३२ ॥

प्राप्ता तथा तानवमङ्गयष्टिस्त्वद्विप्रयोगेण कुरङ्गदृष्टेः ।
धत्ते गृहस्तम्भनिवर्तितेन कम्पं यथा श्वाससमीरणेन ॥ ३३ ॥

शीतांशुबिम्बप्रतिबिम्बभङ्ग्या कुरङ्गदृष्टेः कुचकुम्भपीठे ।
स्मरानलद्रावितहारदाम-मुक्ताफलानामिव पिण्डमासीत् ॥ ३४ ॥

वातायनाद्गच्छति चित्रवेश्म तस्माद्वनान्तं[1] वलभीं ततोऽपि ।
एकत्र न क्वापि पदं करोति सा मन्मथास्कन्दविशङ्कितेव ॥ ३५ ॥

आज्ञापितः स्वप्नविधौ हरेण स्वयंवरोऽस्याः क्रियतां त्वयेति ।
तस्याः पिता कस्यचिदर्थिभावं न भूमिभर्तुः सफलं विधत्ते ॥ ३६ ॥

पिता तदीयस्त्वयि सान्द्ररागः किं प्रार्थनाभङ्गभयान्न वक्ति ।
भवादृशानां प्रणयं हि लब्ध्वा प्रयान्ति कन्याः कुलभूषणत्वम् ॥ ३७ ॥

स्वयंवरस्यावसरोऽपि जातः प्रसीद भूपाल कुरु प्रयाणम् ।
असौ जयश्रीरिव ते द्वितीया सर्वान्विनिर्धूय वधूत्वमेतु ॥ ३८ ॥

श्रुत्वेति तुष्टः स जगाम तत्र तुरङ्गमैरेव जवोत्तरङ्गैः ।
स्वयंवरायातनरेन्द्रचक्रा सा यत्र पुष्पायुधराजधानी ॥ ३९ ॥

---

१ -द्वनांत प्र., ब.।

अमानिवाङ्गेषु मुदः प्रकर्षात् प्रत्युद्ययौ तं जनकः कुमार्याः ।
अनुष्ठितं सम्यगुपायविद्धिर्नीतैः परिस्पन्दमिवार्थसार्थः ॥ ४० ॥

निधानलाभादिव हर्षमाप स कुन्तलेन्दुप्रणयान्नरेन्द्रः ।
कन्यापितॄणां पदमुत्सवस्य न श्लाघ्यजामातृसमं समस्ति ॥ ४१ ॥

प्रणम्य तेनाथ निवेद्यमान-मार्गः कृताशेषयथोचितेन ।
श्रीकुन्तलेन्द्रः प्रविवेश भूमिं स्वयंवरोत्कण्ठितराजचक्राम् ॥ ४२ ॥

स दुन्दुभीनां ध्वनिभिः सतूर्यैः प्रकाश्यमानाभिनवोत्सवायाम् ।
प्रविश्य तस्यां भुवि कौतुकेन कान्तासमन्वेषणतत्परोऽभूत् ॥ ४३ ॥

सोपानपङ्क्तिं स विलङ्घ्य तत्र तरङ्गमालामिव राजहंसः ।
सौवर्णपद्मप्रभमारुरोह हेमासनं मन्मथशासनेन ॥ ४४ ॥

रराज भूपैः परिवारितोऽसौ शुभ्रे स्थितः सद्मनि कुन्तलेन्द्रः ।
यूथे प्रविष्टः करिपोतकानां दुग्धाब्धिमध्यस्थ इवामरेभः ॥ ४५ ॥

तस्मिन्प्रविष्टे नरनाथसिंहे कैलासशुभ्रं भवनाङ्गणं तत् ।
सा दुर्लभा चन्द्रमुखी नरेन्द्रैः सिंही कुरङ्गैरिव मन्यते स्म ॥ ४६ ॥

वितानरत्नेषु च कुट्टिमे च बिम्बेन राज्ञां प्रतिबिम्बितेन ।
स्वयंवरोत्साहसभा बभासे संप्राप्तलोकत्रयकामुकेव ॥ ४७ ॥

मञ्चेषु रत्नाङ्कुरदन्तुरेषु भूषामणीनां च कदम्बकेषु ।
रूपप्रकर्षार्थितया मुखानि प्रेक्षांबभूवुः शतशः क्षितीशाः ॥ ४८ ॥

मुक्तावितानेषु नरेश्वराणामतिष्ठदुच्चैः प्रतिबिम्बपङ्क्तिः ।
कस्यापि सज्जीकृतपुष्पवर्षा सौभाग्यसीम्नस्त्रिदशावलीव ॥ ४९ ॥

---

१ –गुपायवद्भि– ब. । २ –नीतिः ज.; –नीते प्र. ।

मुक्ताफलस्रग्भिरवाप शोभां पतिंवरा विभ्रमवेदिका सा ।
चन्द्रो बहुस्त्रीक इति प्रवक्तुं भियेव ताराभिरुपास्यमाना ॥ ५० ॥

ये भूभुजः प्राज्यतरेण धाम्ना बभूवुरुद्द्योतनिभाः सभायाम् ।
ते विक्रमक्ष्मापतिसंनिधाने प्रभातदीपप्रतिमामवापुः ॥ ५१ ॥

सुवर्णरेखारमणीयदेहा देवस्य रामा नयनायुधस्य ।
अनेकपृथ्वीपतिभाग्यहेम-परीक्षणार्थं कषपट्टिकेव ॥ ५२ ॥

मुखेन लज्जाभिनयप्रगल्भा लीलालवन्यञ्चितकन्धरेण ।
प्रत्यादिशन्तीव दिवि स्फुरन्तमनेकदोषोपहतं मृगाङ्कम् ॥ ५३ ॥

एकां भ्रुवं विभ्रमराजधानीं[2] सलीलमर्धोन्नमितां दधाना ।
प्रतारकस्याखिलपार्थिवानां संतर्जनायेव मनोभवस्य ॥ ५४ ॥

प्राणेशकण्ठप्रणयोद्यतायाः करस्थितायाः कुसुमस्रजोऽपि ।
ईर्ष्याविशेषा[3]दिव धारयन्ती साकूतवक्रेक्षणमाननेन्दुम् ॥ ५५ ॥

माणिक्यभित्तिप्रतिमानिभेन सौभाग्यहेतोर्विधृतेव दिग्भिः ।
मनोभवेनापि निजोत्पलाक्षी-वैराग्यभाजेव निषेव्यमाणा ॥ ५६ ॥

निजत्विषा भूषणरत्नमालां समुल्लसन्त्या मलिनां विधाय ।
निवारयन्ती प्रतिबिम्बभङ्ग्याप्यङ्गेषु सामान्यनरेन्द्रसङ्गम् ॥ ५७ ॥

अंसस्थले हारलताञ्चलस्थ-विलोलनेत्रच्छटया सनाथा ।
त्रिलोककान्ताजनदर्पभङ्ग-प्रसूतया कीर्तिपताकयेव ॥ ५८ ॥

सहागतानीव जगन्मनांसि दाक्षिण्ययोगात्प्रतिपालयन्ती ।
कन्दर्पमत्तद्विरदेन्द्रभङ्ग्या विलम्ब्य किञ्चिद्ददती पदानि ॥ ५९ ॥

---

१ दिवि विस्फुर- प्र. । २ -राजधानी ब. । ३ ईर्ष्याविशेषा- ब. ।

कर्पूरवल्लीदलवीटिकायां व्यापारितव्याकुलवामहस्ता ।
कपोलवल्गत्पुलकाङ्कुरश्रीर्विहस्य किञ्चित्परिभावयन्ती ॥ ६० ॥

पदं प्रमोदालसराजहंस-विलासिनीचङ्क्रमणक्रमेण ।
संक्रान्तरागेषु निवेशयन्ती नरेन्द्रचित्तेष्विव कुट्टिमेषु ॥ ६१ ॥

मनोभवज्यावलयानुकारि-कर्णद्वयावासितनेत्रपत्रा ।
वेणीं स्फुरत्पुष्पशिलीमुखाढ्यां कन्दर्पभल्लामिव धारयन्ती ॥ ६२ ॥

विलोलचूर्णालकवल्लरीणां सङ्गे[1] स्पृशन्तीं[2] कलिकानुकारम् ।
श्रीखण्डलेखामलिके वहन्ती भ्रूकार्मुके मन्मथकेतकास्त्रम् ॥ ६३ ॥

आविर्बभूवाथ पतिंवरा सा क्षौमाम्बरप्रस्फुरदुत्तरीया ।
मृगेक्षणा दुग्धपयोधिमुग्ध-तरङ्गलेखानुगतेव लक्ष्मीः ॥ ६४ ॥
कुलकम्[3] ।

हेमाद्रिमावर्त्य कृतेव धात्रा विसारिभिर्या किरणैस्तदीयैः[4] ।
सा संगता रङ्गतले नताङ्गी सर्वस्य लोभं सुभगा ततान ॥ ६५ ॥

विलोकयामास विलासपद्मं सगर्वमीषन्[5]मुकुलायिताक्षी[6] ।
दिक्पालहेतोरिव दूतकर्म दिगङ्गनानामवधारयन्ती ॥ ६६ ॥

स ताडितश्चेतसि मन्मथेन निःशङ्कमाक्रान्तशरासनेन ।
विलोक्य तां विभ्रमवैजयन्तीमचिन्तयत्कुन्तलचक्रवर्ती ॥ ६७ ॥

अनर्घ्यलावण्यनिधानभूमिर्न कस्य लोभं लटभा तनोति ।
अवैमि पुष्पायुधयामिकोऽस्यामविश्वसन्न क्षणमेति निद्राम् ॥ ६८ ॥

---

१ सङ्गैः ब. । २ स्पृशन्ती ब. । ३ केवलं ज. पुस्तके । ४ करणैस्तदीयैः ब. । ५ सवर्गमीष- प्र. । ६ –मुकुलायताक्षी ज. ।

इयं विलासद्रुमदोहदश्रीरियं सुधा यौवनदुग्धसिन्धोः ।
लावण्यमाणिक्यरुचिच्छटेयमियं मनःकार्मणचूर्णमुष्टिः ॥ ६९ ॥

संपूर्णचन्द्रोदयनित्यराका लीलारसानां परिपाकभूमिः ।
इयं मनोजन्मनराधिपस्य त्रैलोक्यसाम्राज्यफला तपःश्रीः ॥ ७० ॥

नीरन्ध्रविस्फूर्जदनङ्गगर्जिः पयोधरश्रीरियमेतदीया ।
विलासवैदूर्यनवाङ्कुराणां प्रयाति नित्योद्गमकारणत्वम् ॥ ७१ ॥

कान्त्या दरिद्रत्वमुपैति चन्द्रः किमस्ति तत्त्वं विकचोत्पलेषु ।
न वेद्मि विश्वास्य कथं मृगाक्ष्या सौन्दर्यसृष्टिर्मुषिता विधातुः ॥७२॥

इयं मयि न्यस्यति नेत्रमालां मुहुः सखीनां किमपि ब्रुवाणा ।
सत्यैव साभूदनुरागवार्त्ता चिरात्प्रसन्नो भगवाननङ्गः ॥ ७३ ॥

जघान पादेन सखीं सखेलमाकृष्य हारं मुहुरामुमोच ।
सा दर्शने कुन्तलपार्थिवस्य न कारिता किं मकरध्वजेन ॥ ७४ ॥

तदीयवक्त्रेन्दुविलोकनेन सान्द्रोल्लसद्रागपयोनिधीनाम् ।
तत्रागतानां पृथिवीपतीनामासन्विचित्राणि विचेष्टितानि ॥ ७५ ॥

उत्कृष्यमाणं निजहारदाम समस्तभूपालविभूषणेभ्यः ।
वक्षःस्थलेनोन्नमितेन दूरं कश्चिन्नरेन्द्रः प्रकटीचकार ॥ ७६ ॥

सावज्ञमुत्तार्य सुवर्णसूत्रं देहप्रभानिह्नुतशोभमेकः ।
मुक्ताकलापं हृदये बबन्ध पतिंवराप्राप्तिमनोरथं च ॥ ७७ ॥

चूडामणेः कोऽपि परिश्लथस्य स्थाने निवेशाय कृताभिलाषः ।
लीलासरोजं मुकुटे बबन्ध पुराङ्गनाभिः परिहस्यमानैः ॥ ७८ ॥

१ -वैडूर्यनवा- ब. । २ परिहास्यमानः ब. ।

मञ्चान्तरे संततमग्रपादं प्रसारयामास सगर्वमेकः ।
ह्रस्वासिधेनुश्रमसूचनार्थमान्दोलयामास च पाणियुग्मम् ॥ ७९ ॥

अनुद्गतस्वेदमपि क्षितीन्दुरुद्धूल्य कर्पूररजोभिरङ्गम् ।
कर्णद्वये कुण्डलयोश्चकार वृथैव कश्चित्परिवर्तनानि ॥ ८० ॥

जघान ताम्बूलकरङ्कवाहं करेण कूजद्वलयेन कश्चित् ।
लिलेख ताम्बूलदलं नखैश्च प्रतारितः पुष्पशरासनेन ॥ ८१ ॥

गोष्ठीमिषेण स्वयमेवमेव प्रकाशयन्वाचि पटुत्वमन्यः ।
आकृष्य ताम्बूलकरङ्कमध्यात् कर्पूरदानं विदधे बहुभ्यः ॥ ८२ ॥

हेमासनं वस्त्रनिवेशनेन तुङ्गत्वमानीय वृथा ववल्ग ।
नवीनतारुण्यनिवेदनार्थमजातकूर्चेन मुखेन कश्चित् ॥ ८३ ॥

निक्षिप्य ताम्बूलकरङ्कवाह-पृष्ठे शरीरं सविलासमेकः ।
उदञ्चितभ्रूलतिकापताकमकारणादेव मुखं चकार ॥ ८४ ॥

जृम्भावशोत्तम्भितहस्तयुग्म-संघट्टलीलास्फुटदङ्गुलीकः ।
कश्चिन्निपत्योपरि विष्टरस्य दुर्वारकामग्रहमोहितोऽभूत् ॥ ८५ ॥

कण्ठस्फुरत्पञ्चमकाकलीकः कश्चिद्व्यलीकस्मितमाततान ।
संग्रथ्य कश्चित्कतिचित्पदानि गाथाकवित्वं कथयांबभूव ॥ ८६ ॥

वैतालिकानां तुमुलं निवार्य ततः कुमार्याः सुकुमारकण्ठी ।
उदाजहार प्रतिहाररक्षी क्रमेण चक्रं पृथिवीपतीनाम् ॥ ८७ ॥

अर्घेषु यो मूर्धसु खण्डितेषु खड्गं कठोराहतिकुण्ठधारम् ।
श्रीकण्ठकेयूरभुजङ्गराज-फणामणौ घर्षितुमाचकाङ्क्ष ॥ ८८ ॥

कृत्वा हठाद्वामकरे हराद्रिं कण्डूलदोर्मण्डलदुर्मदो यः ।
हिमालयोन्मूलनकौतुकेन भेजे भुजं दक्षिणमुत्तरङ्गम् ॥ ८९ ॥

लङ्कापतेस्तस्य मुखाम्बुजानि भोगास्पदं यस्य शिलीमुखानाम् ।
रामस्य तस्यैष कुले कुमारः कुमारि नेत्रप्रणयी तवास्तु ॥ ९० ॥

अनेन सार्धं सरयूवनान्ते कूजन्मयूरीमुखरे विहृत्य ।
विलासवातायनसेवनेन श्लाघ्यामयोध्यां नगरीं विधेहि[1] ॥ ९१ ॥

तयोपदेशः स कृतः कुमार्यां वृथागमन्नीच इवोपकारः ।
प्रेमाणि जन्मान्तरसंचितानि प्रादुर्भवन्ति क्वचिदेवमेव ॥ ९२ ॥

प्रदर्शयामास ततः कुमार्याः[2] क्षितीशमन्यं प्रतिहाररक्षी ।
चूतानुबन्धे मधुपाङ्गनाया मुग्धा[3] मधुश्रीरिव कर्णिकारम् ॥ ९३ ॥

यस्याहवे साहसलाञ्छनस्य मौर्वीरवः प्राप्य बिलोदराणि ।
क्षणेन पातालतलस्थितानां शौण्डीर्यवार्त्तां कथयांबभूव ॥ ९४ ॥

सोऽयं रणे नर्तयिता कबन्धान् मदान्धभूपालसहस्रसेव्यः ।
विलोक्यतां सुन्दरि चेदिराजस्तवास्तु दृष्टिः स्मरवैजयन्ती ॥ ९५ ॥

तयेत्थमुक्ता न परं कुमारी नालोकयामास विलासिनं तम् ।
ताम्बूलमुत्सृज्य मुखाम्बुजस्थं[4] निकारमार्गेण निराचकार ॥ ९६ ॥

अथान्यमुद्दिश्य नरेन्द्रपुत्रमुत्त्रस्तसारङ्गविलोलदृष्टिः ।
सांमुख्यमानीयत मानिनी सा वाक्यैरुदारैः प्रतिहाररक्ष्या ॥ ९७ ॥

कन्ये समालोकय कान्यकुब्जमकुब्जकीर्तिं नरनाथमेनम् ।
ककुब्जये यस्य धरापरागैर्भवन्ति वारां निधयः स्थलानि ॥ ९८ ॥

---

१ व्यधेहि ज.। २ कुमार्यां ज., ब.। ३ मुग्धं ब.। ४ मुखाम्बुजस्थं ब.।

तस्मात्समाकृष्य नतानना सा दृष्टिं क्षिपन्ती कुचकुम्भपीठे ।
तस्याभ्यधत्त क्षितिवल्लभस्य स्थूलत्वमङ्गेष्विव भूषणस्य ॥ ९९ ॥

प्रलोभयन्ती गतिभिः समस्तान् सा राजहंसान्कलनूपुराभिः ।
किञ्चित्पुरश्चङ्क्रमणप्रवृत्ता भूयस्तया सस्मितमभ्यधायि ॥ १०० ॥

उत्कर्षरेखां दृढकीलितस्य यत्पत्रिणः पोत्रिणि शङ्कमानः ।
शीघ्रं हरः सूकरदेहरन्ध्राल्लीलाकिरातः शरमुच्चखान ॥ १०१ ॥

अशङ्कितः शङ्करमल्लयुद्धे यः स्वेदवारां विनिवारणाय[1] ।
भस्मोत्करं विस्मयघूर्णितस्य कक्षान्तरात्तस्य समाचकर्ष ॥ १०२ ॥

पार्थस्य तस्यैष कुले प्रसूतः प्रभूतशौर्यो[2] नृपतिः प्रतापी ।
एनं समालोकय रन्तुकामा चर्मण्वतीतीरवनस्थलेषु ॥ १०३ ॥

क्षेप्तुं तदीये शिरसीव पादं समुत्क्षिपन्तीं[3] गमनार्थमग्रे ।
उद्दिश्य सा राजकुमारमन्यं कन्यां प्रगल्भा पुनराबभाषे ॥ १०४ ॥

शृङ्गाणि नूनं मिलितानि यस्य स्वर्गप्रतोलीकपिशीर्षकाणाम् ।
अत्र स्थितानां कथमन्यथा द्यौः क्रीडागृहप्राङ्गणभङ्गिमेति ॥ १०५ ॥

तस्यैष कालिञ्जरभूधरस्य श्रीनीलकण्ठस्य विलासधाम्नः[4] ।
भर्ता भुजावर्तितराजचक्रः कटाक्षचक्रप्रणयी तवास्तु ॥ १०६ ॥

चेतस्यविद्धे कुसुमायुधेन मुक्ताफले तन्तुरिव प्रवेशम् ।
यतो न लेभे स नृपस्ततोऽस्याः सान्यं विदग्धा प्रकटीचकार॥१०७॥

---

१ स्वेदधाराविनिवा– प्र. ; स्वेदधाराम्बुनिवा– ब. । २ प्रभूतसौर्यो ज. ।
३ समुत्क्षिपंती प्र. । ४ विलासदाम्नः ब. ।

शौर्यप्रियेणाहवनिःस्पृहाणां येन प्रतिक्षोणिभृतां निवासाः ।
लीलाचपेटक्षतकुञ्जराणां पदे पदे केसरिणेव लब्धाः[1] ॥ १०८ ॥

गोपाचलक्ष्मापतिरेकवीरः स एष पृथ्व्यामवदातकीर्तिः ।
स्वयंवरस्रग्विनिवेशदूती तवात्र नेत्रोत्पलमालिकास्तु ॥ १०९ ॥

सा प्रार्थितान्यार्थमनङ्गबाणैः[2] कमप्यलब्ध्वा परिहारहेतुम् ।
पादेन वाचालितनूपुरेण जगाद मौखर्यमिवास्य दोषम् ॥ ११० ॥

मध्येन येषां वसुधापतीनां जगाम सा कामवशीकृतानाम् ।
स्वयंवरस्रग्रजसेव पूर्णास्तेषां दृशः साश्रुजला बभूवुः ॥ १११ ॥

यद्वैरिभूपालविलासिनीनां कपोलपालीषु विपाण्डुरासु ।
भवन्ति लम्बालकवल्लरीभिः सशैवलानीव दृशोः पयांसि ॥ ११२ ॥

यस्य प्रतापोऽग्निरपूर्व एव जागर्ति भूभृत्कटकस्थलीषु ।
यत्र प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥ ११३ ॥

स एष लीलावति मालवेन्द्रस्तवात्र मन्त्री[3] कुसुमायुधोऽस्तु ।
लीलावनैस्ते विदधातु तोषममुष्य धारा कुलराजधानी ॥ ११४ ॥

निरादरां[4] तत्र ततो वितर्क्य नासाग्रसंकोचितया दृशैव ।
गत्वा पुरः सा कतिचित्पदानि स्मृत्वा[5] हसन्तीमवदत्कुमारीम् ॥ ११५ ॥

निशम्य तुक्खार[6]खुरक्षतायाः क्षितेस्तनुत्वादिव यस्य कीर्तिम् ।
संभूय गायन्ति फणीन्द्रकन्याः संगीतशालासु भुजङ्गभर्तुः ॥ ११६ ॥

---

१ केसरिणां विलब्धाः ज. । २ –मंगबाणैः प्र. । ३ मंति प्र. । ४ निरादरा ब. । ५ स्मृत्या ब. । ६ तुरकार– ज. ।

सोऽयं गुणग्राहिणि गुर्जरेन्दुः स्वबाहुवीर्यार्जितराजलोकः ।
अत्रास्तु दृष्टिस्तव नीरजाक्षि प्रसन्नपुष्पायुधपुष्पवृष्टिः ॥ ११७ ॥

लीलाम्बुजेन भ्रमरान्क्षिपन्ती तस्य प्रतिक्षेपमसौ चकार ।
उवाच चैनां पुरतः प्रविश्य किञ्चित्सगर्वा प्रतिहारगोप्त्री ॥ ११८ ॥

श्रीखण्ड[1]चर्चापरिपाण्डुरोऽयं[2] पाण्ड्यः प्रकामोन्नतचारुदेहः ।
क्षीरोदधिक्षीरपरिप्लुतस्य चातुर्यमाचामति मन्दराद्रेः ॥ ११९ ॥

अनेन मैत्रीं यदि मन्यते ते मनोभवस्तामरसायताक्षि ।
लीलावने चन्दनपादपानां श्रयन्तु नित्यं मलयानिलास्त्वाम् ॥१२०॥

तत्रापि साभूद्गुणभाजनेऽपि पराङ्मुखी श्रीरिव भाग्यहीने ।
जगाद भूयः पटुवादिनी सा बालां प्रवालाधिकपाटलौष्ठीम् ॥१२१॥

लीलावगाहं जलधौ विधाय वेलावनान्तेषु विहारभाजाम् ।
दिग्वारणानामवतारतां ये करेणु[3]कारोहणतः प्रयाताः ॥ १२२ ॥

ते जैत्रयात्रासु महाभटस्य यस्य स्फुटद्दानजलाः करीन्द्राः ।
दिग्दन्तिसंदर्शनवाञ्छयेव भ्रमन्ति सर्वाणि दिगन्तराणि ॥ १२३ ॥

रत्नोत्करैः संततमर्थिसार्थं यं पूरयन्तं प्रतिषेधतीव ।
जलद्विपानां मदडिण्डिमत्वं गतेन मन्द्रध्वनिना पयोधिः ॥ १२४ ॥

क्षितौ नमन्त्यां पृतनाभरेण यः प्रोच्छलद्वीचिपरंपरस्य ।
शैलानुकारैः करिभिस्तटस्थैर्बध्नाति पालीमिव दक्षिणाब्धेः ॥ १२५ ॥

वमन्ति पीतं सममब्धितोयैर्यस्योच्छलच्छीकरडम्बरेण ।
पदाहतित्रुट्यदरिक्तशुक्ति-मुक्ताफलस्थोद[4]मिव द्विपेन्द्राः ॥ १२६ ॥

---

१ श्रीषंड– ज.। २ –पाण्डुरोथ ज., ब.। ३ करेणृका– प्र.। ४ 'फलक्षोद' इति रा. पुस्तकशुद्धिपत्रे ।

यान्तीषु यद्वारविलासिनीषु[1] करेणुभिः पूरितदिक्तटाभिः[2] ।
दिनेऽपि दिक्पालपुरीगवाक्षाः प्रक्षालनं चन्द्रिकया लभन्ते ॥ १२७ ॥

स एष चोलश्चपलाक्षि राजा जयोत्सवैर्यस्य दिशां मुखानि ।
स्फूर्जद्यशःपुञ्जतया स्थितानि मङ्गल्यशङ्खानिव पूरयन्ति ॥ १२८ ॥

विलासविद्याधरराजहंसं कुरुष्व दोःपञ्जरबद्धमेनम् ।
वातायनैः केलिविमानकल्पैस्तवास्तु काञ्ची नयनोत्सवाय ॥ १२९ ॥

तमित्थमन्यत्र कृताग्रहा सा विलङ्घ्य चालुक्यनृपोन्मुखाभूत् ।
उत्तालवेलापरिवर्तितापि तरङ्गिणी नोज्झति पूर्वमार्गम् ॥ १३० ॥

चालुक्यपृथ्वीपतिकृष्यमाणे नितान्तदीर्घे नयनाञ्चलेऽस्याः ।
निर्वापिताशापृथुदीप[3]वर्ति-धूमैरिवान्ये मलिना बभूवुः ॥ १३१ ॥

तत्र क्षणे कोऽपि जगाद राजा पराङ्मुखोऽस्यां प्रियजानिरस्मि ।
कश्चिद्विनोदाद्विटपार्थिवानां विलोकनायागमनं शशंस ॥ १३२ ॥

त्वयाहमानीय विडम्बितोऽत्र मिथ्येति कश्चित्सचिवं निनिन्द ।
वज्राहतानामिव भूपतीनां ययुः परेषां नतिमाननानि ॥ १३३ ॥

दृष्टिः समस्तात्क्षितिपालचक्राच्चालुक्यसिंहासनमण्डनं तम् ।
विविच्य जग्राह कुरङ्गकाक्ष्याः क्षीरं जलौघादिव राजहंसी ॥ १३४ ॥

अथ प्रतीहारधुरन्धरा सा जगाद तां दन्तरुचिप्रवाहैः ।
अन्यक्षमापालविलोकनोत्थं प्रक्षालयन्तीव कलङ्कमस्याः ॥ १३५ ॥

---

१ यद्वारि विलासिनीषु प्र. ; यद्वारि विलासिनीषु ब. । २ -दिक्तटीभिः ब. ।
३ -ताशापृथुद्वीप- प्र. ; -ताशाः पृथुदीप- ब. ।

जानाति राजीवमुखि ग्रहीतुं दृष्टिस्त्वदीया कमनीयमर्थम् ।
यां शैवलानीव विलङ्घ्य सर्वान् भृङ्गीव लग्ना मुखपङ्कजेऽस्य ॥१३६॥

अनन्यसामान्यममुष्य रूपं किमुच्यते दृष्टमिदं त्वयापि ।
वदामि सौभाग्यगुणं किमस्य यत्र स्थिते श्रीश्च सरस्वती च ॥१३७॥

सङ्गादजस्रं मदवारणानां सावज्ञमालोकितदिग्द्विपेन्द्राः ।
अमुष्य वाहाः सततं जिगीषोः क्षणेन गर्भे ककुभां भ्रमन्ति ॥१३८॥

एकत्र भारेण धरा नमन्ती न मस्तके तिष्ठति भोगिभर्तुः ।
इतीव सर्वास्वपि दिक्षु कीर्णमनेन सेनागजचक्रवालम् ॥ १३९ ॥

भुजङ्गमाधीशशिरोधृतस्य दार्ढ्यं धरित्रीफलकस्य कर्तुम् ।
क्षिप्ता जयस्तम्भमिषादनेन समन्ततः कीलकमालिकेव ॥ १४० ॥

राज्ञां शिखारत्नपरंपराभिः प्रोताभिरस्योभयतः कृपाणः ।
शेषारिकण्ठास्थिविघट्टनेषु जातः क्षणं संप्रति कुण्ठधारः ॥ १४१ ॥

सोमेश्वरश्चोलमहीपतिश्च जयोत्सवद्वारि बलाद्विशन्तौ ।
द्वावप्यनेनाद्भुतसाहसेन द्वाभ्यां भुजाभ्यां बलिना निरस्तौ ॥ १४२ ॥

अस्याद्भुतत्यागनिधेः पुरस्तात् कल्पद्रुमाद्याः परमाणुकल्पाः ।
समत्वमेतेन कथं लभन्ते जगत्त्रयीगौरवभाजनेन ॥ १४३ ॥

मुञ्जस्य गुञ्जासमतापि नास्ति का योग्यता भोजमहीभुजश्च ।
लब्धे कवीन्द्रैः कविबान्धवेऽस्मिन् दासीकृता पादतलेषु लक्ष्मीः ॥१४४॥

विहाय वक्त्राणि मृगेक्षणानां सविभ्रमभ्रूयुगताण्डवानि ।
अस्यान्यतः साहसलाञ्छनस्य न भीतिमुद्रामुकुलं[2] मनोऽभूत् ॥१४५॥

---

१ सा ब.; 'ज. पुस्तके 'सा' नास्ति' इति ब. टि. । २ -मुद्रानुकूलं रा. ।

निवेश्यतां किंनरकण्ठि कण्ठे मालास्य दोर्बन्धविलास[1]दूती ।
कीर्तिर्विधेरस्तु समानयोगात् कामस्य कामं फलतु प्रयासः ॥१४६॥

लज्जानिरासे निभमात्रकेण वाक्येन तेन प्रतिहाररक्ष्याः ।
पतिंवरा संवरणस्रजं तां श्रीविक्रमाङ्कस्य चकार कण्ठे ॥ १४७ ॥

तया स्रजा[2] कण्ठनिवेशभाजा मत्तालिमालाकलझाङ्कृतेन ।
अवाद्यतेवाखिलभूमिपाल-सौभाग्यलीलाजयडिण्डिमोऽस्य ॥ १४८ ॥

तद्बाहुलेखे कुसुमस्रजोऽपि सौभाग्यशोभान्वयमन्वभूताम् ।
कण्ठस्थितायामपि येन तस्यां देवस्तदालिङ्गनसत्वरोऽभूत् ॥ १४९ ॥

जयति कुसुमकेतोश्चापविद्यारहस्यं
विधिरुचितविधायी सांप्रतं वन्दनीयः ।
उदचरदिति वाणी तत्र पौराङ्गनाना-
मिह हि सदृशयोगः कस्य न प्रीतिहेतुः ॥ १५० ॥

अथ मृदुलमृदङ्गध्वानमारुह्य वध्वा
सह परिणयलीलामण्डपं[3] पाण्डुकीर्तिः ।
निखिलनृपतिलक्ष्म्या रागसंक्रान्तयेव
द्युतिमधिकमुदारां कुन्तलेन्दुर्बभार ॥ १५१ ॥

इति श्रीविक्रमाङ्कदेवचरिते[4] महाकाव्ये त्रिभुवन[5]मल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते नवमः सर्गः[6] ॥ ९ ॥

---

१ विकास- रा. । २ स्रजा ज. । ३ परिणयमण्डपं प्र ; परिणययोग्यं मण्डपं ब. । ४ विक्रमाङ्कविरचिते ज. । ५ श्रीत्रिभुवन- ज. । ६ श्रीबिल्हण नवमः सर्गः समाप्तः ज. ।

# दशमः सर्गः

जातेऽथ[1] देवस्य तथा[2] विवाह-महोत्सवे साहसलाञ्छनस्य ।
कृतार्थया पार्थिवकन्ययेव कीर्त्याप्यमुच्यन्त[3] नृपाः समस्ताः ॥ १ ॥

आशाप्रदीपेषु गतेषु शान्तिमशेषसौभाग्यगुणक्षयेण ।
तदीयधूमैरिव धूसराङ्गाः क्षोणीभुजः श्यामलिमानमापुः ॥ २ ॥

क्रमक्रमं कर्तुमभूदपेक्षा वैलक्ष्यभाजां न महीपतीनाम् ।
श्रीविक्रमाङ्कस्य न कङ्कपत्रास्ते किन्तु सह्याः समराङ्गणेषु ॥ ३ ॥

यथागतेनैव पथा गतेषु भूपेष्वथ म्लानमनोरथेषु ।
रेमे तया भूमिपतिः श्रियेव दैत्यप्रमाथार्जितया मुरारिः ॥ ४ ॥

सा संनताङ्गी शनकैः प्रियस्य तथा गुणैर्मानसमारुरोह ।
तदेकवश्यं स्मरशासनेन यथा तदन्याभिरहार्यमासीत् ॥ ५ ॥

श्रीकुन्तलक्षोणिपतेस्तदीये वक्त्रेन्दुबिम्बे हृदयं प्रविष्टे ।
अन्याङ्गनानां मुखपङ्कजानि संकोचभीत्येव बहिर्बभूवुः ॥ ६ ॥

सा तत्र शीघ्रं विविधोपचार-प्रौढे नवोढाव्रतमुत्ससर्ज ।
अकौशलं पत्युरिदं चिरेण विश्वासमायाति नवा वधूर्यत् ॥ ७ ॥

शस्त्राधिकारी मकरध्वजस्य कण्ठेषु सौभाग्यगुरुः पिकानाम् ।
वैशद्यसंजीवनमिन्दुभासां साम्राज्यमन्त्री रसपार्थिवस्य ॥ ८ ॥

---

१ यातेथ रा. । २ तथा रा. । ३ -मुचंत प्र. ।

उच्चित्रणे[1] चित्रकरस्तरूणां मानद्रुमोन्मूलनमत्तदन्ती ।
तस्य प्रभावादथ तत्र भर्तुश्चैत्रः पुनर्नूतनतां प्रपेदे ॥ ९ ॥

युग्मम्[2] ।

जगज्जयार्थं स्मरपार्थिवेन नीतश्चमूनायकतां वसन्तः ।
वातोच्छलच्चम्पकचक्रभङ्ग्या त्यागीव हेमप्रकरैर्ववर्ष ॥ १० ॥

किञ्जल्कपुञ्जैः परिपिञ्जरासु दिक्षु प्रसूनप्रसरप्रसूतैः[3] ।
दिवापि जाम्बूनदभूषणानां लीलाभिसारः सुदृशां बभूव ॥ ११ ॥

मग्नं मधुस्रोतसि[4] कर्दमाभे पदं समुद्धर्तुमपारयन्ती ।
अजस्रमाक्रन्दनिभैर्विरावैर्मधुव्रती षट्पदमाजुहाव ॥ १२ ॥

निरुध्य रन्ध्रं मधुपूरितस्य पुष्पस्य लोभाद्भ्रमरोऽवतस्थे ।
अन्येन मार्गेण पपुस्तदन्ये लब्धार्जनानामयमेव मार्गः ॥ १३ ॥

श्रीखण्डसंसङ्गिभुजङ्गराज-विषोष्मणा क्लान्तिमिव प्रपद्य ।
दरीमुखैर्निःश्वसितुं प्रभूतैः क्रमात्प्रवृत्तो मलयाचलेन्द्रः ॥ १४ ॥

सर्वं दिनं भूमिगृहेष्वतिष्ठद् बाधिर्ययोगं मुहुराचकाङ्क्ष ।
पिकाङ्गनापञ्चमपीड्यमानश्चकार किं किं न वियोगिवर्गः ॥ १५ ॥

अहो मतिभ्रंशमनङ्गबन्धुश्चकार चैत्रः प्रियखण्डितानाम् ।
चक्रुर्यदाक्रन्दपरंपराभिः संवर्धनं कोकिलकूजितानाम् ॥ १६ ॥

कामस्य कश्चिच्चतुरः शरांश्चेद् विलङ्घयामास कथञ्चिदन्यान् ।
उन्मज्जता कोकिलकण्ठयन्त्रात् स पञ्चमास्त्रेण वशीबभूव ॥ १७ ॥

---

१ उच्चित्रेण प्र. । २ ब. पुस्तके नास्ति । ३ -प्रसूनैः रा. । ४ -श्रोतसि ज. । ५ कामा- रा. ।

अथ श्रमं स्निग्धविलोकनेन चैत्रस्य कुर्वन्सफलं नरेन्द्रः[1] ।
विवेश देव्याः परिगृह्य पाणिं चित्रासु लीलोपवनस्थलीषु ॥ १८ ॥

इतस्ततः सस्पृहमीक्षमाणो मृगेक्षणां तामथ कुन्तलेन्दुः ।
जगाद कन्दर्पधनुर्निनाद-प्रतिस्वनभ्रान्तिकृता स्वरेण ॥ १९ ॥

सुगात्रि कच्चित्तव नेत्रमैत्रीं चैत्रः प्रसूते रतिजन्मभूमिः ।
यस्य श्रिया त्वद्वपुषश्च लक्ष्म्या मात्यन्न किञ्चिद्गणयत्यनङ्गः ॥ २० ॥

अधिष्ठिता मन्मथपार्थिवेन द्रष्टुं मुदा चैत्रचमूसमूहम् ।
आलोकनेन क्रियतां कृतार्था[2] बाले विलासोपवनस्थलीयम् ॥ २१ ॥

कन्दर्पलीलाजयराजधानि मधुव्रतानां मधुरैर्विरावैः ।
आभाषते संमुखमागतायाः पूर्वाभिभाषीव तवैष चैत्रः ॥ २२ ॥

लास्यं त्वयि प्रेक्षितुमागतायां लतापुरन्ध्र्यः कुसुमैः पतद्भिः ।
मृगाक्षि लीलावनरङ्गपीठे पुष्पाञ्जलिक्षेपमिवोद्वहन्ति ॥ २३ ॥

अशोकशाखी निखिलद्रुमेषु धन्यस्त्वया पादतलाहतोऽयम् ।
तेषां प्रसन्नो हि विलासबाणैः[3] क्रीडन्ति दासैरिव यैर्मृगाक्ष्यः ॥ २४ ॥

अरोचकी पादपजातिमध्ये जाने नितान्तं बकुलद्रुमोऽयम् ।
चैत्रेऽपि यः पुष्पविकासहेतोर्गण्डूषमाकाङ्क्षति ते मृगाक्षि ॥ २५ ॥

एकत्र तस्मिन्मदने सकोपं देवेन दग्धे पुरसूदनेन ।
इयं मधुश्रीस्त्वमिवोद्विकासान्[4] मुहुः सहस्रं मदनान्विधत्ते ॥ २६ ॥

तवाङ्गवल्लीकुसुमैर्विलासैरवैमि कामो ह्रियमाणनेत्रः ।
चैत्रार्पितं नूतनमस्त्रजातं संधातुकामोऽपि न संदधाति ॥ २७ ॥

---

१ नरेन्द्रैः प्र. । २ क्रियार्थो ज. । ३ -बाण प्र. । ४ -द्विकाशान् ज. ।

गुणं दधाने मधुनार्प्यमाणं मनस्विनां मानसभेददक्षे ।
शिलीमुखश्रेणिरुपैति सङ्गं पुष्पे च कन्दर्पशरासने च ॥ २८ ॥

पुंस्कोकिलस्ते मधुमासलक्ष्म्या गान्धर्वसर्वस्वविशारदायाः ।
प्रकाशितं[1] शिष्य इवैष पश्य रागं मुहुः पञ्चममातनोति ॥ २९ ॥

मधुश्रिया चन्द्रमुखि त्वया च सनाथतामेति विलासचापः ।
अभूदनङ्गस्तु समक्षमस्याः पूर्णाङ्गमेनं भवती करोति ॥ ३० ॥

कृत्वेति सूक्तैः सरसैः प्रियायाः कर्णावतंसं पुनरुक्तकल्पम् ।
आरोपयामास विलासदोलां लोलेक्षणां कुन्तलचक्रवर्ती ॥ ३१ ॥

दोलाविलोलालकमुद्विलास - भ्रूवल्लि विभ्रान्तविलोचनाब्जम्[2] ।
उत्कीर्य कामः शरटङ्किकाभिस्तद्वक्त्रमेतस्य हृदि न्यधत्त ॥ ३२ ॥

गीतं स्फुरत्पञ्चममञ्चितभ्रु विलोकितं नूपुरनिस्वनश्च ।
नृपाङ्गनायास्त्रयमेतदासीत् त्रैलोक्यराज्ये मदनस्य शस्त्रम् ॥ ३३ ॥

नितम्बबिम्बातिभरेण दोला यथा यथा तारतरं चुकूज ।
अलक्षितज्यानिनदः क्षितीन्दुं तथा तथा पुष्पधनुर्बिभेद ॥ ३४ ॥

आन्दोलयामास विलासदोलां स वल्लभायाः पृथिवीभुजङ्गः ।
भङ्गं समग्रस्य वधूजनस्य जग्राह सौभाग्यगुणप्रपञ्चः ॥ ३५ ॥

समुद्वहन्त्योस्तदथायताक्षी - दोलाविलोलाननमार्गसख्यम् ।
दृशोः क्षितीन्द्रस्य गतागताभ्यां गव्यूतिमात्रं भ्रमणं बभूव ॥ ३६ ॥

अथावतीर्य क्षणमात्रमङ्के प्रियस्य विश्रम्य गतश्रमा सा ।
वसन्तलक्ष्म्या परिलोभ्यमाना चचाल पुष्पावचयाय देवी ॥ ३७ ॥

---

१ प्रकाशितुं रा. ।　२ -विलोचनार्द्धम् ज. ; विलोचनार्थम् प्र. ।

भ्रूसंज्ञया[1] कुन्तलभूमिभर्तुरन्तःपुरं सर्वमपि क्रमेण ।
चक्राम पुष्पोच्चयबद्धहर्षमुत्साहसीमा हि पतिप्रसादः ॥ ३८ ॥

असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति ।
एवं कदर्यत्वमिवा[2]वधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥ ३९ ॥

आरोहति क्षोणिपतेः कलत्रे शिरःस्थपुष्पोच्चयकौतुकेन ।
प्रभ्रंशमाशङ्क्य नितम्बभाराद् भियेव लीलाबकुलश्चकम्पे ॥ ४० ॥

आनम्यमाना लतिका रजोभिः पौष्पैर्दृशौ पूरयति स्म देव्याः ।
अन्या नृपालिङ्गनमाससाद भाग्येषु नास्ति प्रतिषेधमार्गः ॥ ४१ ॥

अताडयत्पल्लवपाणिनैकां पुष्पोच्चये राजवधूमशोकः ।
तच्छेदहेतोरलिपङ्क्तिभङ्ग्या व्याकृष्यतेवासिलता स्मरेण ॥ ४२ ॥

आरोप्यमाणा दयितेन काचिन्नितम्बभारात्स्वय[3]मप्रगल्भा ।
स्कन्धात्तरोः प्रत्युत मूलमाप स्विन्नेन[4] पादाम्बुरुहद्वयेन ॥ ४३ ॥

आरुह्य कान्तासु विधुन्वतीषु संभाव्य भङ्गं जघनातिभारैः ।
लघुत्वहेतोरिव पुष्पभारं द्रुमास्त्यजन्ति स्म निजोत्तमाङ्गात् ॥ ४४ ॥

केलिद्रुमाः क्ष्मातलमागतासु संगृह्य पुष्पाणि नितम्बिनीषु ।
भारान्न भङ्गः समजायतेति गर्वादिवोच्चैःशिरसो बभूवुः ॥ ४५ ॥

स्वेदाम्भसा पुष्परजोभरैश्च सर्वत्र पङ्के विहिते वधूनाम् ।
चक्रे निवासं कठिनोन्नतेषु तासां मनोभूः स्तनमण्डलेषु ॥ ४६ ॥

नाभीह्रदेषु स्थलतां गतेषु लताच्युतैः पुष्पपरागपुञ्जैः ।
मध्यप्रदेशः सुदृशां स्मरस्य लीलागतिप्राङ्गणतां जगाम ॥ ४७ ॥

---

१ भ्रूसंजया प्र. । २ कदर्थयत्वमिवा- प्र. । ३ -भारात्स्वय- प्र. । ४ खिन्नेन ब. ।

प्रवर्तमानासु नृपाङ्गनासु तत्र ग्रहीतुं कुसुमानि तासु ।
कृतो महांस्तन्मधुजीविनीभिः कोलाहलः षट्चरणावलीभिः ॥ ४८ ॥

विधाय काचिन्नयने सपत्न्याः क्रीडाच्छलात्पुष्पपरागपूर्णे ।
पात्रत्वमाप प्रियचुम्बनस्य किमस्ति वैदग्ध्यवतामसाध्यम् ॥ ४९ ॥

मानप्रिया[1] कापि नृपस्य पत्नी स्पृष्टा न पुष्पोच्चयवाञ्छयापि ।
अनेकनारीजनबाहुमूल-नखक्षतावेक्षणतत्पराभूत् ॥ ५० ॥

कस्याश्चिदूर्ध्वं नयनाय शाखामाक्रम्य यामर्पयति स्म देवः ।
सा तन्नितम्बस्य भरेण भग्ना समं मनोभिः प्रतिकामिनीनाम् ॥ ५१ ॥

नृपेण काचिद्विहितावतंसा तृणाय नामन्यत काञ्चिदन्याम् ।
स्त्रीणां हि सौभाग्यमदप्रसूतिः प्रियप्रसादो मदिरासहस्रम् ॥ ५२ ॥

पौष्पे रजस्युच्छलिते समन्तात् समस्तनेत्रप्रतिबन्धहेतौ ।
आश्चर्यमङ्गेषु नृपाङ्गनानाममोघबाणः कुसुमायुधोऽभूत् ॥ ५३ ॥

कृष्टांशुका कापि नरेन्द्रवामा लतानिकुञ्जात्कपिना सकोपम् ।
धूर्ता पलाय्य प्रियमालिलिङ्ग कोपं न चाप प्रतिसुन्दरीभ्यः ॥ ५४ ॥

श्रोणीभरै[2]स्यातितरां गरिम्णा भङ्क्त्वा लतां कापि[3] कुरङ्गकाक्षी ।
नरेश्वरस्योपरि निष्पपात पीडामवापुः प्रतियोषितस्तु ॥ ५५ ॥

बबन्ध धम्मिल्लमधीरदृष्टेः क्ष्मानायकश्चम्पकमालिकाभिः ।
चित्तेषु मन्युः स्थिरतामवाप विपक्षसारङ्गविलोचनानाम् ॥ ५६ ॥

विरेजिरे कुन्तलराजदाराः प्रसूनरेणूत्करवर्णिकाभिः ।
निजेषु दोर्विक्रमनाटकेषु कामेन नीता इव नर्तकीत्वम् ॥ ५७ ॥

---

१ मनप्रिया प्र. । २ श्रोणिभर- प्र. । ३ क्वापि ज. ।

प्रसूनभाराभरणा विरेजुश्चालुक्यभर्तुर्लटभाङ्गनास्ताः ।
प्राचुर्यतः पुष्पशिलीमुखानां कृतास्त्रवर्षा इव मन्मथेन ॥ ५८ ॥

पृष्ठानुलग्नाः क्षितिपाङ्गनानां न्यवेदयन्षट्चरणाः क्वणन्तः ।
पुष्पापहारोत्थमिवापराधं शृङ्गारिणीगोत्रगुरोः स्मरस्य ॥ ५९ ॥

विलासिनीनां कुसुमोत्थरेणु-करम्बितस्वेदजलप्लुतानाम् ।
स्मरोष्मणा हेममयं शरीरं किञ्चिद्द्रवीभूतमिवाबभासे ॥ ६० ॥

काचित्क्षिपन्ती मधुपं विशन्तमितस्ततः पाणिसरोरुहेण ।
बाल्ये कृतं कन्दुकताडनेषु श्रमं मृगाक्षी बहु मन्यते स्म ॥ ६१ ॥

क्षिप्तो मुखात्षट्चरणस्तरुण्या विवेश हस्ताम्बुजकोशमस्याः ।
तस्माद्विधूतो मुखमाजगाम लज्जा कुतः स्वार्थपरायणानाम् ॥ ६२ ॥

आहूयमाना इव हंसनादैर्विकृष्यमाणा इव कौतुकेन ।
जग्मुस्ततः क्लान्तिनिवारणाय[1] लीलासरस्तीरमरालनेत्राः ॥ ६३ ॥

जानासि भारं कुचनिर्मितं चेत् किं लाघवं मध्यकृतं न वेत्सि ।
इतीव तासां चरणाम्बुजानि मञ्जीरनादैरवदन्धरित्रीम् ॥ ६४ ॥

न राजकान्ताभिरदृश्यतोर्वी स्तनद्वयेनाधिकमुन्नतेन ।
हंसास्तुलाकोटिनिनादकृष्टाः पुण्यैः पदन्यासपदं न जाताः ॥ ६५ ॥

प्रारेभिरे वीजनमंशुकान्तैर्वनस्थले तज्जघनस्थलानि ।
पादेषु पीडाकरमङ्गनानां पथः श्लथीकर्तुमिवार्कतापम् ॥ ६६ ॥

शश्वद्विलासव्यजनानुकारि-कर्णावतंसार्पितपल्लवानाम् ।
न स्वेदवारि क्षितिपाङ्गनानां गण्डस्थलीषु स्थितिमाससाद ॥ ६७ ॥

---

१ –निर्वाहणाय ब.।

मुखाग्रचुम्बीनि नितम्बिनीनां तासां विरेजुः कुचमण्डलानि ।
श्रमाम्बुशान्त्यै हिमशीतलानां श्वासानिलानामिव सेवनाय ॥ ६८ ॥

हंसाः खमुड्डीय गताश्चुलुक्य-भूपालकान्तागतिचौर्यभाजः ।
तदादिपुंसः श्रयितुं भयेन विमानहंसानिव पद्मयोनेः ॥ ६९ ॥

क्रीडासरस्तामरसावतंसमुद्वेलहेलाञ्चितपादचारः ।
विवेश ताभिः सह भूमिपालः करेणुभिः सार्धमिव द्विपेन्द्रः ॥ ७० ॥

दत्तं सरोभ्यः फलमम्बुजानां सङ्गेन कान्तामुखतस्कराणाम् ।
एषामकृष्यन्त नृपाङ्गनाभिर्विलोचनानीव यदुत्पलानि ॥ ७१ ॥

विपर्ययस्तत्र बभूव कान्ता-बिम्बौष्ठरागाञ्जनपुञ्ज[1]सङ्गात् ।
रक्ताम्बुजत्वं दधुरुत्पलानि पद्मानि नीलोत्पलतामवापुः ॥ ७२ ॥

विलासयुद्धेन नितम्बिनीनां सर्वाण्यभज्यन्त सरोरुहाणि ।
प्रागेव पृथ्वीतिलके निषण्णा लक्ष्मीश्चिराद्बुद्धिमती बभूव ॥ ७३ ॥

विधाय भूपालपुरन्ध्रिपाद-प्रक्षालनं वीचिकरैः सरस्या[2] ।
समुच्छलच्छीकरविभ्रमेण तदङ्घ्रिपानीयमवन्द्यतेव ॥ ७४ ॥

किमप्यवज्ञातसरोरुहेभ्यः सरस्तदासां पदपल्लवेभ्यः ।
परीक्षणायेव निसर्गकान्तेरलक्तकं वीचिभिराचकर्ष ॥ ७५ ॥

सरःप्रवेशे नृपसुन्दरीणां पादेषु संरब्धशिलीमुखेषु ।
प्रागेव भिन्नः श्रमवारिलेशैरलक्तकः पादतलं मुमोच ॥ ७६ ॥

पद्मप्रभाहारिहिमैकधाम्नस्तुषारशैलादिदमाजगाम ।
चिक्षेप साक्षेपमितीव तासां पद्माकरः कुङ्कुमसङ्गकेभ्यः ॥ ७७ ॥

१ -रागाञ्जपुञ्ज- प्र. । २ सरस्यः ज. ।

मग्ना गभीरे पयसि प्रमादात् प्रविश्य देवेन विकृष्यमाणा ।
ससंभ्रमाभिः प्रतिकामिनीभिर्विलोकिता काचिदसूयिता च ॥ ७८ ॥

आकृष्य लक्ष्मीं ध्रुवमुद्रसत्वं पद्मान्यनीयन्त मुखैस्तदीयैः ।
धूलीभृतानां वसतित्वमापुर्यदध्वगानामिव षट्पदानाम् ॥ ७९ ॥

स्फुरत्प्रभाणां नृपवल्लभानां तासां पुरस्तात्सरसीरुहेषु ।
शृङ्गप्रपामण्डपसंनिभेषु रेजे प्रपापालिकयेव लक्ष्म्या ॥ ८० ॥

सरः प्रविष्टेषु नितम्बिनीनां नितम्बबिम्बेषु शिलाघनेषु ।
तदीयलावण्यरसप्रवाह-सङ्गादिवोत्तुङ्गतरङ्गमासीत् ॥ ८१ ॥

चालुक्यविद्याधरसुन्दरीणां दृष्टासु वक्त्रेन्दुपरम्परासु ।
निद्रादरिद्रेष्वपि पङ्कजेषु संकोचभीत्या विविशुर्न भृङ्गाः ॥ ८२ ॥

लक्ष्म्याः क्षमापालपुरन्ध्रिवर्ग-निसर्गसौन्दर्यतिरस्कृतायाः ।
श्वासैरिव प्रेङ्खितमुल्ललास परागचक्रं कमलोदरेभ्यः ॥ ८३ ॥

स्तनद्वये निर्जितकुम्भिकुम्भे नृपावकीर्णा करयन्त्रधारा ।
चारुभ्रुवः पञ्चशरप्रमुक्त-निशातनाराचतुलामधत्त ॥ ८४ ॥

पानीयधारा नरनाथमुक्ता वामभ्रुवो वक्रितकन्धरायाः ।
चूर्णं गताः कुण्डलरत्नकोटौ तत्रैव मुक्ताफलकान्तिमापुः ॥ ८५ ॥

नरेन्द्रलीलाकरयन्त्रवारि लुलोठ देव्याः कुचकुम्भपीठे ।
आश्चर्यमस्याः प्रतिवल्लभानामुत्पल्लवा मन्युलता बभूव ॥ ८६ ॥

इत्युत्सवं भूतिलकोऽनुभूय लीलावगाहग्रहमुत्ससर्ज ।
निसर्गरम्येऽपि विचेष्टिते यदतिप्रसङ्गो रसभङ्गहेतुः ॥ ८७ ॥

अनञ्जनश्यामललोचनानामकुङ्कुमालेपनपिञ्जराणाम् ।
स्नानावसाने तलिनोदरीणामकृत्रिमं[1] मण्डनमाविरासीत् ॥ ८८ ॥

सरः सनाथानि दधत्पयांसि पयोधरालेपनचन्दनेन ।
तत्तत्क्षणाद्बालमृगेक्षणानां दध्रे[2] वियोगादिव पाण्डिमानम् ॥ ८९ ॥

अथांशुकानां परिवर्तनेन तासां वपुर्मण्डनकर्मणा च ।
निश्चित्य पञ्चेषुरकुण्ठभावं देवे पुनः कार्मुकमाचकर्ष ॥ ९० ॥

शोभन्ते स्म विलासकुन्तललताः पुष्पैरिवाम्भःकणै-
र्जाता मज्जनशीतलौ[3] कुचतटी कन्दर्पधारागृहम्[4] ।
आसीत्किञ्च नराधिपप्रणयिनीवर्गस्य[5] नैसर्गिक-
च्छायाखण्डनमण्डनव्यपगमाद्गात्रेषु चित्रा लिपिः ॥ ९१ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-[6]
काश्मीरकभट्टश्रीबिल्हणविरचिते दशमः सर्गः ॥ १० ॥



---

१ नलिनोद- रा. । २ दधे रा. । ३ मज्जशीतला प्र. । ४ -धारगृहम् प्र. । ५ नराधिप्र- प्र. । ६ -श्रीत्रिभुवन- ज. ।

# एकादशः सर्गः

स्नानशेषघुसृणारुणभासां[1] स्पर्शनादिव नरेन्द्रवधूनाम् ।
प्राप रश्मिपटली दिनभर्तुः पाटलत्वमथ संघटमाना ॥ १ ॥

कण्टकैरिव विदारितपादः पद्मिनीपरिचितैरपराद्रेः ।
आरुरोह सरसीरुहबन्धुः स्कन्धमम्बुधितटीगमनार्य[2] ॥ २ ॥

मज्जतः पयसि पश्चिमसिन्धोः स्निग्धमम्बरतलं परिरभ्य ।
भास्वतस्तुषवियुक्तमसूर-क्षोदपाटलमलक्ष्यत धाम ॥ ३ ॥

प्रार्थनार्थमिव रत्नरुचीनां भानुरब्धिमगमद्गतकान्तिः ।
सत्त्वमुन्नतपदात्पतितानां विद्यते न महतामपि नूनम् ॥ ४ ॥

चञ्चुसंपुटगृहीतमृणाल-ग्रन्थि[3]सूत्रनिवहेन रथाङ्गः ।
विप्रयोगभयतो दयितायाः कण्ठपाशमिव कर्तुमियेष ॥ ५ ॥

क्रन्दति स्म न विवेद मृणालीं चञ्चुसंपुटगतां लुठति स्म ।
वल्लभाविरहहालहलेन व्याकुलः किमकरोन्न रथाङ्गः ॥ ६ ॥

दीर्घपादपशिखासु गिरीणां मस्तकेषु शिखरेषु गृहाणाम् ।
दग्धकालवशतः शतखण्डं धाम चण्डकिरणस्य बभूव ॥ ७ ॥

वासवस्तुरगरत्नममुष्मात् प्राप दास्यति ममापि कदाचित् ।
आशयेति जलराशिमयासीद् भानुरश्वपरिवर्तधियेव ॥ ८ ॥

भानुमानपरदिग्वनितायाश्चुम्बति स्म मुखमुद्गतरागः ।
पद्मिनी किमु करोतु वराकी मीलिताम्बुरुहनेत्रपुटाभूत् ॥ ९ ॥

---

१ –रुणमासां रा. । २ –तटागमनाय ब. । ३ –मृणालीग्रन्थि– रा. ।

वाजिनां गगनलङ्घनखेदच्छेदनाय मदिरामिव दातुम् ।
कामुकः कमलिनीवनितानां वारुणीप्रभवमब्धिमयासीत् ॥ १० ॥

सेवते स्म जलधौ प्रतिबिम्बं बिम्बपाटलमशीतमरीचेः ।
शेषकेलिशयनस्थितलक्ष्मी-वल्लभाभरणकौस्तुभलीलाम् ॥ ११ ॥

वाजिनामविशतां जलराशौ वारिवारणभयाद्दिनभर्ता ।
दातुमीक्षणपुटेष्विव मुद्रां द्राङ्गिजातपर्पटं[1] विचकर्ष ॥ १२ ॥

भास्वति त्रिभुवनाङ्गणदीपे वेधसा प्रशमिते मरुतेव ।
धूमराजिरिव तत्प्रशमोत्था ध्वान्तसंततिरलक्ष्यत नीला ॥ १३ ॥

रत्नराजिनिकरप्रकरेण प्राप्यमाण इव दीपकशङ्काम् ।
अम्बरादथ पपात पतङ्गस्तैलपात्रसदृशे जलराशौ ॥ १४ ॥

भानुवाहनखुरप्रहतानां वारिराशितटशुक्तिपुटानाम्[2] ।
मौक्तिकैरिव कियद्भिरपि द्यौस्तारकैस्तिलकिता विरराज ॥ १५ ॥

पद्मकोटरकुटीरकबन्ध-त्रासविद्रुतमधुव्रतनीलम् ।
ध्वान्तमङ्कुशविहीनमभाङ्क्षीद्[3] व्योमसीमनि गतिं नयनानाम् ॥ १६ ॥

नीलरत्नघटितेव समन्तात् पीडितेव निबिडाञ्जन[4]पुञ्जैः ।
प्लावितेव जल[5]राशितरङ्गैर्ध्वान्तराजिभिरभूद्भुवनश्रीः ॥ १७ ॥

चूर्णकुन्तलसटापरिपाट्या विप्रकीर्णमिव भालतलेषु ।
केशबन्धविभवैर्लटभानां पिण्डतामिव जगाम तमिस्रम्[6] ॥ १८ ॥

---

१ द्रागिजातप- ज., ब. । २ -शुक्तिपटानाम् प्र. । ३ -ममाङ्क्षीद् रा. ।
४ निबडाञ्जन- ज. । ५ प्लाविते जल- प्र. । ६ तमिश्रम् ज. ।

सर्वनिह्नवविधौ कृतबुद्धेर्लोचनानि विफलानि विधाय ।
स्पर्शनेन्द्रियममुद्रितशक्ति प्रातिकूल्यमकरोत्तिमिरस्य ॥ १९ ॥

कस्य न प्रतिहतं बत चक्षुर्ध्वान्तसंततिभिरुड्डमराभिः ।
केवलं मनसिजप्रहितानां नावधूतमभिसारवधूनाम् ॥ २० ॥

पांसुतल्पसुरतप्रवणानां विश्वलोचनपुटप्रतिबन्धे ।
कुत्र कुत्र न तिरस्करिणीत्वं ध्वान्तमण्डलमगाच्चपलानाम् ॥ २१ ॥

पश्चिमाचलविटङ्कनिपाते विद्रुता इव रुचस्तपनस्य ।
दीप्रदीपकिरणाः सृणिभङ्गीमारभन्त तिमिरद्विरदस्य ॥ २२ ॥

सूत्रिताभिसरणाः प्रणयिन्यः कान्तसंगममविघ्नमवापुः ।
फूत्कृतैः पथि निवारितदीपाश्चापलं जयति पञ्चशरस्य ॥ २३ ॥

रासभेन सहिता रजकस्त्री-रूपधारि विरचय्य शरीरम् ।
कापि वञ्चितवती जनबाधां कं विडम्बयति नो कुसुमेषुः ॥ २४ ॥

कापि मुख्यपदवीमधिरोप्य स्वां सखीं स्वकरधारितदीपा ।
प्राणनाथरतिगेहमयासीदद्भुतो रतिपतेरुपदेशः ॥ २५ ॥

दिग्वधूरथ पुरन्दरसेव्या पाकपाण्डुशरकाण्डविडम्बि ।
बिभ्रती मुखमवोचत गर्भे रोहिणीप्रणयिनः परिणामम् ॥ २६ ॥

प्रौढकेतकपरागविपाण्डु-ज्योतिरत्र समये भ्रमति स्म ।
नाकनायकनिकेतचकोरी-पीतशेषमटवीमुदयाद्रेः ॥ २७ ॥

पूर्वदिङ्मुखमशोभत किञ्चिन्निर्गतेन शिखरादुदयाद्रेः ।
चारुचन्दनविलेपनपाण्डु भ्रूपताकमिव शीतकरेण ॥ २८ ॥

---

१ पांशु- ज. । २ शृणि- ज. । ३ प्रौढाकतवा- प्र. ।

पाटलेन महसा[1] पटलेन प्राच्यशैलभुवि बालमृगाङ्कः ।
धातुशृङ्गपृथुलस्थले[2]धूली-केलिधूसरशरीर इवासीत् ॥ २९ ॥

पाटलांशुरगमत्सवितेति श्वेतभानुरपि तादृगुपागात् ।
वञ्चनार्थमिव पङ्करुहिण्यास्तां पुनश्छलयितुं न शशाक ॥ ३० ॥

तर्जितं तिमिरमिन्दुमयूखैः[3] शैलदुर्गगहनानि विवेश ।
मानिनीजनमनांसि बभूवुश्चित्रमञ्जनमषीमलिनानि ॥ ३१ ॥

तत्क्षणाद्विषमशैलनिकुञ्ज-प्रान्तपुञ्जित[4]मरच्यत सर्वम् ।
ध्वान्तचक्रमभितः प्रसरद्भिर्दुर्गशेषमिव चन्द्रमयूखैः ॥ ३२ ॥

नीलतालफलपङ्क्तिसनाथा प्राच्यशैलवनभूमिरराजत् ।
निम्नया शशिकरैरुपगूढा ध्वान्तमस्तक[5]परम्परयेव ॥ ३३ ॥

पारणोद्यतचकोरपुरन्ध्रि-क्षिप्तलोचनरुचामिव पुञ्जैः ।
पाटलं पटलमिन्दु[6]रुचीनां रक्तकम्बलविडम्बि बभूव[7] ॥ ३४ ॥

क्षाल्यमान इव मानवतीनां दृग्भिरश्रुजलनिर्झरिणीभिः[8] ।
त्यक्तवानुदयरागमशेषं पूर्वदिक्तिलकबिन्दुरिवेन्दुः ॥ ३५ ॥

वल्लभेन जगतां निजधाम्ना जातगर्व इव रात्रिभुजङ्गः ।
पादविन्यसननर्मविधायी निर्ममे कुमुदिनीं गतनिद्राम् ॥ ३६ ॥

रूप्यदर्पणतलप्रतिमल्ले लाञ्छनं तुहिनदीधितिबिम्बे ।
शोभते स्म गगनप्रतिबिम्बच्छायमद्रिशिखरस्थितिभाजि ॥ ३७ ॥

---

१ पादलेव मनसां प्र.; पाटलेन तमसां ब.। २ -पृथुस्थल- प्र.। ३ -मिंदुमयूषैः ज.; मिन्दुमषूवैः प्र.। ४ -पुञ्जिम- प्र.। ५ ध्वान्तमातक- रा.। ६ पटसलीन्दु- प्र.। ७ -विडंबैर्बभूव प्र.। ८ -निर्झरणीभिः ज.।

द्रावितस्फटिकशैलविटङ्क-स्फारनिर्झरपरंपरयेव ।
पूरिता शशिरुचा भुवनश्रीर्मानपङ्कमनुदत्प्रमदानाम् ॥ ३८ ॥

मांसलत्वमतिमात्रमवाप्ते पिण्डदुग्धसदृशे निजधाम्नि ।
आचकर्ष हिमदीधितिरुच्चैर्मिश्रणार्थमिव वार्धिजलानि ॥ ३९ ॥

दत्तदिक्कटविपाटनशङ्कः शीतरश्मिकिरणामृतपूरः ।
मन्थशैलविशरारुशरीर-क्षीरनीरधिविलासमवाप ॥ ४० ॥

केतकद्युतिनिभं भुवनान्तस्तन्महः प्रकृतिशीतलमिन्दोः ।
कस्य नो वपुषि चन्दनलेपः कान्तितश्च गुणतश्च बभूव ॥ ४१ ॥

क्षिप्यतां क्वचन चन्दनपाण्डुश्चन्द्रिकारसभरः कलशीभिः[1] ।
ऊचुरित्थमबलाः प्रियहीनाः पादयोरपि निपत्य सखीनाम् ॥ ४२ ॥

कापि शीघ्रमवधीरितमाना मानिनी प्रचलिता प्रियधाम्नि ।
आगतेन मरुतापि पुरस्ताल्लाघवस्य परिहारममंस्त ॥ ४३ ॥

इत्थमाप्तवति मन्मथबन्धौ तारकापरिवृढे जरठत्वम् ।
आदिदेश नृपतिः कृतभूषाः पानकेलिविधये[2] हरिणाक्षीः ॥ ४४ ॥

अद्भुतास्त्रखुरली कुसुमेषोर्विभ्रमद्विरदबन्धनभूमिः ।
कुन्तलक्षितिपतिप्रमदानां पानकेलिरभसोऽथ जजृम्भे ॥ ४५ ॥

आलवालवलयस्थितिभाजां बन्धवैः[3] सरसरागलतानाम् ।
हेमपात्रनिवहप्रणयिन्यः पाटलाः शुशुभिरे मधुधाराः ॥ ४६ ॥

रत्नकेलिचषकेषु निविष्टं सीधु नव्यमसमायुधबन्धुः ।
राजदारपरिचुम्बनकेलि-त्रासजातमिव कम्पमुवाह ॥ ४७ ॥

---

१ कलसीभिः ज. । २ -केलिनिधये रा. । ३ बान्धवः रा. ।

विश्वसंवननचूर्णसमानैः कामिनीकुलगुरोर्मदनस्य ।
सख्यमाप घनसारपरागैः सीधु कुन्तलपतिप्रमदानाम् ॥ ४८ ॥

यामिनीप्रियतमप्रतिबिम्बं[1] पूरितेषु मधुना विशदेन ।
लक्ष्यते स्म चषकेषु निविष्टं स्फाटिकोपलपिधानमिवान्तः ॥ ४९ ॥

पुष्पसौरभवशेन विलोलाः पङ्क्तयः शुशुभिरे भ्रमराणाम् ।
सीधुहेमकलशीषु[2] विनिर्यद्-धूपधूमलतिकाकमनीयाः[3] ॥ ५० ॥

सप्रणाममिव पाणिगतेभ्यः संमुखं विलुठिता चषकेभ्यः ।
आससाद मदिरा मदिराक्षी-पाटलाधरदलप्रणयित्वम् ॥ ५१ ॥

आननेषु मदिरा प्रविशन्ती दन्तकान्तिनिकरैः कृतसङ्गा ।
कामकीर्तिमिव कन्दलयन्ती दृश्यते स्म नृपतिप्रमदानाम् ॥ ५२ ॥

प्रान्तपाटलकपोलतलानि प्रस्खलद्भणितिविभ्रमभाञ्जि ।
पार्थिवस्य मदनास्त्रमभूवन् नीलनीरजदृशां वदनानि ॥ ५३ ॥

मन्मथः प्रविशति स्म सुरायां सा कुरङ्गकदृशां वदनेषु ।
तानि चेतसि महीतिलकस्य क्ष्मापतेस्तदपि रागपयोधौ ॥ ५४ ॥

चन्द्र किं पतसि मे मधुभाण्डे वीक्षसे न किमु कुन्तलनाथम् ।
एष ते विरचयिष्यति कान्तां रोहिणीमलकपल्लवहीनाम् ॥ ५५ ॥

नास्मि रे कुमुदिनी मधुपात्रे संमुखैः[4] किमिति तिष्ठसि चन्द्र ।
रोहिणीनयनकज्जलजातः किं त्रपां दिशति ते न कलङ्कः ॥ ५६ ॥

---

१ -प्रतिबंबं ज. । २ -कलसीषु ज. । ३ -कमनीय प्र. ।
४ संमुखं रा. ।

त्वां निपीय मधुपात्रनिषण्णं[1] वारुणीरसभरेण सहैव ।
यामिनीरमण मानवतीनां संहरामि कुलकण्टकमद्य ॥ ५७ ॥

अस्ति दोषयुगलं द्विजराज त्वं यदि स्पृशसि मे मधुपारीम् ।
अत्र नैष सहते तव राजा रोहिणी रुषमुपैति च तत्र ॥ ५८ ॥

यामिनीदयित कामपि कान्तां दुर्लभामभिलषन्ध्रुवमेषि ।
तानवं किमपि तन्तुसमानं मानहीन विदितः परमार्थः ॥ ५९ ॥

क्षिप्यसे यदयमम्बरसीम्नः क्षारवारिधिजले हरिणाङ्क ।
चापलस्य फलमेतदवश्यं कोऽन्यथा त्वयि हिमत्विषि खेदः ॥ ६० ॥

लम्पटं युवतिषु ध्रुवमिन्दो त्वां विदन्ति[2] तरलं निजदाराः ।
रे यदत्र चषकेऽपि निविष्टं तारकाः प्रतिमयानुसरन्ति ॥ ६१ ॥

कौमुदीरमण कापि दुराशां नूनमर्पितवती भवतोऽत्र ।
यद्विलङ्घ्य गगनं प्रतिरात्रि त्वं प्रयासि ककुभं वरुणस्य ॥ ६२ ॥

निर्मलं प्रियतमं हृदये मे किं करोषि कलुषं रजनीश ।
मुञ्च रत्नचषके मदिरां मे किं न वेत्सि निजमङ्ककलङ्कम् ॥ ६३ ॥

वायुनापि गमितस्तरलत्वं यत्प्रदीप[3]नमनोन्नमनानि ।
दर्शनोत्सुकतयेव विधत्से तद्वितीर्णसमयोऽसि कयापि ॥ ६४ ॥

किं गतेन बहुवल्लभभावं वञ्चिता प्रियतमेन वराकी ।
द्यौरियं वसति नित्यममीलत्-तारकेव रजनीं यदशेषाम् ॥ ६५ ॥

गण्डयोररुणिमा दृशि भावः कोऽपि च भ्रुकुटिविभ्रमहेतुः ।
सुभ्रुवां दयितसान्त्वनवर्जं मानकार्यकरणाय मदोऽभूत् ॥ ६६ ॥

---

१ –निषिण्णं ज. । २ वदन्ति रा. । ३ यत्रदीप– रा. ।

इत्युदञ्चितविलासरसानामर्धकुड्मलितनेत्रयुगानाम् ।
जल्पितानि सरसानि स शृण्वन् सुभ्रुवां कमपि संमदमाप ॥ ६७ ॥

पानकेलिमनुभाव्य विभूतिं प्रेक्ष्य पक्ष्मलदृशां च मदोत्थाम् ।
तल्पसद्मनि जगाम स सार्धं कुन्तलेन्दुरथ चन्दलदेव्या ॥ ६८ ॥

आयुषे भवति यत्कुसुमेषोर्येन यौवनतरुः फलदायी ।
किं च रागजलधेरमृतं यत् तत्र तन्नृपतिराचरति स्म ॥ ६९ ॥

केलिधाम्नि न तयोः परिमातुं शक्यते स्म मुखविभ्रमलक्ष्मीः ।
प्रीतिराविरभवत्तु समाना कामकार्मुकतुलातुलितेव ॥ ७० ॥

तौ परस्परविलोकनलीला-सान्द्रकौतुकरसौ परिचिन्त्य ।
मुद्रितेक्षणपुटौ न मुहूर्तं निद्रयापि सकुतूहलयेव ॥ ७१ ॥

ज्ञातुमद्भुतविलासनिधाने प्रेम्णि साम्यमिव जातगरिम्णि ।
केलिधामनि तयोः शतवारं क्षिप्तवान्मनसि मानमनङ्गः ॥ ७२ ॥

अत्रान्तरे सरसजृम्भितभिन्नषड्ज[1]-
भाषाविशेषपरिपोषितचित्रभङ्गि ।
पीयूषपेशलसुभाषितभाषिणीभिः
प्रत्यूषमङ्गलमगीयत मागधीभिः ॥ ७३ ॥

इयं व्रजति यामिनी त्यज नरेन्द्र निद्रारसं
दरिद्रति वियद्द्रुमे कुसुमकान्तयस्तारकाः ।
अयं च कुसुमायुधप्रियसुहृत्क्षणैः पञ्चषै-
र्भविष्यति पयोनिधेः पुलिनराजहंसः शशी ॥ ७४ ॥

---

१ –भिन्नखड्ज– अ. ।

वागुन्मीलति भिन्नषड्जललिता[1] लीलाशुकानामपि
क्रोडे दन्तकरण्ड[2]पाण्डुरतनोर्मम्रा[3] विधोश्चन्द्रिका ।
पूर्वाशामुखमण्डनत्वमचिराच्चण्डांशुरायास्यति
द्रागुन्मुद्रय देवि पङ्कजदलच्छायाञ्चले[4] लोचने ॥ ७५ ॥

ये वाल्लभ्यमनङ्गलेखलिखने याताः कुरङ्गीदृशां
ये वह्निप्रतिमल्लभल्लपदवीं पञ्चेषुणा लङ्घिताः ।
जाताः कान्तिविपर्ययादनवधेर्दीपाङ्कुरास्तेऽधुना
धूलीधूसरताम्रचूड[5]तरुणीचूडावदापाण्डुराः ॥ ७६ ॥

यः सैन्ये स्मरपार्थिवस्य विरहिप्रत्यर्थिनामग्रणी-
र्ज्योत्स्नानिर्झरमुज्झति स्म जगतां यस्तापनिर्वापणम् ।
सोऽयं तारकनायकः किमपरं शृङ्गारसंजीवनं
जातः पृष्ठपराग[6]पाण्डुरजरत्कूष्माण्डपिण्डाकृतिः ॥ ७७ ॥

खण्डः क्षपासु कियतीष्वपि यः कृशाङ्गि
भङ्गीमनङ्गपरशोः सदृशीं बिभर्ति ।
सोऽयं निमज्जति जगन्नयनाभिरामः
श्यामावधूवदनचन्दनबिन्दुरिन्दुः ॥ ७८ ॥

सपदि परिजनस्त्रीविस्तृतोद्गाढलज्जा-
क्रमनमितमुखीभिः खिद्यते खण्डिताभिः[7] ।

---

१ भिन्नखड्ज- ज. । २ दन्तकरण्ड- प्र. । ३ -तवोर्भम्रा रा. । ४ -च्छायाञ्चने ब. । ५ -ताम्रचूड- ज.; -ताम्रचूडा- प्र. । ६ पृष्ठ-पराग- रा. । ७ काङ्क्षिताभिः प्र. ।

घनमसृणविभूषाखण्डनोच्चण्डगण्ड-
स्थलविलुलितबाष्पोत्पीडमेणेक्षणाभिः ॥ ७९ ॥

ये मानद्विरदाङ्कुशाः कुशलिनः कण्ठेषु ये रागिणां
सोत्प्रासेन विलासपाशपदवीं पञ्चेषुणा लम्भिताः ।
पादास्ते घटमानकोकमिथुनक्रीडारहःसाक्षिणः
क्षोणीकान्त मृणालतन्तुतलिनास्ताम्यन्ति तारापतेः ॥ ८० ॥

स्फुरति निरुपमोऽर्थस्तन्वते पाकमुद्रा-
परिचयमकवीनामप्यकाण्डे वचांसि ।
सुकवितिलक वेला कापि सारस्वतीयं
क्षणमवहितचित्तः काव्यचिन्तां विधेहि ॥ ८१ ॥

केलिप्राङ्गणकुट्टिमेषु न पुनः क्रीडन्ति पृथ्वीभृतां
यद्गण्डस्थलदानदुर्दिनपयःपङ्केषु मग्नाः श्रियः ।
उन्मीलत्क्रमशृङ्खलाकलकलप्रेङ्खोलखेलैः पदै-
रुत्तिष्ठन्ति परागपुञ्जशयनात्त्वत्कुञ्जराग्रेसराः ॥ ८२ ॥

ये कुण्ठीकृतवल्लभप्रणतयः शस्त्रैरनङ्गस्य ये
न प्राप्ताश्च निशीथिनीपतिकरैः शैथिल्यवीथीमपि ।
ते निःशङ्कविटङ्कताल्तुमुलप्रोतप्लुतप्लाविते-
श्छिन्नाः कुक्कुटकूजितैर्मृगदृशां मानग्रहग्रन्थयः ॥ ८३ ॥

क्षिपति तिमिरभारं भैरवः कैरवाणा-
मुदयशिखरिलीलाशेखरोऽयं खरांशुः ।

---

१ –तुम्बिता– रा. ।

अपि चकितचकोरीपीतशेषेण धाम्ना
भवति विधुरकाण्डे तण्डुलक्षोदपाण्डुः ॥ ८४ ॥

सम्यङ्मन्मथ[1]शासने स्थितवतामुत्साहदानोद्यताः
सान्द्रं मानवतीजनस्य मनसि व्यापारयन्तो भयम्[2] ।
कन्दर्पेण कृताकृतेक्षणविधौ यूनां नियुक्ता इव
भ्राम्यन्ति स्फुटिताब्जसौरभमुषः प्रत्यूषवेलानिलाः ॥ ८५ ॥

रेजे व्योमनि लङ्घितोभयतटा व्योमस्रवन्तीव या
या शैलेन्द्रशिलातलेष्वलभत श्रीखण्डपङ्कोपमाम् ।
देवस्यान्ध्रपुरन्ध्रिनेत्रवसतेर्लोकत्रयीकामुक-
क्रीडाकार्मणयोगचूर्णसदृशी निद्राति सा चन्द्रिका ॥ ८६ ॥

निक्षिप्य गण्डफलकेष्विव खण्डिताना-
मात्मद्युतिं दधति पाण्डुरतां प्रदीपाः ।
शुष्यन्ति चन्द्रमणयश्च मनस्विनीना-
मार्द्रत्वमीक्षणपुटेष्विव संनिवेश्य[3] ॥ ८७ ॥

त्यक्ताः शक्रमतङ्गजेन कथमप्याधोरणाद्बिभ्यता
संक्षोभादरुणेन वन्यकरिणां व्योमाङ्गणे पुञ्जिताः ।
किञ्चिद्गर्जदरण्यमत्तमहिषव्याकीर्णकर्णज्वराः[4]
पूर्वक्ष्माधरमुत्सृजन्ति तुरगाः कृच्छ्रेण तिग्मद्युतेः ॥८८॥

क्षिप्त्वा गुहासु तिमिरं विहितव्यलीकाः
पादान्वहन्ति गिरयस्तरणेः शिरोभिः ।

---

१ सम्यग्मन्मथ– ज. । २ भवम् प्र. । ३ विनिवेश्य प्र. । ४ –व्याकीर्णज्वराः प्र. ; व्याकीर्णमानज्वराः ब. ।

तन्मस्तकेषु च किमप्यभयप्रदान-
हेतोरिवार्पितकरः प्रतिभाति भानुः ॥ ८९ ॥

बाणाः श्वेतमयूखशाणकषणक्षुण्णाः क्षणात्कुण्ठतां
यातास्त्यक्तनयासु यासु निहिताः पञ्चापि पञ्चेषुणा ।
उत्तंसोत्पलपल्लवेऽपि पतिते दैवात्पुरः पादयोः
कण्ठाश्लेषकठोरकौतुकरसास्तिष्ठन्ति ताः कामिनाम् ॥ ९० ॥

नित्यं व्योम्नि गतागतैर्दिनपतेर्लोकस्य येषु ध्रुवं
भानुस्यन्दनविप्रकीर्णतुरगश्रान्तिः परिम्लायति ।
निद्राच्छेदमुदाहरन्ति हरयस्ते मन्दुरामन्दिरा
लक्ष्मीमङ्गलदुन्दुभिप्रतिभटैः प्रत्यूषहेषारवैः ॥ ९१ ॥

रक्षःसंक्षयहेतुगोत्रजननाद्बन्धं विधाता च यः
पाथोधेः श्वशुरत्वमेति यमुनाताप्योः प्रसूत्या च यः ।
जातः सोऽयमशेषविश्ववलभीरत्नप्रदीपाकृतिः
सद्यःसंभवडिम्भलोचनसुखग्राह्येण धाम्ना रविः ॥ ९२ ॥

उत्थाय मन्युवशतश्चलितुं प्रवृत्ताः
कर्णं गते झटिति कुक्कुटकण्ठनादे ।
किञ्चित्क्षुतादिनिभमात्रमुदीर्य नार्यः
प्राणेशकेलिशयनेषु पुनः पतन्ति ॥ ९३ ॥

यः श्रीकण्ठललाटलोचनशिखिप्लुष्टस्य चेतोभुवः
श्रीखण्डद्रवपाण्डुरेण महसा धारागृहत्वं गतः ।

---

१ भानुष्यन्द- रा. । २ श्वशुरत्व- ब. ।

अस्तक्ष्माधरमस्तके स भगवानालक्ष्यते चन्द्रमाः
क्षौद्रासङ्गपिशङ्गमाहिषदधिच्छत्रावदातच्छविः ॥ ९४ ॥

नरपतिभिरलङ्घ्यशासनोऽसौ शिरसि मनोभवशासनं दधानः ।
वचनमिति निशम्य मागधीनां भुजमुपधानपदाच्चकर्ष देव्याः ॥ ९५ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते एकादशः सर्गः[1] ॥ ११ ॥



1 'महाकाव्ये भट्टश्रीबिल्हणकृते एकादशमः सर्गः' इति ज. ।

# द्वादशः सर्गः

दिनानि तत्र क्षणवद्बहूनि नीत्वा विलासैः कुसुमास्त्रमित्रैः ।
ग्रीष्मप्रवेशे सह पक्ष्मलाक्ष्या देवोऽथ कल्याणसमीपगोऽभूत् ॥ १ ॥

अस्मिन्क्षणे कुन्तलपार्थिवस्य प्रवेशमाकर्ण्य पुराङ्गनानाम् ।
आसन्विलासव्रतदीक्षितानां स्मरोपदिष्टानि विचेष्टितानि ॥ २ ॥

विस्रस्तरत्नाङ्कुरकोटिभिन्नमुदञ्चितं वामपदं दधाना ।
बभार कापि व्रतमेकपादमाराधनायेव[1] नरेश्वरस्य ॥ ३ ॥

कीर्णाश्रु कर्णोत्पलरेणुनैकमन्यत्सहासं नयनं वहन्ती ।
संकीर्णभावाभिनयप्रगल्भा रराज कापि स्मरनर्तकीव ॥ ४ ॥

गवाक्षरन्ध्रैरवलोकयन्ती लक्ष्मीकृता कापि मनोभवेन ।
किमप्यनङ्गस्य नितान्तचण्ड-कोदण्डपाण्डित्यमुदाजहार ॥ ५ ॥

वराङ्गना कुङ्कुमपाटलाङ्गी सलीलमुत्तम्भितबाहुवल्लिः ।
रागप्रवाहे गहने निमग्ना काचित्करालम्बमयाचतेव ॥ ६ ॥

वीराग्रणीरेष नृपः स्थितोऽग्रे शूरोऽसि चेदत्र विधेहि शौर्यम् ।
त्रपास्पदं[2] स्त्रीषु विकत्थनेति काचिद्गिरा मन्मथमुन्ममाथ ॥ ७ ॥

नरेन्द्रलीलातपवारणस्य नेत्राञ्चलोत्थेन समीरणेन ।
निवार्यमाणश्रमवारिलेशा कृतार्थमात्मानममन्यतान्या ॥ ८ ॥

स्तम्बेरमारूढमगूढभावा निरीक्ष्य कापि क्षितिपं मृगाक्षी ।
मन्ये समानप्रतिपत्तिहेतोः कन्दर्पमत्तद्विपमारुरोह ॥ ९ ॥

---

१ -माराधयेव प्र. । २ भयास्पदं रा. ।

निरादरं वीक्ष्य नृपं मृगाक्ष्या लीलानमत्कन्धरया कयापि ।
हृदि स्थितः कार्मुककर्षणार्थमयाच्यतेव प्रसभं मनोभूः ॥ १० ॥

वाचालकाञ्चीमणिकिङ्किणीकमुच्चैःक्वणत्कङ्कणमुच्चलन्ती ।
आलोकिता कापि नरेश्वरेण वैदग्ध्यगर्वोद्धुरकन्धराभूत् ॥ ११ ॥

ताडीदलेन श्रवणान्निपत्य श्वासानिलैरुल्लसतातिदूरम् ।
अदत्त वैदग्ध्यविवादहेतोर्वराङ्गनानामिव पत्रमेका ॥ १२ ॥

गतेषु मन्दत्वमयं रुषा मे बद्धो नितम्बः सुतरां विधाता ।
इतीव काञ्चीवलयं विमुच्य त्वरावती कापि पुरः प्रतस्थे ॥ १३ ॥

काचिन्नितम्बार्पितवामहस्ता दोर्लेखया कुञ्चितया नताङ्गी ।
क्षमापतौ मार्गणमोक्षदक्षमकल्पयच्चापमिव[1] स्मरस्य ॥ १४ ॥

औत्सुक्यतः कापि जवाद्व्रजन्ती लीलामरालैरनुगम्यमाना ।
अन्यायभीत्येव नृपं विलोक्य विलासिनी हंसगतिं मुमोच ॥ १५ ॥

पार्श्वस्थितामालपति क्षितीन्दौ देवीमनङ्गोत्सववैजयन्तीम् ।
व्यावर्तितः कोपनया कयापि सस्पर्धमर्धप्रहितः कटाक्षः ॥ १६ ॥

नृपान्तिकप्राप्तिकृतोपकारे मार्गेऽवकीर्णैः पदयावकाङ्कैः ।
प्रतिक्षणं कापि मृगायताक्षी पूजामिवाम्भोजदलैश्चकार ॥ १७ ॥

लीलावलत्कण्ठमकुण्ठभावा निरीक्षिता कापि नरेश्वरेण ।
मुमोह[2] पुष्पायुधभिल्लभल्ल[3]-भिन्ना कुरङ्गीव कुरङ्गकाक्षी ॥ १८ ॥

सविभ्रमभ्रूलतिकानुवेलमुद्वेललावण्यरसोत्तरङ्गा ।
अनङ्गमारूढमपाङ्गरङ्गे वराङ्गना नर्तयति स्म काचित् ॥ १९ ॥

---

१ –ल्पयच्चाप– रा. । २ मुमोह प्र. । ३ –भल्लि– प्र. ।

जृम्भासमास्फोटकराङ्गुलीकमखर्वदोर्वेणिकया कयाचित् ।
निरीक्ष्य राजानमजातरागमतर्ज्यतेवातिरुषा मनोभूः ॥ २० ॥

शोणाश्मवातायनसीम्नि कापि स्थिता शरच्चन्द्रमरीचिगौरी ।
आत्मानमिद्धार्चिषि कामवह्नौ क्षीराहुतीभूतमिवाचचक्षे ॥ २१ ॥

अभ्यागते कुन्तलभूमिपाले विधातुमातिथ्यमिवोत्थितेन ।
काचिन्नियुक्ता मकरध्वजेन दीर्घां कटाक्षस्रजमाततान ॥ २२ ॥

प्रयासि हारत्रुटिमप्युपेक्ष्य भ्रष्टोत्तरीयापि न तिष्ठसि त्वम् ।
ध्रुवं प्रधावस्यवधीरणेन परिच्युतस्याधरवाससोऽपि ॥ २३ ॥

न दूषणं भूषणवर्जिता यज्जवेन राजाभिमुखी गतासि ।
चित्रं तु तुङ्गस्तनभारगर्वाद् गृहीतमप्युज्झसि कञ्चुकं तत् ॥ २४ ॥

युग्मम्[1] ।

मार्गे समेऽपि स्खलनच्छलेन किमुच्छलत्कण्ठरवं[2] मुखं ते ।
मुग्धे कुमार्योऽपि कलाभिरत्र जयन्ति कान्तामपि मन्मथस्य ॥ २५ ॥

असंशयं नीलसरोरुहाक्षि समारुरोह त्वयि पञ्चबाणः ।
द्रुतैर्विनिर्यासि पदैर्यदेषा कशाहतेवोत्तरला तुरङ्गी ॥ २६ ॥

अस्माकमालोकनविघ्नहेतोस्तरङ्गिताङ्गी पुरतः स्थितासि ।
किं तुङ्गवातायनसंगतानां करोषि मात्सर्यपरा परासाम् ॥ २७ ॥

प्रकाशयन्ती कतिचिन्नखाङ्कान् किं चण्डि चण्डत्वमदं बिभर्षि ।
कासामिहानङ्गजयास्त्रमित्रैर्न गात्रमुच्चित्रितमर्धचन्द्रैः ॥ २८ ॥

---

१ ब. पुस्तके नास्ति । २ –त्कटरवं शा. ।

वैदग्ध्यगर्वस्तव सर्वदास्ति कथञ्चिदाराधय राजचन्द्रम् ।
नामाङ्कितामर्पय वर्णमालां सुवर्णपत्रे मकरध्वजस्य ॥ २९ ॥

ससंभ्रमभ्रूयुगताण्डवानां विलासकोदण्डपुरस्कृतानि ।
सानन्दमित्थं पुरसुन्दरीणां नृपेन्दुना शुश्रुविरे वचांसि ॥ ३० ॥

श्वश्रूं[1] मुहुः श्रोत्रकठोरवाचं निरीक्ष्य पृष्ठे विनिवारयन्तीम् ।
अनङ्कुशत्वात्कृतपुण्यमेका पण्याङ्गनात्वं गणयांबभूव ॥ ३१ ॥

काचित्पदैरस्खलितैः सखेलं यान्तीषु[2] शुद्धान्तकरेणुकासु ।
राजाङ्गनानामकरोदवज्ञां श्रोणीभरे च स्तनगौरवे च[3] ॥ ३२ ॥

दृशां भृशं कामवशीकृतानां कस्याश्चिदालोकनकौतुकिन्याः ।
कर्णावतंसे च निजाञ्चले च गतागतं योजनमात्रमासीत् ॥ ३३ ॥

उल्लङ्घ्य वीथीमथ राजहंसः पुराङ्गनालोकनवागुराणाम् ।
विवेश हर्म्याङ्गण[4]केलिवापी-हंसावतंसां निजराजधानीम् ॥ ३४ ॥

प्रसाददानेन दृशार्द्रया च स तत्र संतोष्य समस्तलोकान् ।
अन्वग्रहीदद्भुतयौवनोष्मा ग्रीष्मानुरूपामुपभोगलक्ष्मीम् ॥ ३५ ॥

लावण्यलीलातरुकुड्मलाभ-मुक्ताविभूषः शुशुभे नरेन्द्रः ।
त्रैलोक्यनेत्रामृतनिर्झरस्य सशीकरासार[5] इव प्रवाहः ॥ ३६ ॥

मुक्तावदातश्रमवारिलेश-विशोभिलावण्यरसप्रवाहः ।
सावर्ण्यमर्णोनिधिना बभार स ताम्रपर्णीप्रणयीकृतेन ॥ ३७ ॥

---

१ स्वश्रूं ज. । २ यातीषु ब. । ३ श्रोणीभरेवस्यनगौरवेव प्र.; श्रोणीभरेवस्थितगौरवेव ब. । ४ हर्म्यं गण प्र. । ५ ससीकरासार ज. ।

श्रीखण्डपाण्डुस्तनमण्डलाभिरालिङ्गितोऽसौ मुहुरङ्गनाभिः ।
न केवलं ग्रीष्ममहोष्मसङ्गमनङ्गतीव्रातपमप्यजैषीत् ॥ ३८ ॥

स चन्दनालेपनशीतलेन गात्रेण चित्रं नरनाथचन्द्रः ।
प्रविश्य चित्तेषु मृगेक्षणानामनङ्गतापज्वरमाततान ॥ ३९ ॥

अङ्गान्यलक्ष्यन्त विलेपनेन नृपप्रकाण्डस्य विपाण्डुराणि ।
समुच्छलन्त्या प्रणयीकृतानि लावण्यरत्नाकरवेलयेव ॥ ४० ॥

अंसद्वये[1] भूवलयावतंसः श्रीखण्डलीलातिलके बभार ।
जयामृतास्वादनतत्परायाः साम्राज्यलक्ष्म्या इव रूप्यपात्रे ॥ ४१ ॥

विभज्य दोर्भ्यां दधतो धरित्रीं तस्यांसयोश्चन्दनचित्रकाभ्याम् ।
ईषत्तुषारस्फटिकाचलेन्द्र-शृङ्गद्वयीव प्रकटीबभूव ॥ ४२ ॥

अंसद्वयेन श्रियमाससाद स चन्दनस्थासकसुन्दरेण ।
दोर्मन्दरालोडितसङ्गराब्धि-पीयूषपिण्डद्वयपाण्डुनेव ॥ ४३ ॥

नृपेन्दुना चन्दनचारुलेखा ललाटपट्टे लिखिता दधार ।
वक्त्रारविन्दस्थितसूक्तिदेवी-देवार्चनस्फाटिकलिङ्गभङ्गीम् ॥ ४४ ॥

वपुस्तुषाराचलतुङ्गमस्य व्यराजदालेपनचन्दनेन ।
विश्वप्रविष्टार्कमयूख[2]ताप-शान्त्यर्थमाश्लिष्टमिवेन्दुभासा ॥ ४५ ॥

शृङ्गारपाथोधितरङ्गभङ्गिरनङ्गविद्याधरखड्गलेखा ।
विलासिना संस्क्रियते स्म तेन स्नानावसाने कबरी प्रियायाः ॥ ४६ ॥

वक्षःस्थले कुन्तलपार्थिवस्य श्रीखण्ड[3]भूषातिलकश्चकासे ।
लक्ष्मीतुलाकोटिरवैर्मुखेन्दोः सरस्वतीहंस इवावतीर्णः ॥ ४७ ॥

---

१ 'अंगद्वये' इति सर्वत्र । २ –मयूष– ज. । ३ श्रीषण्ड– ज. ।

शैत्यार्थमस्योद्वहतः कराब्जे चक्राभमम्भोरुहिणीपलाशम् ।
करान्तरे विभ्रमपुण्डरीकं रराज शौरेरिव पाञ्चजन्यः ॥ ४८ ॥

रराज राजीवविलोचनस्य हृदि स्थिता चन्दनपङ्कलेखा ।
मृणालिका वक्त्रगतोक्तिदेवी-विमानहंसाननविच्युतेव ॥ ४९ ॥

प्रदर्शयन्तीव तुषारवर्षं विसारिणा शीकरडम्बरेण ।
समन्ततः स्फाटिककुट्टिमेन हिमं शिलीभूतमिवोद्वहन्ति ॥ ५० ॥

परिस्फुरत्केतकपत्रभङ्ग्या घण्टासहस्रैरिव दन्तुराणि ।
अदृश्यसूर्याणि घनोपमानां नीरन्ध्रबन्धात्कदलीदलानाम् ॥ ५१ ॥

गवाक्षजालान्तरनिर्यदच्छ-नीरन्ध्रधारानिकरच्छलेन ।
निदाघसंरोधविसूत्रणाय व्यापारयन्तीव पृषत्कपङ्क्तिम् ॥ ५२ ॥

अत्यन्तशैत्यादिव सङ्कुचद्भिरस्पृष्टपूर्वाणि करैः खरांशोः ।
दुर्गाणि घर्मेऽपि हिमर्तुजीव-रक्षाक्षमाणीव कृतानि धात्रा ॥ ५३ ॥

धारागृहाणि क्रममार्जनेन स्मरस्य चापश्रममादिशन्ति ।
मृगेक्षणाभिः सममध्युवास मध्यन्दिने मध्यमलोकपालः ॥ ५४ ॥

कुलकम्[3] ।

चोलान्तकश्चन्दनपाण्डुरेषु नितम्बिनीनां स्तनमण्डलेषु ।
साम्राज्यमानम्रजगत्त्रयस्य मेने मनोजन्मनराधिपस्य ॥ ५५ ॥

हिमाद्रिशृङ्गाधिकशीतलेषु वराङ्गनातुङ्गकुचस्थलेषु ।
घोरं निराकर्तुमसौ निदाघं विलेपनापाण्डुषु पण्डितोऽभूत् ॥ ५६ ॥

---

१ शैत्यर्थम- प्र. । २ -स्फुरत्केतकेतक- प्र. । ३ ब. पुस्तके नास्ति ।

स्त्रीणामनालेपनशीतमङ्गं विपाटलः पाटलया समीरः ।
स्मरस्य वीरव्रतरक्षणाय तस्मिन्बभूव स्मितमल्लिका च ॥ ५७ ॥

प्रतारिताः कान्तिजलैर्वधूनां निपत्य यत्पाथसि दुग्धमुग्धे ।
न क्षीरनीरप्रविभागहेतोरन्यत्र हंसाः पुनरुत्सहन्ते ॥ ५८ ॥

रणद्द्विरेफेषु सरोरुहेषु यत्रोपविष्टाः प्रतिभान्ति हंसाः ।
समर्प्य लीलागमनं गृहीत-मञ्जीरनादा इव सुन्दरीभ्यः ॥ ५९ ॥

यत्पङ्कजैः स्नानविनोदभाजां जाने नरेन्द्रप्रमदाजनानाम् ।
मुखेन्दुबिम्बैरविरोधहेतोः समर्पिता पादतलेषु लक्ष्मीः ॥ ६० ॥

श्रोणीतटोल्लासितरङ्गदोला-विलासवाचालितसारसासु ।
स तासु[1] रेमे सह कामिनीभिर्दीर्घासु लीलावनदीर्घिकासु ॥ ६१ ॥

चक्कलकम्[2] ।

विश्रान्तकान्ताकरयन्त्रधारं सरोजिनीपत्रममुष्य हस्ते ।
शोभां बभार स्मरकङ्कपत्र-मैत्रीजुषः श्यामलखेटकस्य ॥ ६२ ॥

मीनाङ्कमीनस्य नरेन्द्रचन्द्र-शरीरलावण्यजले स्थितस्य ।
असूत्रयद्बाडिशसूत्रशङ्कां दीर्घा मृगाक्षीकरयन्त्रधारा ॥ ६३ ॥

स राजहंसः करयन्त्रमुक्त-धारालतापञ्जरमध्यवर्ती ।
उपायनीभूत इवाङ्गनाभिः क्षिप्तः करे मन्मथपार्थिवस्य ॥ ६४ ॥

तमेकवीरं करयन्त्रवारां धाराशतैर्व्याकुलितं वधूभिः ।
निःशङ्कमारोपितचापदण्डः शिक्षाशरव्यं मदनश्चकार ॥ ६५ ॥

---

१ समासु प्र. । २ ब. पुस्तके नास्ति ।

स्तनाङ्गरागे लटभाङ्गनानां नरेन्द्रधाराम्बुहृते[1] मनोभूः ।
रागं हृदि प्रच्युतिशङ्कयेव माञ्जिष्ठरागप्रतिमं ततान ॥ ६६ ॥

देवः कराम्भोरुहयन्त्रधारां क्षिपन्कपोले विपुलेक्षणायाः ।
कुमुद्वतीकामिनि रश्मिदण्डं प्रवेशयन्नर्क इव व्यराजत् ॥ ६७ ॥

आनम्य लीलापरिवर्तनेन विलङ्घयामास नरेन्द्रमुक्ताम् ।
कण्ठोन्मुखीं काचन[2] कम्बुकण्ठी स्मरासिधारामिव वारिधाराम् ॥ ६८ ॥

चकार कान्ताकुचपत्रभङ्ग- कस्तूरिकापङ्ककलङ्कितानि ।
वर्षाजलभ्रान्तिविलोलहंस-हासानि लीलासरसीपयांसि ॥ ६९ ॥

नृपावरोधस्तनकुङ्कुमेन वापीपयः पाटलतामवाप्तम् ।
क्रीडानिमग्नस्मरकुम्भिकुम्भ- सिन्दूरसंभिन्नमिवाबभासे ॥ ७० ॥

रराज कर्पूररजस्तरङ्ग-संसङ्गि[3] लीलाङ्गणदीर्घिकाणाम् ।
गौरीपतिक्रोधहुताशशान्त्यै मग्नस्य भस्मेव मनोभवस्य ॥ ७१ ॥

अवाप कृष्णागुरुधूपधूम-त्यक्तार्द्रभावेषु कचोच्चयेषु ।
आश्चर्यमिन्दीवरलोचनानां नितान्तमार्द्रत्वमयुग्मबाणः ॥ ७२ ॥

असंनिधानात्कुसुमाकरस्य पुष्पायुधः क्षीर्ण[4]निषङ्गभारः ।
वामभ्रुवां सस्मितमल्लिकेषु धम्मिल्लबन्धेषु धृतिं बबन्ध ॥ ७३ ॥

नेत्राणि धात्रीतिलकाङ्गनानां तरङ्गलेखाहृतकज्जलानि ।
शाणोपलान्दोलननिष्कलङ्क- कामास्त्रमैत्रीं कलयांबभूवुः ॥ ७४ ॥

---

१ –धाराम्बुद्रुते ब. । २ काञ्चन– ब. । ३ –ससङ्ग– रा. । ४ –युध
क्षीण– प्र. ।

लीलावगाहच्युतकुङ्कुमेषु लक्ष्यस्तदङ्गेषु नखाङ्कमार्गः ।
शृङ्गाररत्नाकरतीरभाजां मुद्रां दधे विद्रुमपल्लवानाम् ॥ ७५ ॥

व्यधित तदनु देव्याः पत्रवल्लीं कपोले
विपुलपुलकलेखादन्तुरः कुन्तलेन्दुः[1] ।
प्रतियुवतिभिरर्धे ताडितः पाण्डुगण्ड-
स्थलै[2]र्विलुठितबाष्पव्यक्तिलक्ष्यैः कटाक्षैः ॥ ७६ ॥

रचयति कचलीलाबन्धमुत्कन्धरायाः
स्वयमवनिमृगाङ्के कौतुकेन प्रियायाः ।
स्थितमुपचितचिन्तातापताम्यत्कपोल-
ग्लपितकरसरोजस्रस्तराभिः पराभिः ॥ ७७ ॥

मधुसमयविरामक्षामवीर्यस्य शौर्यं
बहुभिरिति चरित्रैः सूत्रयन्पुष्पकेतोः ।
शिशिरमिव वमद्भिः प्रेयसीगात्रसङ्गै-
रपि जरठमजैषीद्ग्रीष्मगर्वं नरेन्द्रः ॥ ७८ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचिते द्वादशः सर्गः[3] ॥ १२ ॥



---

१ –दन्तुर कुन्तलेन्दुः ज. । २ –गल्लस्थल– ब. । ३ –बिल्हणकृतौ द्वादशमः सर्गः ज. ।

# त्रयोदशः सर्गः

प्रतापमारोप्य परां समुन्नतिं यशः प्रदर्श्येव च दावभस्मभिः ।
भजन्निदाघः[1] कृतकृत्यतामिव स्वपौरुषाविष्करणान्न्यवर्तत ॥ १ ॥

विधाय तैक्ष्ण्यं गणितान्यहानि स प्रतापहानेः प्रणयित्वमाययौ ।
परोपतापैकपरायणाश्चिरं क्व वा भवन्त्यभ्युदयस्य[2] भूमयः ॥ २ ॥

दवानलप्लुष्टवनान्तभस्मभिः क्षमाधराः[3] पाण्डुरुचश्चकासिरे ।
गता इवाङ्कस्थितबालवृक्षक[4]-क्षयोत्थवैराग्यवशात्तपस्विताम्[5] ॥ ३ ॥

निदाघसंपादितकार्श्यसंपदां[6] तरङ्गिणीनां गलिता नितम्बतः ।
कलप्रलापाः कलहंसपङ्क्तयश्चकासिरे विभ्रममेखला इव ॥ ४ ॥

रवेः समस्तक्षितिमध्यगं रसं निपीय पीनत्वमतीव बिभ्रतः ।
भरेण वाजिष्विव मन्दगामिषु क्रमेण दैर्घ्यं दिवसाः प्रपेदिरे ॥ ५ ॥

न गन्तुमन्याः पदमप्यपारयन् नितान्तदीर्घं तनिमानमागताः ।
हिमाद्रिजाताभिरलम्भि केवलं नदीभिरब्धेः परिरम्भणोत्सवः ॥ ६ ॥

तुषारशैलद्रवनिर्झरोदकं समाहरन्नुत्तरभूमिनिम्नगाः ।
हिमोपचारार्थमनेकवाहिनी-वियोगतप्तस्य सरित्पतेरिव ॥ ७ ॥

प्रबुद्धकार्श्याः परितापसंकुचत्-सपङ्कपङ्केरुहिणीदलाङ्किताः ।
दशामलब्धाब्धिसमागमाश्चिरं वियोगयोग्यामभजन्त निम्नगाः ॥ ८ ॥

---

१ जगन्निदाघः ब. । २ भवन्त्युदयस्य प्र. । ३ क्षमाधरा प्र. । ४ इवाङ्के स्थित- ब. । ५ -तपस्विनाम् प्र. । ६ -संपदा ब. ।

दृशं प्रपापालिकया प्रकाशिते न्यवेशयत्कुम्भधिया कुचद्वये ।
विवेद पान्थः कलशात्परिच्युतां न वारिधारां मुखसङ्गिनीमपि ॥ ९ ॥

पपुः प्रपापालिकया समर्पितं चिरेण पान्थाः कथमप्यनादरात् ।
तदीयबिम्बाधरपानलम्पटाः सपाटलामोदमपि प्रपाजलम् ॥ १० ॥

निरन्तराघट्टितपाटलाधराः क्रमान्निदाघस्य घनोष्मसङ्गिनः ।
व्यरंसिषुः श्वाससमी[1]रणा इव प्रबुद्धदावानलबन्धवोऽनिलाः ॥ ११ ॥

गतायुषि ग्रीष्ममहोष्मडम्बरे दिनेऽपि चञ्चत्पुलकैर्विलासिभिः[2] ।
कुचस्थलीचन्दनलेपपङ्किल-प्रियाङ्कपालीसुखमन्वभूयत ॥ १२ ॥

परस्परश्वाससमीरघट्टन-त्रुटत्कपोलस्थलघर्मबिन्दुभिः ।
अपि प्रदोषावसरे विलासिभिः करम्बितान्योन्यभुजैरसुप्यत ॥ १३ ॥

अपङ्कजस्रस्तर[3]मस्तचन्दनं विलाससंमर्दममन्दमाश्रिताः ।
शनैर्निदाघस्य घनामदर्शयन् प्रतापहानिं हरिणायतेक्षणाः ॥ १४ ॥

अपश्यदस्मिन्समये महीपतिः पयोदखण्डं मिलितार्कमण्डलम् ।
सकुण्डलं वारिमुचामनेहसः कुतोऽपि मूर्धानमिवार्धनिर्गतम् ॥ १५ ॥

निदाघनिःशेषिततोयसम्पदः समुद्धृतं वारिदिदृक्षया सुरैः ।
नभःस्रवन्त्या इव पङ्कमङ्कतः क्षमापतिर्बालपयोदमैक्षत ॥ १६ ॥

शनैरवाप्तोपचयं पयोमुचं विलोक्य कौतूहललोललोचनाम् ।
अथाङ्कपर्यङ्ककृतास्पदां प्रियामवोचत क्ष्मातलमीनलाञ्छनः ॥ १७ ॥

नभस्तलारण्यतमालमालिका महीभृतां मूर्धसु मूर्धजावलिः ।
तडित्प्रदीपाञ्जनपुञ्जसंनिभा विभाव्यतां सुभ्रु नवाभ्रमण्डली ॥ १८ ॥

---

१ श्वाससमी- ब. । २ -त्पुटकैर्विलासिभिः रा. । ३ अपङ्कजं स्रस्तर- ब. ।

घनोपरोधाच्चरलाक्षि लक्ष्यते मलीमसं मण्डलमुष्णदीधितेः ।
क्षणप्रभादीपसमुत्थकज्जल-ग्रहोत्कवर्षार्पितकर्परोपमम् ॥ १९ ॥

मृगाक्षि पश्य प्रसभं नभश्चरी-विलासकृष्णागुरुधूपमण्डलैः ।
करम्बितः षट्पदमेचकैरिव प्रयाति सद्यः प्रचुरत्वमम्बुदः ॥ २० ॥

अनेन नूनं जलधेः समुद्धृतं विचित्ररत्नाङ्कुरदन्तुरं पयः ।
अनेकवर्णाञ्चितमन्यथा कथं पयोमुचा निर्मितमिन्द्रकार्मुकम् ॥ २१ ॥

ध्रुवं दिवि ग्रासगृहीतपन्नग-स्फुरत्फणारत्नमयूखकन्दलैः ।
घनोन्मुखानां शिखिनां मुखोद्गतैरकारि शातक्रतवं शरासनम् ॥ २२ ॥

नितम्बबिम्बेषु वसुन्धराभृतां घनाः स्फुरन्नीलदुकूलविभ्रमाः ।
निपत्य वीथीषु किरातवेश्मनां[1] हताच्छ[2]भल्लप्रतिमल्लतां गताः ॥ २३ ॥

अकृत्रिमाः काण्डपटाः पयोमुचस्तडिद्वधू[3]लास्यरहस्यभङ्गिषु ।
निदाघतप्ते नभसि स्फुरन्त्यमी गलज्जलार्द्रासदृशाः[4] कृशोदरि ॥ २४ ॥

अदभ्रमभ्रोपलपट्टकेषु ये शितीक्रियन्ते[5] मदनेन पत्रिणः ।
तडिल्लता तन्निकषोत्थपावक-स्फुलिङ्गभङ्गीं ललिताङ्गि सेवते ॥ २५ ॥

अमी गृहीत्वेव पयोधिमध्यग-क्ष्माधरक्षेमकथामुपागताः ।
घनाः समारब्धशिखण्डिताण्डवं विमुद्रयन्ति ध्वनिमद्रिसानुषु ॥ २६ ॥

द्विषन्ति राजीवमुखि स्वजीवितं ध्रुवं मयूरास्तव निर्जिताः कचैः ।
भवन्ति यद्वासवचापसंमुखाः शिलीमुखप्राप्तिसमुत्सुका इव ॥ २७ ॥

---

१ -वेश्मना प्र. । २ हताच्छ- ब. । ३ -स्तडीवधू- प्र. । ४ -जलार्द्राः सदशाः ब. । ५ शितीकृयन्ते प्र. ।

जिगीषवः प्रावृषि मुक्तकार्मुकाः प्रगल्भते शक्रधनुः क्व कर्मणि ।
अवैमि संप्रत्यविलङ्घ्यशासनं शरासनं मान्मथमेव मानिनि ॥ २८ ॥

अयं निदाघस्य तनोति पाटवं समस्तपृथ्वीरसकर्षणैः परैः[1] ।
उदञ्चदुच्चण्डतडित्करस्त्विषामधीशमित्याक्षिपतीव वारिदः ॥ २९ ॥

निदाघबन्धोस्त्विषमुष्णदीधितेरपि प्रविष्टामिह मण्डलोदरे ।
अवैमि निर्वापयितुं मृगेक्षणे रुणद्धि तारारमणं बलाहकः ॥ ३० ॥

निदाघमाघ्रातजगत्त्रयं क्रुधा विधाय लीलाकवलं बलाहकः ।
इतो बलाकाभिरवस्थितां मुखे तदस्थिमालामिव दर्शयत्ययम् ॥ ३१ ॥

अवाप्य शिक्षां गतिषु त्वदन्तिकाज्जगत्त्रयीदुर्लभभूरिभङ्गिषु ।
प्रयान्ति हंसाः सुरहंसमण्डली-गुरुत्वलोभादिव सुभ्रु मानसम् ॥ ३२ ॥

द्रवन्ति हंसाः सुरचापचुम्बिनः पयोदवृ[2]न्दान्निपतत्सु बिन्दुषु ।
प्रवर्तमानां गुलिकाधनु[3]र्मुखाद् विशङ्कमाना इव गोलकावलिम् ॥ ३३ ॥

अपहृताश्चञ्चुपुटैः शिखण्डिनां प्रकाशिताः कोमलकूजिताङ्कुरैः ।
पतन्ति कृच्छ्राद्भुवि पान्थयोषितां कवोष्णनिःश्वासकदर्थिताः कणाः ॥३४॥

ग्रहीतुमेते निजचञ्चुकोटिभिर्झटित्यनभ्यासवशान्न पारिताः ।
क्षितौ लुठन्तः शितिकण्ठशावकैरसूयिताः सुभ्रु नवाभ्रबिन्दवः ॥ ३५ ॥

तृणानि भूभृत्कटकेषु निक्षिपन् न कैः स्फुरद्धीरै[4]मृदङ्गनिस्वनः ।
तडित्प्रदीपैश्चलदङ्कलीलया निदाघमन्विष्यति वारिदागमः ॥ ३६ ॥

---

१ करैः रा. । २ पयोमृ- प्र. । ३ -मानाङ्गुलिकाद्धनु- ब. । ४ स्फुरद्धीर- ब. ।

नमत्ययःश्यामलशष्पमण्डल-स्थितेन्द्रगोपप्रचयासु वारिदः[1] ।
गिरिस्थलीषु च्युतशक्रकार्मुक-भ्रमादिवोद्भ्रान्ततडिद्विलोचनः ॥ ३७ ॥

अमी वियन्नीलसरोजमण्डल-प्रलम्बनालप्रतिमल्लडम्बराः ।
अनङ्गनाराचपरंपरानिभाः पतन्ति धारानिचयाः पयोमुचः ॥ ३८ ॥

अनङ्गशस्त्राणि नताङ्गि तीक्ष्णतां नयत्ययस्कार इवाम्बुदागमः ।
मलीमसाङ्गाररुचां पयोमुचां तथाहि मध्ये ज्वलितस्तडिच्छिखी ॥३९॥

निदाघमित्रेण विसूत्रितं जलं तव प्रियेणाखिलमुष्णरश्मिना ।
क्रुधेति धारालगुडैर्बलाहकस्तडित्ययं ताडयतीव पद्मिनीम् ॥ ४० ॥

कृतक्षणं[2] क्षुद्रनदीसमागमे तरङ्गिणीनाथमवेक्ष्य संप्रति ।
विलङ्घ्य मार्गं सहसा महापगाः पतन्ति नीचेषु नदान्तरेष्वपि ॥ ४१ ॥

इयं नमन्ती[3] नभसः पयोभरादवैमि नीलोत्पलभङ्गिनिर्मला ।
करोति सर्वत्र विलोक्य कर्दमं पयोदमाला पदमद्रिसानुषु ॥ ४२ ॥

ध्रुवं कयाचित्कथया पयोनिधेः स्तनद्भिरभ्रैः सरितः प्रकोपिताः ।
प्रयान्ति सद्यः कलुषाः सरित्पतिं तथा हि कोलाहलमांसलोर्मयः ॥ ४३ ॥

तरङ्गिणीनाथसमागमत्वरा-प्रधाविताः शैलनदीभिरन्तरे ।
निरुध्यमानाः कलहं महारवैर्विमुद्रयन्तीव समुद्रवल्लभाः ॥ ४४ ॥

जलेन भिन्ना कियती वसुन्धरा मदर्पितेनेति परीक्षितुं घनाः ।
महाम्बु[4]धाराभिरधीरलोचने क्षितौ शलाका इव निक्षिपन्त्यमी ॥ ४५ ॥

---

१ नमत्ययं श्याम– रा. । २ क्षतक्षणं ज. । ३ यं नमन्ती प्र. । ४ सहाम्बु– ब. ।

इतस्ततः शीकरमौक्तिकोत्करं नदाः किरन्तः समदाभिरूर्मिभिः[1] ।
प्रतारणायेव समुद्रयोषितां समुद्रवेषेण चरन्ति वर्त्मसु ॥ ४६ ॥

क्षपासु संप्रत्यभिसारिकाजनः स्खलत्पदं कर्दमपिच्छिले पथि ।
करोति कार्तस्वरदण्डशङ्कया तडिल्लतायामवलम्बेनादरम्[2] ॥ ४७ ॥

नताङ्गि लीलाकमलाकरेण ते तरङ्गदण्डैः प्रतिबिम्बितो घनः ।
अशेषपानीयसमृद्धिसंक्षयाद् भजन्निवार्थित्वमनेन ताड्यते ॥ ४८ ॥

गृहीतमासीत्सलिलं बलाहकैः कलान्तरेण ध्रुवमम्भसां निधेः ।
यदेतदीयानि जलानि गृह्णते विधाय कोलाहलमब्धिवल्लभाः ॥ ४९ ॥

समर्पयामास पयांसि निश्चितं कयापि वृद्ध्या जलधिः पयोमुचाम् ।
महागिरिप्रस्थसहस्रशोधितं यदम्बु गृह्णन्ति समुद्रयोषितः ॥ ५० ॥

करोति नीरन्ध्ररसोपबृंहणात् तरङ्गिणीरेष मदङ्गसङ्गिनीः[3] ।
इति ध्रुवं पुष्यति रिक्तमागतं बलाहकं बालमृगाक्षि वारिधिः ॥ ५१ ॥

विलीय नीलस्तडिदूष्मणा घनः कपालरङ्गः किमजायत क्षितेः ।
जराविमुक्तेव मृगाक्षि लक्ष्यते यदुद्गतश्यामलशष्प[4]कुन्तला ॥ ५२ ॥

न वेद्मि कस्मिन्समये तथाविधा तरङ्गिणीभर्तुरकीर्तिरुत्थिता ।
नमो नमः कुम्भभुवे भवेदसौ तदङ्गनानामपि संमुखोऽद्य चेत् ॥५३॥

पयोदवृन्दं गगनस्थलोल्लसत्-तडिल्लतादोहदकर्दमद्युति ।
चकास्ति संक्रान्तकलङ्कमम्भसां नभश्च्युतानामिव गालनां[5]शुकम् ॥५४॥

स्वभावनीलाः कथमत्र लक्ष्यतां प्रयान्ति नीलासु पयोदपङ्क्तिषु ।
इति ध्रुवं संप्रति वाजिनो भयाद् बिभर्ति गाढग्रहमर्कसारथिः ॥ ५५ ॥

---

१ समदाभरूर्मिभिः प्र.। २ -यामलम्ब- प्र.। ३ -संगिणीः ज.।
४ -शस्य- रा.। ५ -मिव गल- प्र.।

क्षणप्रभां नूनमपश्यतः प्रियां तवायमाक्रन्दरवः पदे पदे ।
पयोद यन्नोदयते दयापि ते वियोगिवर्गे तदहो महाद्भुतम् ॥ ५६ ॥

ध्रुवं त्वया संततमङ्कलालिता तडिन्न जानाति परव्यथामियम् ।
अमन्थरं पान्थवधूकदर्थनान्निषेधति त्वां न किमर्थमन्यथा ॥ ५७ ॥

कथञ्चिदायाति यदि प्रियस्तदा न निश्चितं विश्वसिमः पुनस्त्वयि ।
मुहुः स्पृशन्विष्णुपदं नवाम्बुद स्वकार्यतात्पर्यमलं न मुञ्चसि ॥ ५८ ॥

न केवलं ते बहिरेव नीलिमा नितान्तमभ्यन्तरमप्यनिर्मलम् ।
यदध्वगस्त्रीवधपातके घन प्रयासि मन्त्रित्वमयुग्मपत्रिणः ॥ ५९ ॥

अदक्षिणोऽपि प्रियकाङ्क्षिणीष्वहो त्वमेतदेकं विदधासि कौतुकम् ।
वियोगिनिर्मूलनमूलकण्टकं मृगाङ्कबिम्बं कवलीकरोषि यत् ॥ ६० ॥

अखण्डितस्त्वं मकराकरादपि प्रभूतमाकृष्य जलं यदागतः ।
किमुच्यते भाग्यविपर्ययस्य तद् विजृम्भितं पान्थचकोरचक्षुषाम् ॥६१॥

इदं तव क्ष्माधरशृङ्गसङ्गिनो विषापहारौषधिसंगतेः फलम् ।
रुणत्सि मार्गं यदनूरुसारथेस्तुरङ्गवल्गाभुजगैरभक्षितः ॥ ६२ ॥

सुरद्विपस्य ध्रुवमब्धिवार्तया कयापि पाथोद गतोऽसि बन्धुताम् ।
भवन्तमुन्मूलयितुं प्रगल्भते दिवि भ्रमन्तं न यदभ्रमूपतिः ॥ ६३ ॥

अलं प्रलापैस्तुषधूमधूसरो विधूय यन्मृत्युशतानि गर्जसि ।
प्रवासिकान्ताजनपापमूर्जितं तदेति जीमूत तवोपकारिताम् ॥ ६४ ॥

---

१ –दायाति प्रियस्तदा न प्र.; –दायाति प्रियस्तदा वयं न ब.। २ मकरकरा –प्र.।

स्मरज्वरव्याकुलितः कलावति ब्रवीति पाथोधरमुद्धुरध्वनिम् ।
अकुण्ठकण्ठागतबाष्पगद्गदैः पदैरिति प्रोषितवल्लभाजनः ॥ ६५ ॥

मेघोपलम्भं कुलकम्[१] ।

क्षणद्युतिस्ते क्षणमस्तु मान्यथा सदाङ्कपर्यङ्कतले निषीदतु ।
घन त्वदीयध्वनिडिण्डिमं विना पतिं लभन्ते कथमध्वगाङ्गनाः ॥ ६६ ॥

न षोडशीमप्युपयाति ते कलां प्रसिद्धिमात्रं स्मरबान्धवो मधुः ।
शिरस्यकुर्वन्मदनस्य शासनं मुखं त्वदीयं मलिनं सहेत कः[२] ॥ ६७ ॥

समागतप्राणसमा करोति यां[३] न ते सपर्याविधिमध्वगाङ्गना ।
पुनः प्रियोऽस्याः किमतः परेण वा घन त्वमेवाशुकविर्भवोपरि ॥६८॥

वियोगिनां संघटने भवत्समः परोऽस्ति जीमूत न दूतकर्मणि ।
वदन्ति नान्यैः सह याः कुलस्त्रियो ध्रुवं तदर्थं वहसि क्षणप्रभाम् ॥६९॥

विमुक्तवेणीवलयाः पुरन्ध्रयः प्रियाङ्कपालीपरिवासशीतलाः ।
अनङ्गसाम्राज्यविलासमन्त्रिणः प्रभावमम्भोद निवेदयन्ति ते ॥ ७० ॥

स्मरातुराणां विदधासि दुर्दिनं प्रियाभिसाराय कुरङ्गचक्षुषाम् ।
रतोत्सवे काण्डपटत्वमेषि च त्वमग्रणीर्मेघ परोपकारिणाम् ॥ ७१ ॥

विभाववर्गे[४] जलद त्वमग्रणीर्न चन्द्रिकापि द्युतिमेति तावकीम् ।
करोषि किं शुभ्रतया तदीयया न सुन्दरं चन्दनमेणनाभितः ॥ ७२ ॥

करोति चैत्रः सह चन्दनानिलैः किमिन्दुना कोकिलपञ्चमेन च ।
न विद्यते जेतुरनङ्गभूपतेः किमन्यदेकाङ्गभटस्त्वया समः ॥ ७३ ॥

---

१ ब. पुस्तके नास्ति । २ वा ब. । ३ का ब. । ४ विभातवर्गे ब. ।
५ –देकोङ्ग– रा. ।

पयोद यासां भवतोऽपि दर्शनान्न वल्लभः संघटते मृगीदृशाम् ।
न ताः क्रियन्ते गणनासु दुर्भगाः करोति कश्चित्रमजातभित्तिषु ॥७४॥

समागते प्रेयसि चाटुकारितामिति स्मितक्षालितपाटलाधराः[1] ।
भजन्ति काश्चिद्विमलेन चेतसा विलासमीलन्नयनाः पयोमुचः ॥ ७५ ॥

मेघस्तुतिकुलकम्[2] ।

अलब्धरत्नाकरसंगमामृता तथा गता ग्रीष्मदिनेषु तानवम् ।
अदृष्टदुःखेव सखि प्रयासि मे कुतः प्रियालिङ्गनभङ्गहेतुताम् ॥ ७६ ॥

मुहूर्तमामीलितमूर्तिरम्बरे विगाहसे फालविलङ्घनीयताम् ।
सलीलमुत्तीर्य भवन्ति पांसुलाः समुल्लसन्मांसलकान्तकेलयः ॥ ७७ ॥

घटं समारुह्य विघट्टितोर्मयः प्रयान्ति ते पारमवारिताः पराः ।
अपुण्यवत्याः पुनरेष मे गतिं भिनत्ति नावापि नितम्बडम्बरः ॥ ७८ ॥

विधाय कोलाहलमूर्मिभिर्मुधा किमित्यनाकर्णितकेन गच्छसि[3] ।
उपार्जितस्त्रीवधपापसंपदः कथं पयोधिस्तव सङ्गमेष्यति ॥ ७९ ॥

नयस्व पारं पुलिनद्वयानुगां तरङ्गदोलामधिरोप्य मामितः ।
प्रसीद यावन्न निशा विशीर्यते यशांसि ते गायतु पांसुलाजनः ॥ ८० ॥

सहस्रशः कृष्णनिशास्वहं गता पदं तव न्यस्य शिरस्यवारिता ।
समृद्धिगर्वेर्णे[4] किमन्धतां मुधा दधासि नन्वस्ति घनात्ययः पुनः ॥ ८१ ॥

परिस्खलद्वीचिदुकूलपल्लवा बलात्समुद्राभिमुखी प्रधावसि ।
करोषि चान्यासु निषेधमित्यहो स्वयं विमूढासि परासु पण्डिता ॥ ८२ ॥

---

१ -मितस्मित- ज., ब. ; -मितः स्मित- रा. । २ ब. पुस्तके नास्ति ।
३ वक्ष्यसि रा. । ४ समृद्धगर्वेण रा. ।

नितम्बपर्यन्तगलज्जलांशुका समुत्सुका किं कुटिले प्रधावसि ।
कुलापगान्तःपुरवक्त्रचुम्बिनो न लप्स्यसे दास्यमपि त्वमम्बुधेः ॥ ८३ ॥

मया कुमार्यापि न सुप्तमेकया न जारमुत्सृज्य पुमान्विलोकितः ।
अनेन गोत्रस्थितिपालनेन मे प्रसन्नतामेत्य भवोपकारिणी ॥ ८४ ॥

इति स्मरार्तः प्रमदाजनोऽधुना निशासु कान्तानभिसर्तुमुद्यतः ।
न वक्ति कोपात्कतरां तरङ्गिणीमनङ्गशृङ्गारसमुद्रवाहिनि ॥ ८५ ॥

सरिदुपालम्भं कुलकम्[1] ।

अविरलजलधाराधोरणीधौतवस्त्राः
सपदि मदनहस्तन्यस्तहस्तास्तरुण्यः ।
किमपि न गणयन्ति प्राणनाथाङ्कपाली—
रभसपुलकिताङ्ग्यः पङ्किलासु स्थलीषु ॥ ८६ ॥

यः स्पर्धामदधान्मृदङ्गनिनदैः सौदामिनीताण्डवे
यः कोदण्डममर्त्यभर्तुरकरोट्टङ्कारशङ्कास्पदम् ।
मत्तैरावणकण्ठगर्भविलुठद्गम्भीरगर्जाघनः
सोऽयं व्योमनि घूर्णते विरहिणीघाताय मेघध्वनिः ॥ ८७ ॥

विद्युत्पङ्कजखण्ड[2]पङ्कपटली व्योमस्थलीशाद्वलम्
केदारः कलमाङ्कुरप्रतिभुवां धारालतानामयम् ॥
शैवालवल्लिरद्रिमूर्धसरितां सूरेन्दु[3]कारागृहम्
कन्दर्पोत्सववैजयन्ति भवतु प्रीत्यै तवाम्भोधरः ॥ ८८ ॥

---

१ ब. पुस्तके नास्ति । २ -षण्ड- ज. । ३ -सूर्येन्दु- ब. ।

उत्कर्षाधानहेतुर्निखिलशिखिगलक्रोडकूजाङ्कुराणाम्

धारावल्लीवनानां मधुकरपटलश्यामलः पल्लवौघः ।

दीर्घद्वैदूर्यरत्नामलगगनतलादर्शलीलानिचोल-[1]

श्चोलस्त्रीकेशपाशैः सहचरति रतिव्याकुलैः कालमेघः ॥ ८९ ॥

निखिलभुवनलक्ष्मीवल्लभो वल्लभायाः

प्रकृतिसुभगपाकोद्रेकपूतैर्वचोभिः ।

इति शिरसि दधानः शासनं मीनकेतो-

र्जलदसमयशोभां वर्णयामास देवः ॥ ९० ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-

काश्मीरकभट्टश्रीबिल्हणविरचिते त्रयोदशः सर्गः[2] ॥ १३ ॥

---

१ –द्वैडूर्यरत्ना– ब. । २ –बिल्हणकृतौ त्रयोदशमः सर्गः ज. ।

# चतुर्दशः सर्गः

वार्धकं दधति वारिदागमे मूर्धजैरिव घनैर्विपाण्डुरैः ।
विक्रमाङ्कमुपसृत्य निर्जने कश्चिदाप्तपुरुषो व्यजिज्ञपत्[1] ॥ १ ॥

निष्ठुरं किमपि कथ्यते मया तत्र कुन्तलपते कुरु क्षमाम् ।
यत्स्वकार्यमवधीर्य गृह्णते सेवयैव[2] परितोषमीश्वराः ॥ २ ॥

वत्सलत्वमवलम्ब्य केवलं किं विलङ्घयसि नीतिवर्तिनीम् ।
यत्र मन्त्रगतिरेति वामतां तत्र[3] हालहलतो विशिष्यते ॥ ३ ॥

वेङ्गि[4]नाथमवजित्य संयति भ्रातुरभ्युदयशंसिना त्वया ।
प्रेषितस्य वनवासमण्डले वर्तते नयविपर्ययो महान् ॥ ४ ॥

न्यायमार्गमपहाय कुर्वता तेन कोशमविशङ्कचेतसा ।
सर्वतः सकललोकपीडनादुद्विहारहरिणाः[5] कृता भुवः ॥ ५ ॥

भूरिसङ्गरपरिश्रमार्जितां स्वामिनः प्रियतमां वहन्ति ये ।
दन्तपृष्ठवलयीकृतैः करैर्विष्टरप्रणयिनीमिव श्रियम् ॥ ६ ॥

चुम्बितानि मदनिद्रया मुहुर्ये नयन्ति नयनान्यमुद्रताम् ।
लोलकर्णपुटवातशीतलैरुच्छलद्बहलदानशीकरैः ॥ ७ ॥

कान्तदन्तबिस[6]काण्डनिर्गमे दानपङ्कपटले वहन्ति ये ।
बिम्बितं दिवसनाथमण्डलं पुण्डरीकमिव मन्दिरं[7] श्रियः ॥ ८ ॥

---

१ न्यजिज्ञपत् प्र. । २ सेवछैव प्र.; स्वेच्छयैव ब. । ३ तत्र ब. ।
४ चेङ्गि– ज., प्र., रा.; 'वेङ्गि' इति ब. पुस्तकशुद्धिपत्रे । ५ –हरिणः प्र. ।
६ –दंतविश– ज.; –दांतविश– प्र. । ७ –मंडिरं प्र. ।

उल्लिखन्ति दशनैः शिलातलान्युन्मदाः क्षितिधरस्थलीषु ये ।
तेषु तैक्ष्ण्यमिव कर्तुमुद्यताः प्रत्यनीकभटभेदनोद्भटम् ॥ ९ ॥

वत्सलेन भवता समर्पितास्तस्य ते कति न गन्धसिन्धुराः ।
तद्बलात्किमपि चिन्तयत्यसौ यत्कथापि वितनोति पातकम् ॥ १० ॥

अन्तक्रियाकुलकम्[2] ।

सर्वमाटविकचक्रमक्रम-व्यापृतस्तलगतं चकार सः ।
शार्वरेष्विव तमस्सु राक्षसाः पापकारिषु मिलन्ति पापिनः ॥ ११ ॥

द्राविडं स नृपतिं सहायतां प्रापयत्यविरतैरुपायनैः ।
कर्तुमिच्छति न कैरुपक्रमैर्भेदजर्जरमिदं भवद्बलम् ॥ १२ ॥

भूरिभिः किमथवा कथाद्भुतैस्तत्त्वमेतदवधार्यतां नृप ।
कैश्चिदेव दिवसैः स संमुखः कृष्णवेणिनिकटे भविष्यति ॥ १३ ॥

इत्युदीर्य विरते विशारदे तत्र शारदमृगाङ्कनिर्मलः ।
नाभ्यधत्त सहसा किमप्यसौ न त्वरां दधति धीरचेतसः ॥ १४ ॥

किं श्रिया चपलया प्रतार्यसे वत्स मा मतिविपर्ययोऽस्तु ते ।
प्रत्यपादयदिति प्रतिक्षणं स स्वभावविमलाशयो नृपः ॥ १५ ॥

भ्रष्टमग्रजमधर्मतः स्वयं शल्यवन्मनसि धारयाम्यहम् ।
वैशसं महदुपस्थितं परं धिग्मया कथमिदं सहिष्यते ॥ १६ ॥

पर्यतप्यत किमप्यनन्तया चिन्तयेति सुचिरं धरापतिः ।
दैवदुर्विलसितैः कटाक्षितास्तादृशामनुशयाय न[3] क्रुधे ॥ १७ ॥

---

१ अत्र प्र. । २ ब. पुस्तके नास्ति । ३ –स्तादृशमनुशयान प्र. ; –स्तादृशा अनुशयाय न ब. ।

मन्त्रवित्तदनु चारचक्षुषा तत्तथेति बहुधावधार्य सः ।
किं विधेयमिति चिन्तयान्वितः क्ष्मापतिः स्वगतमित्यचिन्तयत् ॥१८॥

कार्यसे कथमकार्यमीदृशं वत्स दुर्नयपताकया श्रिया ।
किं न वेत्सि यदतीत्य वर्तते नारदं[1] कलहकौतुकेन सा ॥ १९ ॥

नार्पितानि कति मण्डलानि ते दन्तिनो मदमुखास्तवाधिकाः ।
राजशब्दमपहाय का तव न्यूनता भजसि दुर्नयं यतः ॥ २० ॥

घोरमापतितमेतदाः कुतः किं करोमि कतरा प्रतिक्रिया ।
हे चुलुक्यकुलदेवताः स्वयं वार्यतामनुचितान्ममानुजः ॥ २१ ॥

एवमादि विनिवेद्य पार्थिवस्तत्र सान्त्वनशतानि सूत्रयन् ।
तं शशाक न निषेद्धुमक्रमाद् भङ्गमेति भवितव्यता कुतः ॥ २२ ॥

प्रापदत्र समये सुधाकर-श्रीप्रसादनविशारदा शरत् ।
नीलनीरदकलङ्कितं क्रमाद् दुग्धधौतमिव कुर्वती जगत् ॥ २३ ॥

वैद्युते शिखिनि पान्थसुन्दरी-तापकारिणि गते परिक्षयम् ।
मानिनीनिवह[2]बाष्पहेतुभिः शान्तमम्बुधरधूमसंचयैः ॥ २४ ॥

शान्तवैद्युतकृशानुजन्मनां भस्मनामिव रजोभिराचिताः[3] ।
पाण्डुराः कतिपये नभस्तले क्वापि सख्यमभजन्त वारिदाः ॥ २५ ॥

इन्द्रनीलरसकूर्चिकाचयैः संप्रमृष्टमिव नीलिमा[4]स्पदम् ।
सिक्तमम्बुदजलैर्नभस्तलं जातशाद्वलमिव व्यराजत ॥ २६ ॥

---

१ नारद प्र. । २ मानिनीमिवह- प्र. । ३ रजोभराचिताः ब. ; रजोभराञ्चिताः रा. । ४ नीलमा- प्र. ।

खेदकारणमवान्तरापगा-संगमं गतमवेत्य वारिधेः ।
संमदा[1]दिव महातरङ्गिणी-चक्रवालमगमत्प्रसन्नताम् ॥ २७ ॥

उत्कटेन तडितामिवोष्मणा संनिरुध्य जलदेन तापितः ।
अंशुभिः खरतरैरदर्शयत् तापमप्यधिकमुष्णदीधितिः ॥ २८ ॥

पक्वशालिवनमध्यतः करैः पाटलैः कलमगोपिका[2]जनः ।
नूतनोद्गतसरोजसंगतानास्त वारयितुमक्षमः शुकान् ॥ २९ ॥

निर्गतैरिव तडित्प्रदीपतः[3] सान्द्रकज्जलरजोभिराचितम् ।
वृत्तकर्परनिभं नभस्तलं नीलिमानमतिमात्रमाययौ ॥ ३० ॥

सार्धमम्बुभिरिवैत्य[4] वारिधेर्मौक्तिकानि लगितानि[5] तोयदात् ।
व्योममण्डलमुडूनि भेजिरे कैरवाधिकरुचीनि रात्रिषु ॥ ३१ ॥

नीलनीरदनिचोलकोज्झिते व्योमदर्पणतले शरद्वधूः ।
चन्द्रमाननमिवावलोकयत् तत्क्षणोन्मिषितकैरवेक्षणा ॥ ३२ ॥

आतपः क्लममदत्त वासरे चन्द्रिका जनमनन्दयन्निशि ।
चक्रतुर्निजगुणप्रकाशनं स्पर्धयेव तपनक्षपाकरौ ॥ ३३ ॥

सान्द्रचन्दनविलेपनादपि क्रान्तिहारिषु गृहाङ्गणस्थितः ।
न[6] प्रदोषसमये मरीचिषु प्राप तृप्तिममृतद्युतेर्जनः ॥ ३४ ॥

पुण्ड्रकेक्षुलतिकाश्चकाशिरे क्षेत्रभूमिषु कृतेक्षणोत्सवाः ।
लम्बिता इव विधोः सुधाभरादंशवः स्फटिकदण्डपाण्डुराः ॥ ३५ ॥

---

१ समदा- प्र. । २ -गोपका- प्र. ; -गोपका- ब. । ३ -दीपितः ज. । ४ -रिवैत्यं ज. । ५ गलितानि ब. । ६ तं रा. ।

शक्रकार्मुकविलोकनाद्ध्रुवं क्रन्दितं भयवशात्[1] कलापिभिः ।
यत्र यद्गतवति क्षणेन ते मौनमानतमुखाः सिषेविरे ॥ ३६ ॥

क्षुण्णमौक्तिकपरागपाण्डुरः शोभते स्म दिवि चन्द्रिकाभरः ।
मेघबन्धनविमुक्तमीक्षितुं क्षीरनीरधिरिवेन्दुमागतः ॥ ३७ ॥

जाड्यमम्भसि निमज्जनाच्चिरं यत्पदं कमलिनीषु निर्ममे ।
तन्निराकरणकारणा[2]दिव व्यातनोदधिकमातपं रविः ॥ ३८ ॥

हंसपङ्क्तिरवधीर्य[3] मानसं क्रौञ्चशैलविवरेण निर्गता ।
भार्गवस्य दृढलक्षभेदतः प्रेक्ष्यते[4] स्म यशसामिवावलिः[5] ॥ ३९ ॥

व्याकुलेषु पतिषु प्रतिक्षणं लब्धवल्लभसमागमोत्सवाः ।
तत्र कुङ्कुमविकासवासरान् पांसुलाः[6] सुखमयानमन्वत ॥ ४० ॥

न त्वमिन्द्रधनुषः शरव्यतां[7] धारयन्नपि कुरङ्गमागतः ।
न द्रुतोऽसि तडिदूष्मणा च यत् तत्तुषारकर कौतुकं महत् ॥ ४१ ॥

मेघकर्दमनिपातपङ्किला क्षालिता कथय केन चन्द्रिका ।
कः कठोरहृदयो वियोगिनां[8] नो बिभेति वधपातकादपि ॥ ४२ ॥

किं प्रमाद्यसि न सर्वदा सुखं कस्यचित्प्रकृतिभङ्गुराः श्रियः ।
राहुरामलकवन्मुखोदरे त्वां दिनैः कतिपयैः करिष्यति ॥ ४३ ॥

सर्वदैव हृदयं मलीमसं न क्षणं स्पृशति ते प्रसन्नताम् ।
तत्खलत्वमखिलोपतापिनः पुष्पकार्मुक[9]नृपस्य वल्लभं[10] ॥ ४४ ॥

---

१ नयवशा- रा. । २ तन्निराकारणा- प्र. । ३ -रवधीय प्र. ४ प्रेक्षते प्र. । ५ -मिवावलिः प्र. । ६ -पांशुलाः ज. । ७ शरण्यतां रा. । ८ वियोगितां रा. । ९ -कार्मक- प्र. । १० 'वल्लभः' इति सर्वत्र ।

इत्यनङ्गशरसङ्गदीपित-प्राणनाथविरहाः क्षपामुखे ।
चन्द्रिकाक्षपित[1]विश्वमालपन् यामिनीदयितमेणलोचनाः ॥ ४५ ॥

कुलकम्[2] ।

इन्दुदीधितिषु शारदीष्वसौ मन्मथस्य करदीपिकास्विव ।
दुश्चरित्रमनुजस्य चिन्तयन् न प्रसादमभजन्नराधिपः ॥ ४६ ॥

तस्य संततमकीर्तिवार्तया मानसे कलुषतां समुद्वहन् ।
न प्रसादितमृगाङ्कयाप्यसौ नीयते स्म शरदा प्रसन्नताम् ॥ ४७ ॥

कुन्तलेन्दुरभवत्कृपावशात् तत्र राज्यमपि दातुमुत्सुकः ।
कः प्रसन्नमनसां यशोर्थिनां श्रीसमर्पणविधौ परिश्रमः ॥ ४८ ॥

प्राहिणोत्कति न सान्त्वनक्रमांस्तत्समीपमनिशं विशां पतिः ।
एकमप्यनयवायुलङ्घितो नाग्रहीष्ट कुलकण्टकस्तु सः ॥ ४९ ॥

वैशसस्य कथमस्य शान्तिरित्येष यावदनुकम्पया स्थितः ।
तावदद्भुतभुजावलेपतः कृष्णवेणितटमाजगाम सः ॥ ५० ॥

भूपमेनमपहाय तच्चमूमाश्रिताः कति न मण्डलेश्वराः ।
जायते मतिविपर्ययो नृणां प्रायशः परिभवे भविष्यति ॥ ५१ ॥

वीक्ष्य स द्विपघटाः कटस्थली-निर्लुठद्बहलदाननिर्झराः[3] ।
वाजिनश्च चटुलानमन्यत ज्येष्ठयोधनविधावकुण्ठताम् ॥ ५२ ॥

तच्चमूपरिकरेण पीडिता कृष्णवेणिरधिगम्य तानवम् ।
सिन्धुपार्श्वमिव गन्तुमक्षमा रोषतः कलुषतामदर्शयत् ॥ ५३ ॥

---

१ -क्षपित- प्र.। २ ब. पुस्तके नास्ति। ३ -निर्जराः प्र.।

क्वापि दाहमपरत्र लुण्ठनं बन्धनं क्वचिददाज्जनस्य सः ।
पातचिह्नमिव तस्य भूयसी दुष्टचेष्टितपरम्पराभवत् ॥ ५४ ॥

तस्य दुर्नयपरम्परामसौ चक्षमे चिरतरं क्षमापतिः ।
तादृशैरमलसत्त्वराशिभिः स्पर्धितुं जलधयोऽपि नेश्वराः ॥ ५५ ॥

दुर्वचांसि सविधे धरापतेः स व्यसर्जयदनङ्कुशोऽनिशम् ।
अश्रिया जडधियः कटाक्षिताः किं तदस्ति न समाचरन्ति यत् ॥५६॥

ब्रूमहे किमधिकं तथा मुहुस्तत्र संस्तवमवाप चापलम् ।
तं प्रति प्रचलति स्म विस्मितः सत्वरं वसुमतीपतिर्यथा ॥ ५७ ॥

पूरितः प्रतिरवेण दिग्गज-श्रोत्रशङ्खकुहरप्रसर्पिणा ।
दुन्दुभिध्वनिरभूदयत्नतस्तस्य[1] मङ्गलनिनादनिर्भरः ॥ ५८ ॥

न क्षितीन्द्रपटहस्वनोऽभवद् दिक्करिश्रवणपाटने पटुः ।
यत्सुदीर्घकररन्ध्रपूरणादल्पतां प्रथममाससाद सः ॥ ५९ ॥

भूपतेः समभरेण दन्तिनां दूरमानमति भूमिमण्डले ।
नूनमम्बुदनिनादमेदुरः प्राप दुन्दुभिरवश्चिरान्नभः ॥ ६० ॥

पन्नगेश्वरफणासु तद्बल-क्षुण्णरेणुतलिनापि सर्वतः ।
आर्द्रतां गजमदाम्बुभिर्गता भूमिरित्यधिकमाप गौरवम् ॥ ६१ ॥

अब्धिषु स्थलपथीकृतेषु नः पूर्यते जवविधौ[2] कुतूहलम् ।
इत्यकुर्वत दिगन्तगोचरं नूनमस्य तुरगाः क्षमारजः ॥ ६२ ॥

पृष्ठनिर्लुठितभूमिरेणवस्तस्य वारणवरा विरेजिरे ।
क्वापि भूमिमवतार्य तत्क्षणादागता इव समेत्य दिग्गजाः ॥ ६३ ॥

---

१ –दयत्तत– प्र. ; –द्यं तत– ब. । २ जलविधौ श. ।

पस्पृशुर्न पृथिवीं तुरङ्गमाः स्पर्धयेव दिननाथवाजिनाम् ।
भोगिभर्तुरभवन्मतङ्गज-स्थान एव नितरां परिश्रमः ॥ ६४ ॥

उन्मदद्विरदहस्तशीकर-श्रेणिभिर्नभसि तस्य दर्शिताः ।
रेणुहारितपथस्य भास्वतश्चूर्णिता इव रथेन तारकाः ॥ ६५ ॥

उन्नतद्विपघटासमीपगः शोभते स्म भगवान्दिवाकरः ।
उन्मदद्विरदसङ्गजां भियं त्याजयन्निजतुरङ्गमानिव ॥ ६६ ॥

रेजिरे करटिपृष्ठसंगताः स्वर्णरत्नमयसारिसंपदः ।
भूमिरेणुभरतो नभस्तलादानता इव विमानपङ्क्तयः ॥ ६७ ॥

भास्वतः करिभयावगाहनाद् वाहनैरिव निपातितोऽरुणः ।
कुम्भिकुम्भतटचीनपिष्टतः प्राप रेणुविसरः क्षमातलम् ॥ ६८ ॥

कोपतः प्रचलितोऽपि भूपतिः सान्त्वनाय हृदि सत्वरोऽभवत् ।
ये श्रयन्त्यकरणं श्रियः कृते तेऽन्य एव कुलपांसना नृपाः ॥ ६९ ॥

अन्तिकीभवति निम्नगातटे तत्र तत्र परिपन्थिनो भटाः ।
एत्य युद्धकरणेन कुन्तल-क्ष्मापतेः क्रुधमदीपयन्पथि ॥ ७० ॥

श्रीचालुक्यधुरन्धरोऽथ रुधिरस्रोतस्विनीगाहन-
क्रीडाकाङ्क्षिणि कुञ्जरे कृतपदस्तं देशमाक्रान्तवान् ।
यत्रानेन करिष्यते प्रतिपथव्यावर्तिताम्भोभर-
भ्राम्यद्वीरकरङ्कसंकटतटा सा कृष्णवेणीसरित् ॥ ७१ ॥

अवनितिलकस्तत्रावासं विधाय सरित्तटे
घटयितुमिमं साम्नैवाभूदुपायपरायणः ।

---

१ -श्रोत- ज. ।

कुटिलहृदयः स त्वेतस्मान्न[1] सान्त्वनमग्रहीद्
भवति हि मतिर्भाग्यभ्रंशे नितान्तमनङ्कुशा ॥ ७२ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्ट[2]श्रीबिल्हणविरचिते चतुर्दशः सर्गः[3] ॥ १४ ॥



१ सङ्केत- ब.। २ 'महाकाव्ये काश्मीरकत्रिभुवनमल्लदेवविद्यापतिभट्ट-' इति ज.। ३ सर्गः समाप्तः ज.।

# पञ्चदशः सर्गः

भुजविक्रमदन्तिडिण्डिमः समरोत्साहशिखण्डिवारिदः ।
अथ कुन्तलभर्तुरध्वनद् विजयोद्योगविलासदुन्दुभिः ॥ १ ॥

विजयोत्सुकवीरसुन्दरी - कृतनिष्कम्पचतुष्कमण्डलाः ।
नरनाथपथावलोकन - प्रगुणत्वं सुभटाः सिषेविरे ॥ २ ॥

रणदुन्दुभिमेघनिस्वनैः सुभटश्रेणिविदूरभूमयः ।
अभवन्निसृतासिवल्लरी - नवरत्नाङ्कुरकोटिदन्तुराः ॥ ३ ॥

रणसंभ्रमलोलभङ्गिषु न्यपतन्नद्भुतरागनिर्भराः ।
कबरीषु कुरङ्गचक्षुषामसिलेखासु च वीरदृष्टयः ॥ ४ ॥

अधिरोपितसारिपञ्जर - स्थितिदर्पोद्धुरयोधमण्डलाः ।
अभजन्त गजाः स्थितिं बहिर्मणिसंनाहनिवेशपेशलाः ॥ ५ ॥

सुभटः प्रमदाकरार्पितां[1] दलयन्नागरखण्डवीटिकाम् ।
रिपुदन्तिघटासु खण्डनं तृणमुत्साहवशादमन्यत ॥ ६ ॥

रिपुराजशिरःसु शेखर - स्थितरत्नाङ्कुरकण्टकालिषु ।
भ्रमणक्षमतां दधुः खुरास्तुरगाणां कृतलोहबन्धनाः ॥ ७ ॥

रणलम्पटमत्तकुञ्जरं स्फुरदश्चीयसहस्रसंकुलम् ।
तदनेकभटोद्भटं बलं क्षुभितस्याप लिपिं पयोनिधेः ॥ ८ ॥

करिणः करशीकरोत्करैः प्रहितैः क्ष्मापतिमन्दिरोदरे ।
सिषिचुः क्षितिपस्य हृद्गतां विजयाशां कुसुमावलीमिव ॥ ९ ॥

---

१ —'करार्पितं' इति सर्वत्र ।

सप्तभिः कुलकमाह[1]—

दृशमम्बुरुहामिव स्रजं विजयश्रीपरिरम्भशंसिने[2]।
स्फुरणप्रवणाय बाहवे बहुमानेन समर्पयन्नृपः ॥ १० ॥

पुलकाङ्कुरकण्टकोत्करानतिरागादविजानतीमिव ।
वपुषा सुभटश्रियं दधन्निबिडालिङ्गनगाढकौतुकाम्[3] ॥ ११ ॥

हसितेन विनिःसरन्मुख - स्थितकर्पूरपरागपाण्डुना[4] ।
घटयन्प्रतिराजपङ्कज - ग्लपनार्थं तुहिनच्छटामिव ॥ १२ ॥

वलयोदररत्नदर्पण - प्रतिबिम्बच्छलतो निजाकृतेः ।
हरिणेव विपक्षसंक्षय - व्रतभाजा[5] भुजयोरधिष्ठितः ॥ १३ ॥

घनचन्दनलेपपाण्डुना वपुषा पोषितलोचनोत्सवः ।
परितः स्फटिकक्षमाभृता दधता कङ्कटतामिवाश्रितः ॥ १४ ॥

धृतमङ्गलमौक्तिकाक्षतैः[6] क्षणदानाथ इवामलद्युतिः ।
मदवारणमन्थरैः पदैरथ निष्क्रम्य चतुष्कवेश्मनः ॥ १५ ॥

त्वरयाधिरुरोह दन्तिनः कृतपूजस्य स पृष्ठमादरात् ।
सह मङ्गलतूर्यनिस्वनैरुदयाद्रेरिव शृङ्गमर्यमा[7] ॥ १६ ॥

अन्तक्रियाकुलकम्[8] ।

क्षितिपेन करी विभूषितस्तरुणीनेत्रसहस्रसङ्गिना ।
हसति स्म सुरेन्द्रदन्तिनः श्रियमारूढपुरन्दरस्य सः ॥ १७ ॥

---

१ ब. पुस्तके नास्ति । २ -शंसने प्र. । ३ -कौतुकम् ब. । ४ -पाण्डना प्र. । ५ -भाजानुज - रा. । ६ -मौक्तिकाकृतः प्र. । ७ -निःस्वनैरदयाद्रेविश्रृङ्ग- प्र. । ८ ब. पुस्तके नास्ति ।

महति क्षितिभर्तुराहवे निकटस्थे कुविकल्पदोलिताम् ।
अकरोज्जयकुञ्जरः स्थितिं स करास्फालनतः स्थिरामिव ॥ १८ ॥

नलिनीदलचारुकान्तिभिः पदचिह्नैर्मदवारिपूरितैः ।
सरसीमिव तापशान्तये रचयामास स पार्थिवश्रियः ॥ १९ ॥

मदपानबहुप्रलापिनां भ्रमराणां[1] करविभ्रमैरभूत् ।
रिपुवारणडिण्डिमध्वनि-श्रवणायेव निवारणोन्मुखैः[2] ॥ २० ॥

अथ वीररसावतारतस्तरसा पल्लवितेन चेतसा ।
जगदद्भुतभूरिसाहसः प्रहसन्नुच्चलति स्म पार्थिवः ॥ २१ ॥

समराङ्गणसंगतिं भजन् विजयश्रीपरिरम्भणोत्सुकः ।
स बभार विलाससद्मनि प्रणयिन्याः प्रविशन्निवोत्सवम् ॥ २२ ॥

कियतीमपि तीव्रविक्रमः समतिक्रम्य वसुन्धरां ततः ।
अवलोकयति स्म भूपतिः प्रसरत्तूर्यरवं द्विषद्बलम् ॥ २३ ॥

मदवारिसमुत्थशैवल-द्युतिरोलम्बकलापजन्मनाम् ।
अदधुर्दर्शनांशुचन्द्रिकां[3] तिमिराणामिव वारणाय[4] ये ॥ २४ ॥

निजदानजलोत्थकर्दम-स्खलनत्रस्ततयेव ये पथि ।
पदविन्यसनं दधुः क्रमान्मदनिद्रार्धनिमीलितेक्षणाः ॥ २५ ॥

सरसीसलिलावगाहन-ग्रहिलाः स्वैरविहारकेलिषु ।
दलितादरविन्दमण्डलादधिरूढामिव ये दधुः श्रियम् ॥ २६ ॥

दधुरद्रिविघट्टनेषु ये पतितैर्मूर्धनि निर्झरैरिव[5] ।
कलयन्तमतिप्रभूततां कृतधाराजलदुर्दिनं[6] मदम् ॥ २७ ॥

---

१ भ्रमणानां रा. । २ -णोत्सुखः प्र. । ३ अदधुर्दश- ब. । ४ -मिवार- प्र. । ५ निर्जरैरिव प्र. । ६ क्षतधारा- ब. ।

श्रुतिभूषणशङ्खशुक्तिभिः शशिमुग्धाभिरधारयन्त ये ।
मदनिर्झरिणीतट[1]स्थलीं कलहंसीभिरुपासितामिव ॥ २८ ॥

ननु कस्य निवेश्यतामिदं शिरसि प्राज्यभुजस्य भूभुजः ।
पदमेकमधारयन्निति ध्रुवमुच्चैस्त्रिपदीनिभेन ये ॥ २९ ॥

कृतसंनहनास्तथाविधाः[2] करिणो यत्र सहस्रशः स्थिताः ।
मदलुब्धमधुव्रतस्वनैरगमन्यामिकतामिव श्रियः ॥ ३० ॥
कुलकम्[3] ।

जलराशिनिवेशसंकटा जवरोधाय बभूव भूरियम् ।
कविकां दशनैरखण्डयन्निति कोपादिव ये मुहुर्मुहुः ॥ ३१ ॥

अवलम्ब[4]विडम्बनां[5]मिमां तरणेर्हन्त हया हसन्ति नः ।
वसुधामिति मत्सरादिव क्षपयन्ति स्म परिक्रमेषु ये ॥ ३२ ॥

अवलोक्य रवेस्तुरङ्गमान् नववैदूर्यनिभे[6] नभस्तले ।
हरितासु तृणस्थलीषु ये विहरन्ति स्म वियद्भ्रमादिव ॥ ३३ ॥

वदनस्थितफेनमण्डलैं[7]श्छलतो दुग्धपयोधिनेव ये ।
निजसूनुतुरङ्गशङ्कया परितोषादुपसृत्य चुम्बिताः ॥ ३४ ॥

खुरघट्टितवैरिकुट्टिम-स्फुटितैर्वह्निकणैः कदर्थिताः ।
न निघर्षमकार्षुरङ्घ्रिभिश्चटुलैर्ये क्वचिदेव वर्त्मनि ॥ ३५ ॥

---

१ -निर्जरिणीतट- प्र. । २ -स्तथाविधा प्र. । ३ ब. पुस्तके नास्ति । ४ 'अवलम्ब्य' इति रा. पुस्तके शुद्धिपत्रे । ५ -विडम्बिना- रा. । ६ -वैडूर्यनिभे ज. । ७ -स्थितकेन मण्डल- रा. ।

निकटस्थितमेघडम्बरैः सुरचापैरिव तैस्तुरङ्गमैः ।
यदुदञ्चयति स्म साध्वसं जगतां वज्रनिपातनिष्ठुरैः ॥ ३६ ॥
कुलकम्[1] ।

हृदयस्थितरत्नभूषण-प्रतिबिम्बच्छलतः शिरांसि यैः ।
विधृतानि निजानि लीलया मरणे निर्गहनैरिवोरसि[2] ॥ ३७ ॥

सहजोष्मविशोषजर्जरं हृदि येषां विरराज चन्दनम् ।
समनीकशतप्रहारजं च्युतमस्थ्नामिव पाण्डुरं रजः ॥ ३८ ॥

प्रबलेन भुजद्वयेन ये बहुशस्तीर्णमहाहवार्णवाः ।
यशसः प्रणयित्वमागताः पृथुडिण्डीरकलापपाण्डुनः ॥ ३९ ॥

समदप्रतिपक्षमर्दनाद् बहुशस्त्रव्रणगर्तशालिनि ।
निखिलेऽपि यदङ्गविस्तरे विदधे वीररसः समाश्रयम् ॥ ४० ॥

तिमिरैरिव पिण्डतां गतैर्दवदग्धैरिव[3] घर्मवासरैः ।
बहुभिः सुभटैस्तथाविधैर्यदसंभाव्यपराभवागमम् ॥ ४१ ॥

परिभाव्य नितान्तभैरवं तदतिक्रान्तदिगन्तरं बलम् ।
कतरो न जगाम संभ्रमं मुमुदे कुन्तलपार्थिवः परम् ॥ ४२ ॥
कुलकम्[4] ।

विजयामृतकर्षणोद्यतैः सुभटैर्वीररसाम्बुधेस्ततः ।
प्रलयप्रतिमं द्वयोर्दिशोः समुपाक्रम्यत युद्धमुद्धतम् ॥ ४३ ॥

---

१ ब. पुस्तके नास्ति । २ निगहनैरिवोरसि प्र. । ३ -दग्धैरिव प्र. ; -दम्भैरिव ब. । ४ ब. पुस्तके नास्ति ।

अधिरुह्य बलद्वये बलाद् भुजदण्डैः[1] परिदोलनोद्यते ।
समरद्रुमतः फलावलिर्निपपातेव[2] शिरःकदम्बकैः ॥ ४४ ॥

सुभटस्य निहत्य वल्गतः सममेव प्रतिपक्षवीरतः ।
अविशद्दृशि शोणितच्छटा हृदये खड्गलता च संमुखी ॥ ४५ ॥

असिना विनिपत्य लोलतां[3] गमिते मूर्धनि भङ्गशङ्कितः ।
मुदमाप जयामृताशया सुभटस्तत्र पृषत्ककीलिते ॥ ४६ ॥

क्षतचञ्चुपुटा विघट्टनान्मुकुटे रत्नमये शकुन्तयः ।
न सहर्षमकार्षुरर्थितां परमार्थामिषपिण्डकेष्वपि ॥ ४७ ॥

अवलम्ब्य शनैरगाधतां रुधिरस्रोतसि मार्गरोधिनि ।
न परस्परदर्शनेऽप्यभूत् सुभटानां क्षणमाहवोत्सवः ॥ ४८ ॥

गुणवादपरायणा गिरः स्मितसंदिग्धविरोधमीक्षितम् ।
परुषत्वमुवास केवलं करवालेषु भुजोष्मशालिनाम् ॥ ४९ ॥

पतितेषु शिरःसु मानिनामिदमासीदवमाननास्पदम् ।
यदमीषु सरोषमाविशन्नुपरि न्यस्तपदाः पदातयः ॥ ५० ॥

शिरसा सुभटस्य दर्शितं शरलूनेन महत्कुतूहलम् ।
च्युतमप्यवनौ न विद्विषि[4] प्रहितं लोचनमाचकर्ष यत् ॥ ५१ ॥

असिघट्टनतः परस्परं पतिता वह्निकणा रणाङ्गणे ।
अलभन्त पिशाचयोषितां प्रियतामामिष[5]पाककर्मणि ॥ ५२ ॥

---

१ –द्रुतदण्डैः ब. । २ –वलीर्निप– ज. । ३ लोलतां प्र. । ४ –वनौ विद्विषि प्र. ; –वनौ हि विद्विषि ब. । ५ प्रियतामिष– प्र. ।

गलितद्विपकुम्भमौक्तिकच्छलतो व्योमनिभासिमण्डली ।
विनिमीलिततारकावदज्जयतिग्मांशुमिवोदयोन्मुखम् ॥ ५३ ॥

हृदयस्थितबाणमूर्छया करिकुम्भस्थलपीठशायिनाम् ।
अभवन्नुपकारहेतवश्चलकर्णव्यजनानिलोर्मयः ॥ ५४ ॥

विरराज नमन्महाकरी भटवक्षःस्थलभेदलम्पटः ।
अवनम्य रणाङ्गणस्थितां जयलक्ष्मीमधिरोपयन्निव ॥ ५५ ॥

अभवद्बलमेतदन्तरे सकलं[1] कुन्तलचक्रवर्तिनः ।
प्रतिपक्षगजप्रधावन-क्षुभितं दिक्षु विलक्षमास्तृतम् ॥ ५६ ॥

न स कोऽपि महोद्धुरः करी न तुरङ्गो न पटुर्महाभटः ।
विचचार न यः पराङ्मुखः प्रतिपक्षप्रलयानिलाहतः ॥ ५७ ॥

पुलकप्रणयं कपोलयोरथ चालुक्यनृपः प्रकाशयन् ।
उदतिष्ठदपारपौरुषः स्वयमुद्दाममदेन दन्तिना ॥ ५८ ॥

दलयन्रिपुकीर्तिकन्दलीं रणलीलासरसीमृणालिकाम्[2] ।
करिमेघघटाश्च पाटयन्नतनोदद्भुतराजहंसताम् ॥ ५९ ॥

क्षतकुञ्जरकुम्भमौक्तिकैर्निपतद्भिर्मुकुलानुकारिभिः ।
रिपुवीरयशःक्षमारुहं स भुजाभ्यां निजगाद कम्पितम् ॥ ६० ॥

रिपुवारणकुम्भमण्डलीं प्रहरन्निर्गहनः क्षमापतिः ।
प्रमदाघनपीवरस्तन-स्मरणस्मेरमुखो बभूव सः ॥ ६१ ॥

निपतन्तमसौ निवारयन्नरिनाराचमिभस्य मूर्धनि ।
चरणेन निहत्य पृष्ठतः सुरपुष्पप्रकरैरपूर्यत ॥ ६२ ॥

---

१ सकल प्र. । २ –लीलसर– प्र. ।

करटिध्वजदण्डसङ्गिनीं प्रतिवीरप्रहितां शरावलिम् ।
जयकीलकमालिकामिव क्षितिपालः सविलासमैक्षत ॥ ६३ ॥

असिना विशिखैः सतोमरैः सहसा कुञ्जरधावनेन च ।
स सहस्रमिवोद्वहन्करान्[1] प्रतिपक्षक्षयदीक्षितोऽभवत् ॥ ६४ ॥

तमवेक्ष्य तुरङ्गवाहिनी-हठनिर्लोठनबद्धकौतुकम् ।
तुरगावलिरंशुमालिनः कलयामास गुणाय दूरताम् ॥ ६५ ॥

असिधेनुविलूनकन्धरैः समदाधोरणमस्तकैरसौ ।
पृथिवीन्दुरपूरयन्महीं युगपद्द्यां च यशोभिरुद्भटैः ॥ ६६ ॥

अपि शैलविटङ्कभेदिभिर्विशिखैस्तस्य निवेशितव्यथाः ।
द्विषतां करिणः पलायिताः शरणं दिग्द्विरदानिवागमन् ॥ ६७ ॥

प्रतिवीरविमुक्तमार्गणै[2]-प्रचयाघट्टितकङ्कटोत्थितैः ।
शिखिभिः स बहूनकल्पयत् समराम्भोनिधिवाडवानिव ॥ ६८ ॥

रणसीमनि तेन वैरिणो विजयश्रीविरहाद्विषादिनः ।
गजमौक्तिकरेणुपाण्डुराः समनीयन्त तपस्वितामिव ॥ ६९ ॥

करिपादविपाटितोद्भट-प्रतिभूपालकपालकर्परः ।
भुवनत्रयभाण्डपूरण-क्षमकीर्तिः समरे चचार सः ॥ ७० ॥

न स कोऽपि कठोरपाटवः प्रतिभूभृत्कटके भटोऽभवत् ।
शरवर्षकृताभिभाषणः क्षण[3]मस्याभिमुखो बभूव यः ॥ ७१ ॥

क्षणमात्रविसूत्रिताखिल-प्रतिपक्षस्य चुलुक्यभूपतेः ।
वपुषि त्रिदिवौकसां परं सह पुष्पैरपतञ्छिलीमुखाः ॥ ७२ ॥

---

१ –द्वहत्करान् प्र. । २ –वीरमुक्तमर्गण– प्र. । ३ –भाषणक्षण– प्र.; भाषिणः क्षण– रा. ।

यदनेकपताकिनीभटे[1]-क्षयमेकः समनीकमूर्धनि ।
स चकार चुलुक्यपार्थिवस्तदभूत्कस्य न वर्णनास्पदम् ॥ ७३ ॥

चकितेव कबन्धताण्डवैः समरप्राङ्गणरङ्गभूमिषु ।
परिदृष्टपराक्रमं भुजं विजयश्रीः क्षितिभर्तुराश्रिता ॥ ७४ ॥

कवचे परितः कृतस्थितीन् भुजयोर्व्याप्तिविबन्धकारिणः ।
कमलप्रतिमेन पाणिना विशिखान्सस्मितमुच्चखान सः[2] ॥ ७५ ॥

स बभार शिरस्त्रमण्डल-स्थितनाराचसहस्रभारतः ।
प्रणमन्निव सङ्गरश्रियं क्षणमूर्ध्वानतकन्धरं शिरः ॥ ७६ ॥

रिपुशोणितबिन्दुमुद्रितौ स बिभर्ति स्म भुजौ[3] महाभुजः ।
क्षपितप्रतिपक्षशेखर-च्युतरत्नाङ्कुरै[4]दन्तुराविव ॥ ७७ ॥

रणसीमनि तत्र तत्र ये विशिखैः क्ष्मातिलकस्य कीलिताः ।
अपतन्नपि धावतां न ते करिणां कुम्भतटीविटङ्कतः ॥ ७८ ॥

अयि नाथ विमुक्तकैतवं[5] किमु मूर्छामिषमीलिते दृशौ ।
न तवायमुपेक्षितुं क्षणः सुभट स्वामिचमूपराभवम् ॥ ७९ ॥

पुरुषाः सुरधाम्नि दुर्लभास्तदिहायान्ति निलिम्पपांसुलाः ।
अलमेतदुपाधिनामुना मयि कामिन्नवधीरणेन ते ॥ ८० ॥

विदितं यदयं विगाहसे सुभट श्वाससमीरगोपनम् ।
सुरवारपुरन्ध्रिचुम्बनादिह ते नूतनमस्ति सौरभम् ॥ ८१ ॥

मम भाग्यविपर्ययादिदं त्वमपर्यन्तमधैर्यमाश्रितः ।
अहहाभिसरन्ति संपदश्चपलाः स्वामिगृहादनङ्कुशाः ॥ ८२ ॥

---

१ –पताकिनिभट– प्र. । २ विशिखान्सस्मित– प्र. । ३ भुजो प्र. ।
४ –रत्नाङ्कुर– ब. । ५ विमुञ्च कैतवं रा. ।

चलितोऽसि सुराङ्गनागृहं मम सौभाग्यविपर्ययाद्यदि ।
किमु विस्मरसि स्मरातुर प्रभुसंमानमिहान्यदुर्लभम् ॥ ८३ ॥

इति वीरविलासिनीजन-स्फुरदाक्रन्द[1]सहस्रदुर्दिनाम् ।
रणभूमिमसौ विलोकयन्नरिपृष्ठग्रहणान्न्यवर्तत ॥ ८४ ॥
कुलकम्[2] ।

तदनु नृपतिः प्राप्तः पारं परं समराम्बुधेः ।
सरलितधनुः श्रुत्वा शत्रोः पलायनमाकुलम् ।
अहह कृपणस्त्यक्तः कीर्त्याप्यसाविति विव्यथे
प्रकृतिमहतां दुर्वृत्तेष्वप्यहो चटुलाः क्रुधः ॥ ८५ ॥

करितुरगसमृद्धां सार्धमन्तःपुरेण
क्षितिपतिरथ सर्वां शत्रुलक्ष्मीं गृहीत्वा ।
ललितगतिकरेणुन्यस्तहेमासनस्थः
प्रवरजयपताकां राजधानीं विवेश ॥ ८६ ॥

संप्राप्तं कुलकण्टकं तमटवीमध्यादवन्ध्यैर्भटैः
कारुण्योद्गतबाष्पगद्गदपदः संभाष्य[3] संतोष्य च ।
चालुक्यान्वयशेखरोऽथ शिखरप्रेङ्खोलमुक्ताफल-
प्रालम्बद्युतिपुञ्जदर्शित[4]यशोगुच्छामगच्छत्पुरीम् ॥ ८७ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति[5]-
काश्मीरकभट्ट श्रीबिल्हणविरचिते पञ्चदशः सर्गः[6] ॥ १५ ॥



१ -दाक्रांद- प्र. । २ ब. पुस्तके नास्ति । ३ -गद्गद संभाष्य प्र.; -गद्गदवचाः संभाष्य ब. । ४ -दशित- प्र. । ५ -विद्यापविभट्ट- ज. । ६ सर्गः समाप्तः ज. ।

# षोडशः सर्गः

कुङ्कुमस्मितसंकोची क्रौञ्चीमदनदेशकः ।
मित्रमुत्तरवायूनां वियल्लावण्यतस्करः ॥ १ ॥

शरत्कालातपक्लान्त - कान्तावक्त्रेन्दु[1]वल्लभः ।
अथाजगाम हेमन्तः सामन्तः स्मरभूपतेः ॥ २ ॥
युग्मम्[2] ।

शरद्वितीर्णसौभाग्य - भङ्गदक्षः क्षपापतेः[3] ।
कान्तामुखानां[4] हेमन्तः सेवकत्वमशिक्षत ॥ ३ ॥

अजायन्त विभावर्यस्तपने मन्दतेजसि ।
दिवसग्रस्तविस्तार - कर्षणाय कृतक्षणाः ॥ ४ ॥

दोलयन्तः कपोलेषु कस्तूरीपत्रबन्धुषु ।
अलकानलकास्त्रीणां ववुः कैलासवायवः ॥ ५ ॥

रतिकोपे प्रसादे च दधानाः परिपूर्णताम् ।
आयामवत्यो यामिन्यः कामिनीनां मुदेऽभवन् ॥ ६ ॥

प्रौढत्वमाचरन्तीभिर्नीत्वा संकोचपात्रताम् ।
अक्रियन्त त्रियामाभिः स्त्रीजिता इव वासराः ॥ ७ ॥

अलभन्त नभःक्षेत्रे तारास्तरलकान्तयः ।
त्विषं तुषारबीजानां नूतनाङ्कुरशालिनाम् ॥ ८ ॥

---

१ -कान्तवक्त्रेन्दु- ब.। २ ब. पुस्तके नास्ति। ३ 'क्षमापतेः' इति सर्वत्र।
४ कांतमुखानां प्र.।

सशङ्केनेव कन्दर्प-दर्पोष्मपरिचिन्तनात् ।
शीतेन मदिराक्षीणां नास्पृश्यत कुचस्थली ॥ ९ ॥

अभूवन्नद्भुतोष्माणः शीतव्याप्ते जगत्त्रये ।
कुचोत्सङ्गाः कृशाङ्गीणां स्थानं मन्मथतेजसः ॥ १० ॥

यामिनीभिरनीयन्त सततं कामिनीजनाः ।
अनङ्गसंगतैरङ्गैर्गाढालिङ्गनकौतुकम् ॥ ११ ॥

अक्षिप्यन्त तुषाराद्रि-वायुस्फुटनशङ्कया ।
कान्ताभिः कुङ्कुमालेप-निचुलेषु मुखेन्दवः ॥ १२ ॥

पुण्ड्रेक्षुपाकपूतानि क्षेत्राणि दधि मांसलम् ।
आसीत्कुङ्कुमचर्चा च हन्त हेमन्तजीवितम् ॥ १३ ॥

मद्वैरिणः कठोरांशोरियं प्रणयभूरिति ।
रोषादिव तुषारेण निरदह्यत पद्मिनी ॥ १४ ॥

समक्षमपि सूर्यस्य पर्यभूयत पद्मिनी ।
तेजस्विनोऽपि कुर्वन्ति किं कालवशमागताः ॥ १५ ॥

अङ्गेषु स्पर्शसौभाग्यमपि सामान्ययोषिताम् ।
परिपोषितकन्दर्पस्ततान तुहिनागमः ॥ १६ ॥

विहारयोग्येषु दिनेषु तेषु देवश्चुलुक्यान्वयचक्रवर्ती ।
मृगेन्द्रगामी मृगयां विधातुं[1] स निर्जगाम स्वभुजार्जितश्रीः ॥ १७ ॥

स वारबाणेन रणैकवीरः श्रियं दधे नीरदमेचकेन ।
आमुक्तनीलोत्पलकङ्कटस्य देवस्य चूताङ्कुरैकार्मुकस्य[2] ॥ १८ ॥

---

१ विधायतुं प्र. । २ भृताङ्कुर- प्र. ।

स कञ्चुकस्योपरि नीलभासः स्थितेन हारेण रराज राजा ।
समेघनक्षत्रगणोऽवतीर्णो विद्याधरः कश्चिदिवाम्बराग्रात् ॥ १९ ॥

सहागतान्तःपुरसुन्दरीभिरुदारहारप्रतिबिम्बिताभिः ।
वक्षःस्थले तस्य कलत्रमाद्यं रराज लक्ष्मीः सपरिच्छदेव ॥ २० ॥

बभार हारावलिमौक्तिकानि वक्षःस्थलेन स्फटिकोज्ज्वलेन ।
उच्चैःस्थितस्य प्रतिबिम्बितानि स कुड्मलानीव यशोद्रुमस्य ॥ २१ ॥

नेत्राभिरामं दधता प्रपञ्चं नीलातपत्रेण स राजते स्म ।
खण्डेन लक्ष्मीकुलमन्दिराणां नीलोत्पलानामिव राजहंसः ॥ २२ ॥

द्वयोर्दिशोः फेनविपाण्डुराभ्यां स चामराभ्यां पृथिवीतलेन्द्रः ।
प्रसाधिताशेषदिगन्तरस्य रेजे यशोभ्यामिव दोर्युगस्य ॥ २३ ॥

व्योमाङ्गणस्थेन रराज वाजी झम्पासु तस्याग्रखुरद्वयेन ।
समुद्यतो मूर्धनि ताडनाय रोषादिवोष्णांशुतुरङ्गमाणाम् ॥ २४ ॥

तेजोनिधेस्तस्य तुरङ्गमोऽसौ देहेन डिण्डीरविपाण्डुरेण ।
घर्मेण दग्धानिव नीलदेहान् सहस्ररश्मेस्तुरगाञ्जहास ॥ २५ ॥

तेजोविशेषात्परितोषितानां प्राप्येव वेगं मनसां सकाशात् ।
वाजी स राजीवमुखस्य तस्य विवेद वायोरपि पङ्गुभावम् ॥ २६ ॥

पर्याणमाणिक्यरुचां चयेन हरिप्रभस्यास्य हरिश्चकाशे ।
आपूरिताङ्गः खुरखण्डितारि-भूपालरत्नाङ्गणपांसुनेव[1] ॥ २७ ॥

जनस्य चित्रोल्लिखिताश्ववार-दृढासने तत्र निपत्य दृष्टिः ।
भ्रान्ता तुरङ्गभ्रमिपृष्ठलग्ना श्रमादिवान्यत्र न गन्तुमैच्छत् ॥ २८ ॥

---

१ –पांशुनेव अ. ।

संचारिणी मन्मथराजधानी लीलावनं विभ्रमपल्लवानाम् ।
अन्तःपुरं तस्य जगाम पृष्ठे परा प्रतिष्ठा रसनायकस्य ॥ २९ ॥

वाराङ्गनास्तस्य तुरङ्गमेषु भ्रूकार्मुकारूढकटाक्षबाणाः ।
विरेजिरे दिग्विजयोद्यतस्य सेना इवानङ्गनराधिपस्य ॥ ३० ॥

पापर्द्धिलीलासरसीमरालाः कृतान्तदूता मृगपोतकानाम् ।
हिंसाकटाक्षा इव चित्रवर्णाः श्वानः प्रसस्रुः पुरतस्तदीयाः ॥ ३१ ॥

त्रैलोक्यलङ्घनकुतूहलिना हयेन
देवः कियन्तमपि मार्गमसौ विलङ्घ्य ।
कर्णान्तसंघटितनेत्रपुटो ददर्श
व्यालोलमत्तहरिणानि[1] वनान्तराणि ॥ ३२ ॥

सार्धं प्रियेण कियतापि परिग्रहेण
स प्राविशद्विशदकीर्तिकृतावतंसः ।
नीरन्ध्रनीलनिचुलप्रचुरच्छदालि-
प्रच्छादितार्ककिरणासु गिरिस्थलीषु ॥ ३३ ॥

देवस्य विक्रमनिधेरथ सूकराणां
शैलानुकारिकरिणामिव चक्रवालम् ।
स्निग्धद्वराहगृहिणीपरिचुम्ब्यमान-
मुस्तासुगन्धिमुखबालकमाविरासीत् ॥ ३४ ॥

गत्वा पदानि कतिचित्पुरतः सगर्वं
पृष्ठस्थितान्प्रति मुहुः प्रतिपालयन्तम् ।

1 —मत्रहरिणानि प्र. ।

बाणेन तत्र करिपीवरदेहमेकं
कक्षान्तरे क्षितिपतिः क्षपयांचकार ॥ ३५ ॥

केचिन्निपेतुरवनौ सह मार्गणेन
मार्गं कियन्तमपि केऽपि गताः सशल्याः ।
चेरुः कठोरशरधोरणिपातभीत्या
शैलस्थलीषु विषमासु परे वराहाः ॥ ३६ ॥

विपर्ययं पूर्वकथाद्भुतस्य चालुक्यभूपालशरश्चकार ।
पपात यन्नष्टधृतिर्वराहस्तं विह्वलाङ्गं वसुधा बभार ॥ ३७ ॥

क्रोडः सक्रीडमेतेन तरौ नाराचकीलितः ।
लीलामालानबद्धस्य दध्रे मुग्धस्य दन्तिनः ॥ ३८ ॥

श्वा निर्गतः कनकशृङ्खलया सहैव
कोपान्निरीक्ष्य विशतो गहने वराहान् ।
रुद्धस्तया विटपिकण्टककीलकेषु
साक्रन्दकण्ठकुहरो मुहुरुत्पफाल ॥ ३९ ॥

रुद्धं विलोक्य हरिणं हरिणी गतापि
व्यावृत्य बाणविषये नृपतेश्चचार ।
प्रायेण देहविरहादपि दुःसहोऽयं
सर्वाङ्गसंज्वरकरः प्रियविप्रयोगः ॥ ४० ॥

उड्डीय केऽपि निबिडीकृतचापदण्डे
चालुक्यभूभुजि गता गगनं कुरङ्गाः ।

---

१ निवडीकृत- ज. ।

सप्तर्षिमण्डलसमीपमिव प्रविश्य

निर्बाधमाश्रममृगत्वमवाप्तुकामाः ॥ ४१ ॥

स्वयमस्य पयोदवारिधारा-भ्रममासाद्य पृषत्कधोरणीषु ।

शरगोचरमागतो मयूरश्छलितो दिव्यपयोदुराग्रहेण ॥ ४२ ॥

स चकार शिखण्डिमण्डलानां नृपतिस्तत्र तथा यथा बभूव ।

पथिकप्रमदासु कोमलाङ्गः कलकेकाविकलः पयोदकालः ॥ ४३ ॥

स्वेच्छाविहाररसिकस्य वनस्थलीषु

काकुत्स्थतः[1] किमपि तस्य लघुत्वमासीत् ।

यस्माद्दशाननजयी रघुराजपुत्रः

पञ्चाननं तु निजघान चुलुक्यवीरः ॥ ४४ ॥

अपि शरधिविकृष्टैश्छिद्दे कङ्कपत्रै-

र्निकटमपि न रोहिद्गर्भिणीचक्रवालम् ।

स्मरणसरणिमागाद्गर्भभारालसानां

विलसितमबलानां यद्बलाद्भूमिभर्तुः ॥ ४५ ॥

किं वा बहुप्रलपितैरवराहयूथ-

मुत्सन्नकेसरि कदर्थितरङ्कुसार्थम् ।

कुर्वन्नरण्यमुपसृत्य निषेव्यते स्म

तत्रैव कुन्तलपतिः[2] शिशिरश्रियापि ॥ ४६ ॥

यत्सुभ्रुवां घुसृणलेपकवोष्णमङ्गं

यद्यौवनोष्ममधुराणि कुचस्थलानि ।

---

१ काकुस्थतः ज. । २ कुंतलपतेः प्र. ।

कामस्य तत्सकलकामुक[1]यामिकस्य
श्यामासु जीवितमजायत शैशिरीषु ॥ ४७ ॥

शुभ्रेषु राङ्कवपटेषु हसन्तिकासु
लीलाहसन्मलयजेन्धनपावकासु[2] ।
कृष्णागुरुज्वलनधूमशिखासु चासीत्
त्रैलोक्यकामुक[3]जयी मदनप्रतापः ॥ ४८ ॥

अङ्गारहासिषु विलासगृहोदरेषु
तल्पेषु तूल[4]पटकल्पितवेष्टनेषु ।
उष्णेषु च प्रणयिनीकुचमण्डलेषु
शान्तिं जगाम शिशिरस्य तुषारगर्वः ॥ ४९ ॥

गात्रेषु सौष्ठवकृता मृगयाश्रमेण
श्यामाभिरुल्लिखितमन्मथविस्तराभिः ।
आलिङ्गनैश्च सुदृशामनुरञ्जितोऽसौ
सर्वर्तुगोत्रतिलकं शिशिरं विवेद ॥ ५० ॥

गौरीविभ्रमधूपधूमपटलश्यामायमानोदरा[5]ः
कण्ठक्षोदभयान्न ये कवलिताः श्रीकण्ठहारोरगैः ।
स्फारोन्मीलितशारदागृहबृहद्द्वाराग्रघण्टारवा-
स्ते श्लाघा[6]मलभन्त कुन्तलपतेः कैलासशैलानिला[7]ः ॥ ५१ ॥

---

१ –कार्मुक– रा.। २ –जेन्धनपीवकासु प्र.। ३ –कार्मुक– रा.। ४ –दरेषु तूल– प्र. ; –दरेषु विस्तीर्णतूल– ब.। ५ –श्यामायमोदराः प्र.। ६ –गृह-बृद्द्वारवास्ते श्लाघा– प्र. ; –गृहबृहद्द्वारान्मुदा निर्गतास्ते श्लाघा– ब.। ७ कैलासरौला-निलाः प्र. ; कैलासरौद्रानिलाः ब.।

स्पृष्टाः स्तोकं वितस्तातटतुहिनकणैः पीडयन्तः पयोष्णीं
चञ्चन्तश्चन्द्रभागालहरिषु यमुनावीचिमैत्रीपवित्राः ।
धुन्वानाः सिद्धसिन्धोरुभयतटगतां देवदारुद्रुमालीं
तस्य प्रीत्यै बभूवुस्तुहिनगिरितटीकेलिकाराः समीराः ॥ ५२ ॥

इति नरपतिः सार्धं[1] दारैरुदारविचेष्टितः
शिशिरसमयश्लाघ्यक्रीडासुखान्यनुभूय सः ।
नगरमगमल्लीलागारप्रमोदमुपासितुं
क्षणमपि कुतस्तादृक्षाणां विलासदरिद्रता ॥ ५३ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीविल्हणविरचिते षोडशः सर्गः[2] ॥ १६ ॥



---

१ नरपतिसार्धं प्र. । २ 'विद्यापतिभट्टश्रीबिल्हणविरचिते महाकाव्ये षोडशमः सर्गः' इति अ. ।

# सप्तदशः सर्गः

विधाय भूमेस्तलमस्तकण्टकं ववर्ष हेम्ना स सहर्षमर्थिनाम् ।
अकुर्वतां सर्वजनार्त्तिखण्डनं वृथा तडित्पल्लवचञ्चलाः श्रियः ॥ १ ॥

चुलुक्यवंशे महतां महीभुजां महाभुजः शेखरतामसौ गतः ।
न मानुषीमेव निराचकार यः प्रजासु दैवीमपि चिच्छिदे रुजम् ॥ २ ॥

पयोभिरस्मान्परिपूरयन्ति ये पयोधयस्ते दधतेऽस्य वश्यताम्[1] ।
इतीव तत्सेवनवाञ्छया जलं यथोपयोगं मुमुचुः पयोमुचः ॥ ३ ॥

अकालमृत्युर्न चचार कुत्रचित् क्वचिन्न दुर्भिक्षमलक्ष्यत क्षितौ ।
किमन्यदन्यायनिबर्हणो[2] नृपः स राज्यमिक्ष्वाकुपतेरदर्शयत् ॥ ४ ॥

न भानुरत्यर्थमतापयज्जनं ववुः समीराः श्रममात्रहारिणः ।
फलानि भङ्क्त्वातिभरेण पादपान् भियेव पक्वान्यभजन्त पाण्डुताम् ॥५॥

जनैरवज्ञातकपाटमुद्रणैः क्षपासु रक्षाविमुखैरसुप्यत ।
करा विशन्ति स्म गवाक्षवर्त्मसु क्षपापतेश्छिद्रपथैर्न[3] तस्कराः ॥ ६ ॥

दिशः कृताः संततत्तूर्यनिस्वनैरलक्ष्यदिक्कुञ्जरकण्ठगर्जिताः ।
पुरे पुरे संततमुत्सवादभूद् ध्वजांशुकप्रावृतभास्करं नभः ॥ ७ ॥

उदारशौर्यैकरसः क्षमापतिः स निर्विनोदः समरोत्सवं विना ।
समार्पिताशेषमदान्धभूपयोरसेवकत्वं भुजयोरमन्यत ॥ ८ ॥

क्रमादजायन्त निजाकृतेः समाः कुलप्रतिष्ठानिधयोऽस्य सूनवः ।
अनन्यसाधारणपुण्यशालिनां फलन्त्ययत्नेन मनोरथद्रुमाः ॥ ९ ॥

---

१ दधतेल्पवश्यताम् रा. । २ -निबर्हणो प्र. । ३ क्षमा- रा. ।

सुवर्णवातायनतुङ्गभूमिषु स्थिताः प्रमोदं ददुरस्य[1] नन्दनाः ।
कृतास्पदाः[2] स्वीयविमानशङ्कया प्रविश्य विद्याधरबालका इव ॥ १० ॥

अहं सदा प्राणसमं महीभुजामयं तु मां वेत्ति नृपस्तृणोपमम् ।
इतीव कर्णेषु सुवर्णमर्थिनां स्वखेदमाख्यातुमभूत्कृतास्पदम् ॥ ११ ॥

नरेन्द्रचामीकरचारुभूषण - प्रभावलीसंगमपिङ्गलत्विषाम् ।
इतस्ततः प्लोषभियेव[3] दुर्गतिर्मुमोच[4] सङ्गं ज्वलतामिवार्थिनाम् ॥ १२ ॥

शिरःस्थदेवालयपातभीतितः प्रगल्भते खण्डयितुं न मामयम् ।
इति ध्रुवं काञ्चनभूधरोऽभवन्महीभुजि त्यागिनि[5] तत्र निर्भयः ॥ १३ ॥

इहागतः खण्डनमेव लप्स्यते पलायनार्थं कनकाद्रिरुच्यताम् ।
इतीव देशान्तरगामिनामभून्नरेन्द्रहेम श्रुतिलग्नमर्थिनाम् ॥ १४ ॥

कृतो निवासः कमलाविलासिनः क्षमाभुजा तेन नितान्तमुन्नतः ।
विभाति धर्मस्य समुद्गतो भुजः कलिच्छिदे क्ष्मावलयोदरादिव ॥१५॥

नभोङ्गणव्यापिनमुष्णदीधितेर्गुणद्वयं यं परिहृत्य गच्छतः ।
न लङ्घनं शार्ङ्गभृतः कृतं भवेत् तुरङ्गमाला च न भङ्गमश्नुते ॥१६॥

अयं स कण्ठीरवतामुपागमद् विपाटनार्थं[6] दनुजेन्द्रवक्षसः ।
इतीव भीतः कमलापतेः स्थितिं न यत्र धत्ते कलिकालकुञ्जरः ॥१७॥

अवैमि नारायणनाभिपङ्कजं न लभ्यते यत्र मधुव्रतोत्करैः ।
दिवानिशं येन विनिःसरन्ति ते निभेन कालागुरुधूमसम्पदाम् ॥१८॥

---

१ प्रसादं दधुरस्य रा. । २ कृतास्पदैः प्र. । ३ प्लोषधियेव ज. । ४ दुर्मतिर्मुमोच रा. । ५ त्यायिनि प्र. । ६ विपादनार्थं प्र. ।

यदीयशृङ्गेषु विभाति मौक्तिक-प्रभाभरैः[1] काञ्चनकुम्भमण्डली ।
तृषा विनिक्षिप्य मुखं तुरङ्गमैः कृता खरांशोरिव फेनसङ्गिनी ॥ १९ ॥

पुरन्ध्रिनृत्येषु विनिर्यदंशुभिः प्रसर्पदानन्दजलैरिवेक्षणैः ।
श्रियं सजीवा इव यत्र संततं वहन्ति रत्नोत्करशाल[2]भञ्जिकाः ॥ २० ॥

वितानरत्नप्रतिबिम्बडम्बरैर्वहन्ति यत्प्राङ्गणसीम्नि लासिकाः ।
अवाप्तविद्याधरराजसुन्दरी-पदा इव व्योम्नि विहर्तुमुद्यताः ॥ २१ ॥

अकारयत्कारणमानुषः पुरस्तडागमेतस्य स रुद्धदिङ्मुखम् ।
उपैति येनानुपमश्रिया तुलामसौ गतश्रीः कथमम्भसां निधिः ॥ २२ ॥

नभःस्रवन्त्या[3] इव शेषवारिभिः परिच्युतैरच्युतपादपद्मतः ।
प्रविश्य देवालयगर्भमागतैर्विपाण्डुभिर्यः सलिलैर्विशोभते ॥ २३ ॥

प्रदानलोभादिह भर्तुरस्य चेत् कदाचिदागच्छति कुम्भसंभवः ।
छिनद्मि तद्दर्पमितीव यस्तट-त्रुटद्विटङ्कोर्मिरवेण गर्जति ॥ २४ ॥

किमाहतक्षारपयोधिसंगमा बिभर्षि भागीरथि दुर्भगाव्रतम् ।
इतीव यः कर्षति हर्षगद्गदस्तरङ्गहस्तैर्नभसः सुरापगाम् ॥ २५ ॥

अवाप्तबन्धेन लघुत्वमब्धिना वितर्क्य पित्रा सुरराजकुञ्जरः ।
प्रसूतमात्मानमनिन्दितात्मनो ब्रवीति[4] यस्माद्ध्रुवमभ्रमोः पुरः ॥ २६ ॥

निपीय यत्पाथसि नूनमम्बुदैरवापिते शुक्तिषु मौक्तिकश्रियम् ।
पुराणमुक्तामणिभिर्न लप्स्यते कुचस्थलारोहणमेणचक्षुषाम् ॥ २७ ॥

अपास्य पाथोधिमसंख्यनिम्नगा-मुखार्पणोच्छिष्टमरोचकादिव ।
तपात्यये जहुरुपान्तशैलजाः कुमारतां यस्य सगर्वमापगाः ॥ २८ ॥

---

१ -प्रभाकरैः रा. । २ -साल- प्र. । ३ नभःश्रवन्त्या ज. । ४ प्रतीति ज. ।

निरन्तरं ब्रह्मपुरीभिरावृतं चकार तत्रैव पुरं स पार्थिवः ।
विरिञ्चिलोकात्सुरलोकतश्च यद् विभूष्य भागाविव कौतुकात्कृतम् ॥२९॥

क्षपासु यत्रैकमपास्य चुम्बति द्वितीयवातायनमङ्गनामुखे ।
विशङ्कितः सौधविटङ्कलङ्घनात्[1] प्रविश्य मध्यं व्रजतीव चन्द्रमाः ॥३०॥

यदीयसोपानपथाधिरोहणे नितम्बिनीनां विनिपातभीतितः ।
मयूख[2]दण्डैस्तपनीयनिर्मिताः करावलम्बं ददतीव भित्तयः ॥ ३१ ॥

यदग्रवातायनशृङ्गसद्मनामतीव तुङ्गत्वमवाप दूषणम् ।
यदत्र चित्रस्थितकुञ्जरक्रुधा प्रधावनं शक्रगजस्य शङ्क्यते[3] ॥ ३२ ॥

स्थितासु यत्रोपरि भूमिकुट्टिम-स्थलीषु तुङ्गासु निरन्तरासु च ।
त्यजन्ति मार्गे तुरगाः कियत्यपि ध्रुवं निरालम्बगतिश्रमं रवेः ॥३३॥

निशासु यत्र प्रतिबिम्बवर्त्मना समागतश्चारुदृशां निशाकरः ।
विलासदोलायितकुण्डलाहृतैः[4] कपोललावण्यजले निमज्जति ॥ ३४ ॥

पिता हरिः श्रीर्जननी तयोरिदं पुरं ममैवेति विचिन्तनादिव ।
अजस्रमन्यायसहस्रकारिणः स्मरस्य यत्रास्ति न कश्चिदङ्कुशः ॥३५॥

ददौ स दानानि महान्ति षोडश प्रतापशाली प्रतिपर्व पार्थिवः ।
तदन्तिकाद्दानजलैः सकर्दमान्निपातभीत्येव कलिः पलायितः ॥ ३६ ॥

अधत्त तुङ्गेषु सुवर्णराशिषु प्रदानशीलस्तृणबुद्धिमेव[5] सः ।
बभूव लोभास्पदमस्य भूपतेर्यशः परं चन्दनपिण्डपाण्डुरम् ॥ ३७ ॥

---

१ —विटङ्कलाङ्घनात् प्र. । २ मयूष— ज. । ३ शङ्कते ज. । ४ —कुण्डला-हृतः ब. । ५ —बुद्धिरेव ज. ।

सुवर्णदानप्रवणेऽत्र शङ्कितः सुवर्णशैलः शिखरैः समुन्नतैः ।
समस्पृशत्पारदपिण्ड[1]शङ्कया विपाण्डुरत्वार्थमिवेन्दुमण्डलम् ॥ ३८ ॥

रिपुं विजित्य द्विजकल्पशाखिना कृतेऽमुना हेमतुलाधिरोहणे ।
गिरेरगस्त्यागमशङ्कया चिराद् बभूव तस्योन्नमने मनोरथः ॥ ३९ ॥

प्रयच्छतः[2] स्वच्छमतीव काञ्चनं विशङ्क्य यस्मात्कनकक्ष्माधरः ।
अदर्शयत्कालिकयेव संगतिं स्वहेम्नि संक्रान्तिनिभान्नभःश्रियः ॥ ४० ॥

प्रदानलीलारसिकः प्रतापवान् विधाय रिक्तानि कुलानि भूभुजाम् ।
अपूरयत्सोऽर्थिगृहाणि हेमभिर्यशोभिराशावदनानि चोज्ज्वलैः ॥ ४१ ॥

कृतस्थितिर्मूर्धनि चक्रवर्तिनां स विश्वचक्रर्द्धिविधानतत्परः ।
उदारशीलः प्रतिकूल[3]तामगाद् दरिद्रनिर्माणपरस्य वेधसः ॥ ४२ ॥

विपक्षदुर्भिक्षकदर्थितश्चिरं स शौर्यकण्डूलभुजः क्षितेः पतिः ।
निशम्य चोलं बलगर्वितं पुनर्जगाम काञ्चीं समनीकतृष्णया ॥ ४३ ॥

श्रियः समुत्थापनवार्धिमन्थनं कलिप्रियस्येक्षणपारणं मुनेः ।
क्रयापणं निर्जरपण्ययोषितां क्रमेण तौ तत्र रणं वितेनतुः ॥ ४४ ॥

महाभटानां करवालयष्टयः समुच्छलद्वीररसोर्मिनिर्मलाः ।
विनिर्गताः कोश[4]बिलोदरात्ततः कृतान्तपाशोरगसंनिभा बभुः ॥ ४५ ॥

परस्परं मत्सरतः प्रधाविताः प्रभूतसौभाग्यवशाज्जयश्रियः ।
किमप्यखिद्यन्त बलद्वये भटाः पुरोगतैः शीघ्रतया शरैरपि ॥ ४६ ॥

हृदि प्रविष्टं दशनं निजासिना निकृत्य कश्चित्करिणं न्यवारयत् ।
चकार रन्ध्रे कृतकीलकार्पणः प्रतिक्रियां जीवविनिर्गमस्य च ॥४७॥

---

१ –त्पारतपिण्ड– प्र. । २ प्रयछत प्र.; अयच्छत ब. । ३ –शील प्रतिकूल– ज. । ४ विनिर्गता कोश - प्र. ।

अतिष्ठदंसे[1] सुभटस्य चञ्चलं शिरः क्षुरप्रेण यदर्धखण्डितम् ।
तदेष वामेन विधृत्य पाणिना प्रधावितः कं न चकार वन्दिनम् ॥४८॥

सकङ्कटः कश्चिदुरस्तटत्रुटत्पृषत्कनिष्ठ्यूतहुताशनो भटः ।
विवेद नो धूमलताभिशङ्कया मुखे कृपाणं रिपुणा[2] निवेशितम् ॥४९॥

रदाङ्कुरप्रोतमरातिदन्तिना मुखं दधानः पुलकोत्कराञ्चितम्[3] ।
पिबन्निवालक्ष्यत कोऽपि लीलया मृणालदण्डेन यशःसुधारसम् ॥५०॥

विपक्षशस्त्रक्षपणैः पुनः पुनः क्षताखिलग्रन्थि निजास्थिपञ्जरम् ।
चकार चण्डद्युतिमण्डलोदरे सुखप्रवेशार्थमिवापरो भटः ॥ ५१ ॥

पदे पदे शोणितपङ्कपातिनी दिनेश्वरस्य प्रतिबिम्बमालिका ।
अवापदापानकुतूहलागत-क्षपाचरस्त्रीचषकोपमेयताम् ॥ ५२ ॥

लघु प्रहर्तुं प्रतिपक्षमक्षमः प्रविष्टनाराचचयातिभारतः ।
भटेन केनापि सरोषमीक्षितैः[4] प्रभूतवैलक्ष्यवता निजो भुजः ॥ ५३ ॥

भटेन नीतः श्रुतिहस्तखण्डनान्महाकरी निग्रहणोचितं विधिम् ।
ममज्ज लज्जामिव धारयन्भृशं कृशानुवर्णे रुधिरापगाभरे ॥ ५४ ॥

रदद्वयेन स्फुटितेन पाटनात् परिस्फुटद्दन्तचतुष्टयद्युतिः ।
अमर्त्यभावं भटपेटके भजत्यमर्त्यदन्तित्वमवाप कुञ्जरः ॥ ५५ ॥

विषाणिनां तीक्ष्णखुरप्रखण्डिताः सुदूरमुड्डीय[5] रदाङ्कुराश्च्युताः[6] ।
सुरप्रसूनावलिशङ्किभिर्भटैर्न वञ्चितास्तान्मुकुटेष्वताडयन् ॥ ५६ ॥

---

१ -दंशे ज., ब. । २ रिपुना प्र. । ३ -राञ्चतम् प्र. । ४ -मीक्षतः प्र. ।
५ -खण्डितास्तद्दूर- ज., ब.; -खण्डितास्तदूर- प्र. । ६ रदांकुश्च्युताः प्र. ।

निवेशनीयौ न शिरीषकोमलौ भुजौ त्वया संवरणस्रजः पदे ।
महार्घपुष्पे समयेऽत्र मेनके द्युमालिकास्ते कलयन्ति लुब्धताम् ॥५७॥

न भर्तृदुर्भिक्षमिहास्ति मेनके किमन्यया[1] स्वीकृतमेव वाञ्छसि ।
विलोपयिष्यन्ति तव प्रगल्भतां स्वयं परीक्षाविषये सुराङ्गनाः ॥ ५८ ॥

अमी विमानेष्वधिरोपितास्त्वया मुधैव मूर्छामुकुलीकृतेक्षणाः ।
अवाप्य संज्ञां कृतफालमुत्सुकाः पतन्ति पश्य प्रधनाङ्गणे पुनः ॥५९॥

विभिन्नमर्यादममुष्य चेष्टितं भटस्य पश्य प्रथमातिथेरपि ।
विमानवातायनतो यदन्यया विलोकितस्तां प्रति सत्वरोऽभवत् ॥६०॥

कयात्र माला प्रथमं समर्पिता न वेद्मि वादे युवयोस्तदन्तरम् ।
तदेष सौभाग्यनिधिर्भटाग्रणीः करोतु वाचा स्वयमेव निश्चयम् ॥६१॥

विलोभ्य सौभाग्यमदाद्भटोऽनया सलीलमन्तर्हितया प्रतारितः ।
अयं स्मरान्धस्तरसा पराङ्मुखीं श्रमातिपिशाचीमुपसृत्य मुञ्चति ॥ ६२ ॥

न नारदादस्ति परो विशारदः परोपकारप्रवणासु वृत्तिषु ।
क्षणात्समुत्पाद्य महारणानि यः करोति नः कामुक[2]दुर्गतिच्छिदम् ॥६३॥

सहर्षमित्यप्सरसामजायत प्रजागरं पञ्चशरस्य तन्वती ।
प्रवीरकण्ठग्रहरान्त[3]कौतुक-प्रधावितानां श्रवणामृतं कथा ॥ ६४ ॥

कुलकम्[4] ।

अत्रान्तरे नरपतिर्जयकुञ्जरस्य
ज्यानादनिष्ठुरमधिष्ठितपृष्ठपीठः ।

---

१ -मिहास्ति किमन्यया प्र.; -मिहास्ति किंचन किमन्यया ब.। २ कार्मुक- रा.। ३ -प्रहृशान्त- ब.। ४ ब. पुस्तके नास्ति।

शिक्षाशरव्यवदरातिचमूभटानां
नाराचपङ्क्तिभिरपूरयदाननानि ॥ ६५ ॥

आरोहकान्करिषु[1] वाजिषु चाश्ववारान्
प्रोतान्[2]पदातिनिवहांश्च विधाय भूमौ ।
नामाङ्कितैरिषुभिरेष चुलुक्यवीर–
श्चोलस्य कीलितमशेषबलं व्यधत्त ॥ ६६ ॥

ब्रूमः किमन्यदयमुत्सहते स्म यत्र
द्वय्येव[3] तत्र गतिराविरभून्नृपाणाम्[4] ।
कारागृहे पतनमाशु पलायनं वा
चोलोऽपि शीघ्रमपसारमतश्चकार ॥ ६७ ॥

अथ शिथिलितचापश्चोललक्ष्मीं गृहीत्वा
कृतविविधविनोदस्तत्र काञ्चीनगर्याम् ।
निजनगरमगच्छत्प्रोच्छलत्सान्द्रसेना[5]–
भरभरितदिगन्तः कुन्तलक्ष्माभुजङ्गः ॥ ६८ ॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति–
काश्मीरकभट्टश्रीबिल्हणविरचिते सप्तदशः सर्गः[6] ॥ १७ ॥



१ आरोहकात्करिषु प्र. । २ पोता– रा. । ३ द्वयेव प्र. । ४ नृपानां प्र. ।
५ –मगच्छत्सान्द्रसेना– प्र. ; –मगच्छत्सान्द्रमातङ्गसेना– ब. । ६ सर्गः समाप्तः ज. ।

# अष्टादशः सर्गः

काश्मीरेषु प्रवरपुरमित्यस्ति मुख्यं पुराणां
यातं[1] गौरीपरिणयविधौ[2] साक्षितामिन्दुमौलेः ।
यस्यायान्ति प्रकृतिकुटिलास्ते वितस्तातरङ्गाः
स्वेच्छाधावत्कलियुगगजाधोरणत्वेऽङ्कुशत्वम् ॥ १ ॥

उद्यानेभ्यः सकलभुवनाश्चर्यमाधुर्यधुर्यं
पीत्वा द्राक्षारसमिव करैर्जातसंतापशान्तिः ।
ज्येष्ठाषाढेष्वपि कमलिनीकामुको यत्र धत्ते
रत्नश्रेणीकिरणकलिकाकोमलामंशुमालाम् ॥ २ ॥

कृत्वा शैलं करतलतुलारूढमर्धेन्दुमौले-
र्हास्यज्योत्स्नां दशसु विसृ[3]जन्दिक्षु दर्पाद्दशास्यः ।
यस्मादुच्चैः स्फुरितमहसां ब्राह्मणानां निवासा-
च्छापत्रस्तस्त्वरितमगमद्दूरतः पुष्पकैर्[4] ॥ ३ ॥

उत्तुङ्गानां मणिगृहभुवां यत्र वातायनेषु
व्याख्याभिख्याप्रणयिनि जगद्दुर्लभे सूरिचक्रे ।
देवाः प्रोद्यद्विपुलपुलकाः किं न वर्षन्ति पुष्पै-
र्नाशङ्कन्ते यदि सुरगुरोस्तत्र वैलक्ष्यदीक्षाम् ॥ ४ ॥

---

१ जातं ज. । २ -विधो प्र. । ३ दशभुविसृ- प्र. । ४ पुष्पकेन प्र.

धत्ते यस्याः स्फटिकशुचिभिः कान्तिभिः क्षालयन्त्याः[1]
स्थित्यां गौरीगुरुरपि गिरिर्नूनमुच्चैः शिरांसि ।
गङ्गास्पर्धोद्धुरमधुमतीसैकतोत्तंसहंसी[2]
विद्यारक्षाधिकृतमकरोत्सा स्वयं शारदा यत् ॥ ५ ॥

ब्रूमः सारस्वतकुलभुवः किं निधेः कौतुकानां
तस्यानेकाद्भुतगुणकथाकीर्णकर्णामृतस्य ।
यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव
प्रत्यावासं विलसति वचः संस्कृतं प्राकृतं च ॥ ६ ॥

मन्ये मन्थाचलविदलितान्निर्गता दुग्धसिन्धो–
र्भूत्वा[3] यस्मिन्नमृतलहरी सत्कवीनां वचांसि ।
प्रेमाकूतं[4] कुवलयदृशां शीकरैः पूरयन्ती
द्राक्षाखण्डेष्वमृतकिरणापाण्डुषु[5] स्थैर्यमाप ॥ ७ ॥

दुर्लक्ष्यत्वं[6] कलियुगदृशां प्रापिते ब्रह्मधाम्ना
क्षिप्त्वा विद्याविभवमखिलं यत्र विश्वासधाम्नि ।
स्थाने तत्र त्रिनयनगुरोर्निर्जने नूनमद्रेः
सा वाग्देवी भजति शमिताशेषतापा तपांसि ॥ ८ ॥

तीरद्वन्द्वप्रणयिभवनव्रातवातायनस्थ–
स्वैरक्रीडोच्छलितमिथुनच्छिन्नहारावकीर्णा ।

---

१ –शुचिभिः क्षालयन्त्या स्थित्या प्र. ; –शुचिभिः क्षालयन्त्या यशोभिः स्थित्या ब. । २ गांगस्प– ज., ब. । ३ –सिन्धोर्भूत्वा रा. । ४ प्रमाकूतं प्र. । ५ –किरणपाण्डुषु प्र. । ६ दुर्लक्षत्वं ब. ।

यस्योत्सङ्गे कुलसरिदसौ नीलकण्ठप्रसूता
धत्ते तारातिलकितनभःसङ्गिगङ्गानुकारम् ॥ ९ ॥

स्नानक्रीडाव्यसनसमये कुङ्कुमं कामिनीनां
यत्रोत्तार्य स्तनपरिसराद्बह्लती कान्तमङ्के ।
ईर्ष्यामर्षादिव निरवधेर्वीचि[1]हस्तैर्वितस्ता
कर्षत्यासां प्रतिकलमलिश्यामलान्केशपाशान् ॥ १ ॥

यस्मिन्कापि स्फुरति ललिता श्रीः कटाक्षच्छटासु
श्रीमद्भट्टारकमठपुरोपान्तसीमन्तिनीनाम् ।
या निःशङ्कं श्रुतिकुवलयस्यापलापप्रवृत्ता
भग्ना किञ्चित्परिमलमिलद्भृङ्गकोलाहलेन ॥ ११ ॥

यस्मिन्सह्याः कथमशिथिलप्रेङ्खितै[2]र्भ्रूलतानां
किञ्चिल्लीलामसृणमुकुलाः कामिनीदृष्टयस्ताः ।
यासां त्रासा[3]कुलितहरिणप्रेयसीभङ्गुराणा–
मुत्सङ्गस्थः किमपि भजते चापलं पुष्पचापः ॥ १२ ॥

यस्य भ्राम्यद्भ्रमरपटलश्यामकेलिद्रुमाणा–
मारामाणामविरलतया कोऽप्यसौ संनिवेशः ।
यस्मिन्रामाः कुसुमधनुषं दृग्भिरुन्मार्गभर्ग–
क्रोधज्वालाकिसलयै[4]श्चये सुप्तमुत्थापयन्ति ॥ १३ ॥

---

१ निरवधिर्वीचि– प्र., रा. । २ –प्रेषित– ज. । ३ यासां भासा– रा. ।
४ किशलय– ज. ।

अङ्कालङ्कापतितरलिताद्याः शिला विप्रकीर्णाः

प्राप्त्यै तासां[1] स्फटिकशिखरी वेद्मि पर्युत्सुकोऽपि ।

आस्ते गौरीपतिवृषखुरक्षोदचिह्नान्यपश्यन्

यद्गेहानां कलहविमुखः स्फाटिकेष्वङ्गणेषु ॥ १४ ॥

यक्षग्रस्ता धनपतिपुरी निष्कलङ्का न लङ्का

सातङ्केव त्रिदशनगरी मेरुपृष्ठेऽधिरूढा ।

इत्यप्राप्यप्रतिभटतया नूनमुच्चैः सगर्वं

यत्प्रद्युम्नक्षितिधरनिभादुत्तमाङ्गं बिभर्ति ॥ १५ ॥

काव्यं येभ्यः प्रकृतिसुभगं[2] निर्गतं कुङ्कुमं च

च्छायोत्कर्षाद्भवति[3] जगतां वल्लभं दुर्लभं च ।

यस्मिन्नन्तःस्थितवति जगत्सारभूते प्रयाताः

काश्मीरास्ते नियतमुरगाधीशरक्षास्पदत्वम् ॥ १६ ॥

लीलावल्गत्सरसमसृणभ्रूविलासानि यासां

कन्दर्पस्त्रीयदि युगशतैः शिक्षते वीक्षितानि ।

रामाः श्यामारमणरुचयस्ताः कियत्यो न यस्मिन्

हर्षोत्तालाः सरणिषु रणत्काञ्चयः संचरन्ति ॥ १७ ॥

देवोद्यानेष्वपि तिलकतां पुण्ययोगादवाप्तै-

र्विस्मर्यन्ते न खलु निखिलाश्चर्यसारा यदीयाः[4] ।

---

१ प्राप्तैतासां प्र. । २ प्रकृतिसुभगं प्र. । ३ -त्कर्षादवति रा. ।
४ यद्दीपाः प्र. ।

श्रीखण्डो[1]म्भःस्नपितमुरलप्रेयसीगण्डपाण्डु–
द्राक्षाखण्डस्तबकितलतामण्डपास्ते वनान्ताः ॥ १८ ॥

अस्त्यन्योन्यग्रथितलहरीदोर्लतावन्धवन्धु–
र्मध्ये यस्य क्षपितकलुषः संगमः पुण्यनद्योः ।
यस्योत्सङ्गे हलधरकृतास्ते जयन्त्यग्रहारा
ये धर्मस्य क्षतकलिभयाः शैलदुर्गीभवन्ति ॥ १९ ॥

यस्मिन्किञ्चिन्न तदुपवनं यत्र नो केलिवापी
नैषा वापी न विषमधनुष्कार्मणं यत्र रामाः ।
नासौ रामा मनसिजकथाघातभग्ना युवानः
कामं यस्या न निबिडतरप्रेमबन्धे पतन्ति ॥ २० ॥

यद्भूषायां विहितवपुषस्तस्य विश्वैकबन्धोः
स्फूर्तिः कीर्तेः पदमनु[2]पमा सापि विद्यामठस्य ।
यस्मिन्नङ्गीकृतकलकला मेखलाः कामिनीनां
पृष्ठे लग्नं कुसुमधनुषस्त्र्यक्षमप्याक्षिपन्ति ॥ २१ ॥

वैतस्तानां स खलु पयसां संगमो यत्र चर्या–
मर्यादायाः कृतयुगभुवः पात्रभूतोऽद्भुतश्रीः ।
दोलालीलातरलगतिषु प्रेङ्खितो[3] यत्तरङ्गै–
रुत्सङ्गेषु त्रिदशसुदृशां देहभाजः पतन्ति ॥ २२ ॥

---

१ श्रीषंडा– ज. । २ स्फूर्तिः कीर्तिः परमु– प्र. ; स्फूर्तिः कीर्तिः परमनु– ज. । ३ –प्रेंषिता ज. ; –प्रेषिता प्र. ।

तत्पर्यन्तस्थितगुणनिकामण्डपं यत्र धत्ते
धाम व्योमाङ्गणतिलकतां क्षेमगौरीश्वरस्य ।
रामा रामानुकरणविधौ यत्र नाट्यप्रयोगे
योगस्थानामपि सपुलकं गात्रमासूत्रयन्ति ॥ २३ ॥

संग्रामोर्वीपरिवृढमठ[1]प्रान्तसीमन्तितोऽसौ
यस्मिन्नक्ष्णोर्वितरति सुधां चन्द्रसीमाप्रदेशः ।
यत्रानन्तक्षितिपतिकृतास्ते वितस्तोपकण्ठे
याताः कान्त्या हरधवलया हारतामग्रहाराः ॥ २४ ॥

गर्जद्वातायनविततयः शास्त्रगोष्ठीवरिष्ठै-
स्ताः काष्ठीलद्विज[2]वसतयो यत्र नेत्रोत्सवाय ।
यासु त्रासं विदधति कलेर्दर्शनादेव[3] विप्राः
सायंप्रातःप्रहुतहुतभुग्धूमधूम्रैः शिरोभिः ॥ २५ ॥

यत्रानन्तक्षितिपगृहिणीशङ्करागारपार्श्वे
तत्तुङ्गिम्ना त्रिभुवनमनोरञ्जनं गञ्जधाम ।
श्रुत्वा श्रुत्वा रुतमविरतं यत्र पारावतानां[4]
दक्षाः कण्ठध्वनिषु शनकैः पौरकन्या भवन्ति ॥ २६ ॥

यत्क्षेत्रेषु स्थितिमरचयद्वल्कलं यत्सिषेवे
जाने जैत्रं किमपि तपसस्तस्य माहात्म्यमेतत् ।

---

१ -वृतमठ- रा. । २ काष्ठीलद्विज- प्र. । ३ -र्दशना- प्र. । ४ पारापतानां अ., ब. ।

तत्रत्यस्य[1] प्रथमवयसः स्त्रीजनस्याङ्ककानां
यत्काश्मीरं कनकसुहृदामन्तरङ्गत्वमेति ॥ २७ ॥

गेहं यत्र प्रवरगिरिजावल्लभस्याद्भुतं तत्
केषामाशां सुरपतिपुरारोपणे नातनोति ।
यद्यातस्य प्रवरनृपतेर्द्यां शरीरेण सार्धं
स्वर्गद्वारप्रतिममुपरिच्छिद्रमद्यापि धत्ते ॥ २८ ॥

दृष्ट्वा यस्मिन्नभिनयकलाकौशलं नाटकेषु
स्मेराक्षीणां मसृणकरणासङ्गदत्ताङ्गहारम् ।
रम्भा स्तम्भं भजति लभते चित्रलेखा न रेखां
नूनं नाट्ये भवति च चिरं नोर्वशी गर्वशीला ॥२९॥

यस्मिन्नुर्वीपतिगृहततेस्तुङ्गिमा वर्ण्यते किं
तस्याश्चञ्चच्चतुरवनिताभूषितानेकभूमेः ।
जाने यस्यां कुसुमधनुषः स्वर्गरामामनांसि
क्रीडावातायनकृतपदस्यैव लक्ष्मीभवन्ति ॥ ३० ॥

यत्र स्त्रीणां मसृणघुसृणालेपनोष्णा कुचश्री-
रताः कस्तूरीपरिमलमुचः पट्टिका राङ्कवाणाम् ।
नौपृष्ठस्थाः शिशिरसमये ते वितस्ताजलान्तः-
स्नानावासाः प्रचुरमपि च स्वर्गसौख्यं दिशन्ति ॥३१॥

वक्त्रन्यस्तैस्तुहिनशकलैर्दन्तुरा[2] वारिकुम्भाः
काश्मीरीणां[3] सरसकदलीकोमला गात्ररेखाः ।

---

१ तत्तत्तस्य रा. । २ -शकलैर्दंतुरा ज. ; शकलैर्दंतुरा प्र. । ३ कास्मीरीणां ज. ।

भीष्मग्रीष्मक्लमविरतये सर्वसाधारणत्वम्
यस्मिन्नायान्त्यपि हिमशिलाशीतलानि स्थलानि ॥३२॥

सत्यत्यागप्रमुखनिखिलोत्कर्षसंपत्तिसीमा
तस्मिन्नासीदवनिवनितावल्लभोऽनन्तदेवः ।
वैरिस्तम्बेरमघनघटागर्जितानामगम्ये
चक्रे धारापयसि यदसेः कीर्तिहंसी निवासम् ॥ ३३ ॥

दत्वा शोकं शकपरिवृढप्रौढसीमन्तिनीनां
येन क्रीडाविदलितदरद्दीर्घदर्पः कृपाणः ।
अस्पृश्यानामिव परिचयाद्बिभ्रता दोषशङ्कां
धौतः क्षोणीवलयजयिना जह्नुकन्याजलेषु ॥ ३४ ॥

कर्तुं कीर्त्या तिलकमलकागोपुराणां गतेन
क्रौञ्चस्याङ्के भृगुपतिशरच्छिद्रमद्रेर्विलोक्य ।
येन क्रीडालवशबलिताः पीवरे बाहुदण्डे
चण्डध्वाने धनुषि च रुषा सूत्रिता दृष्टिपाताः ॥ ३५ ॥

सिद्धैरध्यासिततटभुवः स्नातसप्तर्षिहस्त-
न्यस्तश्राम्यत्तिलतिलकितस्रोतसो मानसस्य ।
यत्कान्ताभिः शिरसि विधृताः सारसौभाग्यलोभात्
कैलासस्थत्रिनयनवधूक्षालिताङ्गास्तरङ्गाः ॥ ३६ ॥

यः संतोषं चरितविषये पूर्वपुंसां न भेजे
सारग्राही रघुपतिकथामत्सरादेकवीरः ।

चक्रुः[1] क्रीडोद्धृतहरगिरेस्ते हि रोहत्कलङ्का
लङ्काभर्तुर्भुजतरुवनच्छेदनं[2] नार्धचन्द्रैः ॥३७॥

चम्पासीम्नि क्षितिपतिकथाधाम्नि दार्वाभिसारे
त्रैगर्तीषु क्षितिषु भवने भर्तुलक्ष्मोणिभर्तुः ।
क्रीडाशैलीकृतहिमगिरेर्हासभीतेव यस्य
भ्राम्यत्याज्ञा सुकृतवसतेर्भूः प्रता[3]पोदयानाम् ॥३८॥

कृत्वा मध्ये मठमनुपमोत्तुङ्गदुर्गानुकारं
वैतस्तेन ग्रथितपरिखारेखमम्भोभरेण ।
लग्नाः शृङ्गैर्नभसि विजयक्षेत्रभट्टाग्रहाराः
प्राकारत्वं कलिभयभिदे येन धर्मस्य नीताः ॥३९॥

देवी तस्य प्रचुरयशसश्चन्द्रिकेवेन्दुजाता
याता ख्यातिं जगति सुभटेत्यादिभार्या बभूव ।
मन्ये यस्याः स्थितिमनुपमां सापि कुण्ठानुकर्तुं
वैकुण्ठोरःस्थलजलधरोत्सङ्गसौदामिनी श्रीः ॥४०॥

तस्यास्त्यागव्रतविलसिते कः परिच्छेदमुद्रा-
माविष्कर्तुं प्रभवति दयाक्षान्तिदाक्षिण्यसीम्नः ।
लक्ष्मीं यस्याः क्षितितलगतां पाददासीमकार्षीद्
भर्तुः क्षोणीपतिशतशिखारत्नशाणः कृपाणः ॥४१॥

---

१ क्रुद्धः रा. । २ -च्छेदन प्र. । ३ -वसतेर्भूप्रता- ब. ; -वसतेर्भ्रं-
प्रता-रा. ।

नो कायस्थैः कुटिललिपिभिर्नो विटैश्चाटुदक्षै-

र्न प्रत्यक्षस्तवनपटुभिर्लुण्ठिता[1] गायनैश्च ।

देवागारद्विजगुरुगृहाण्येव यत्संगृहीता

याता लक्ष्मीर्निजचपलतादोषशुद्ध्यर्थिनीव ॥४२॥

श्रीकाश्मीरक्षितिभुजि गते वश्यतां यद्गुणाना-

मूहुश्चिन्ताक्लमपरिचयं कानि नान्तःपुराणि ।

स्वच्छा कीर्तिर्नभसि बिसिनीपत्रमित्रे लुलोठ

श्च्योतद्धारासलिलमकरोद्धाम लक्ष्मीः कृपाणम् ॥४३॥

कीर्तिज्योत्स्नास्नपितभुवनश्रीरधिष्ठानमध्ये

शोभाज्येष्ठं मठमकुरुत स्वीयनामाङ्कितं सा ।

यस्मिन्विद्यारसिकमनसामास्पदे देशिकानां[2]

का नामाक्ष्णोर्व्रजति न सुधावर्तितां नर्तितश्रीः ॥४४॥

भाण्डागाराण्यकृत विदुषां सा स्वयं भोगभाञ्जि

स्वातन्त्र्येण ग्रहणमवनेर्ब्राह्मणानामवादीत्[3] ।

यामस्तम्बेरमसहचरस्फूर्जदाशागजेन्द्र-

क्षोणीकोशप्रणयिनि यशस्येव रक्षामकार्षीत् ॥४५॥

चक्रे धाम त्रिभुवनगुरोः सा वितस्तासमीपे

कामारातेः शिखरनिकरक्षुण्णनक्षत्रमार्गम् ।

---

१ -लुंठिता ज.; -लुंटिता प्र. । २ 'देशिकानां' इति सर्वत्र ।
३ -मवनैर्ब्राह्मणा- प्र. ।

कूजत्काञ्चीनिवहपिहितज्याध्वनिर्नर्तकीनां
यस्योपान्ते भवति न भवक्रोधपात्रं मनोभूः ॥४६॥

यस्य भ्राता[1] क्षितिपतिरिति क्षात्रतेजोनिधानं
भोजक्ष्माभृत्सदृशमहिमा लोहराखण्डलोऽभूत् ।
शङ्के लक्ष्म्याः शिरसि चरणं न्यस्य वक्षःस्थितायाः
प्राप्ता लीलातिलकतुलनां यन्मुखे सूक्तिदेवी ॥४७॥

यस्य प्राप्ताद्भुतपरिणतेः कर्कशे तर्कमार्गे
त्यागः कासां विचरति गिरां गोचरे कान्तकीर्तिः ।
येन न्यस्ता दलितविपदां कोविदानां गृहेषु
श्रीर्नाद्यापि स्वपिति ललनाभूषणानां निनादैः ॥४८॥

गण्डा[2]भोगोड्डमरविलुठद्बाष्पधाराशतेन
व्यातन्वानः कुचयुगतटीः पङ्किलाः सुन्दरीणाम् ।
यस्य क्रीडाकवलमकरोद्राजपुर्याः प्रतापं
बाहुर्बाहुस्थलकमलिनीराजहंसाम्बुवाहः ॥४९॥

श्रोणीबन्धे कुवलयदृशां द्रागवज्ञारसज्ञैः[3]
पार्श्वद्वन्द्वेऽप्यतनुत सभामण्डनं पण्डितालीम् ।
रत्नच्छायाच्छुरणसुभगै[4]स्वर्णपत्रावमानी
मानी मेने श्रवसि च कथां वैष्णवीं भूषणं यः ॥५०॥

---

१ 'यस्या भ्राता' इति सर्वत्र । २ गंड- प्र. । ३ -रसज्ञैः ब. ।
४ -च्छुरणशुभग- ज. ।

पुण्यैरैरावतकरिकरोच्चण्डदोर्दण्डशाली
देव्यां तस्यां कलशनृपतिस्तस्य जातस्तनूजः ।
सङ्ख्योत्सङ्गादपसृतवतां भूभुजां वल्लभा श्रीः
खड्गे यस्य द्विपमदमषीपङ्कलिप्ते लुलोठ ॥५१॥

दर्पाध्मातप्रतिभटनृपव्रातसेनाशिरांसि
त्यक्त्वा सान्द्रोल्लसदसिलताशैवलश्यामलानि ।
हेमाम्भोजप्रतिमवदनालोकनादेव यस्य
प्राप्ता लक्ष्मीश्चरणनिकटं कीर्तिहंसावतंसा ॥५२॥

दिग्यात्रासु स्फटिकविशदच्छायमच्छोदमेत्य
श्राम्यन्निन्द्रायुधखुरपुटोट्टङ्कितासु स्थलीषु ।
कादम्बर्याः परिजनमसौ मर्त्यलोकैकचन्द्र-
श्चन्द्रापीडस्तुतिषु विदधे संकुचद्वाग्विलासम् ॥५३॥

येनोदीच्यां दिशि गतवता वन्दितोऽसौ गिरीन्द्र-
श्चञ्चच्चण्डीपतिवृषखुरक्षोदलेखावतंसः ।
शङ्के लङ्कापतिकरतलोत्क्षेपलोलस्य यस्य
त्रस्ताः केचित्तलभुवि गणा नाधुनाप्युच्छ्वसन्ति ॥५४॥

धृत्वा काश्चित्कनककपिशाः कौतुकाद्यक्षकन्याः
प्रत्यागच्छन्धनपतिपुरादुत्तरं मानसं यः ।

---

१ कलस- ज. । २ -पुटोद्वङ्कितासु प्र. । ३ श्रान्ताः श. ।

दत्ताश्लेषं हरमुकुटतः स्रस्तया नाकनद्या
हेमाब्जानामकृत वसतिं मानसादाहृतानाम् ॥५५॥

यस्योदारां परिकलयतः शस्त्रशास्त्रप्रतिष्ठां
द्वे प्रेयस्यौ जगति विदिते श्रीश्च वाग्देवता च ।
एका भेजे भुजमभिनवाम्भोदनीलोत्पलपत्रा
श्वेतच्छत्रायितसितयशश्चन्द्रिकान्या मुखेन्दुम् ॥५६॥

अश्वैः कृत्वा पवनगतिभिर्लङ्घनं वालुकाब्धे-
र्यः स्त्रीराज्यं व्यजयत जयापीडतुल्यप्रभावः ।
तत्र श्लाघामसहत पुनर्नैकवीरः स यस्मात्
सव्रीडोऽभूदपि रघुपतौ ताडके ताडकायाः ॥५७॥

यत्खड्गस्य स्मरणवशतः कालजिह्वासनाभे-
स्त्रासोल्लासत्रुटितमदनोन्मादमुद्रा नरेन्द्राः ।
हर्षं वर्षाजलदपटले कुन्तलेष्वङ्गनानां
क्षोणीलेखास्वपि च मुमुचुः शाद्वलश्यामलासु ॥५८॥

दृष्ट्वा देव्याः कुचपरिसरे हर्षदेवस्य मातु-
स्तुष्टः सेवानतधनपतिप्राभृतैकावलीं यः ।
कर्तुं वाञ्छन्नखिलभुवनाश्चर्यमस्योपकारं
प्रत्यानीते रघुपतिशरैः पुष्पके खेदमाप ॥५९॥

खड्गे कुण्ठीभवति शिरसां छेदतः खेदमागाद्
यः शाणार्थी हरशिखरिणा प्राग्गृहीतोज्झितेन ।

---

१ भ्रस्तया ज. । २ -नवाम्भोजलीला- रा. । ३ -प्राभृतैः कावली प्र. ।

यः पौलस्त्यं तमपि जितवान्सोऽपि यस्योपमायां
शङ्के लोकोत्तरगुणनिधेर्मुद्रितो रामभद्रः ॥६०॥

मन्थक्षोणीधरविदलिताम्भोधितीव्रक्रुधेव
क्ष्माभृन्मूलान्यपि दलयति व्यायतैर्या तरङ्गैः ।
सेनाचक्रक्षपितसलिलां तां चकार स्थलं यः
श्रीकाश्मीर[1]क्षितिकुमुदिनीचन्द्रमाश्चन्द्रभागाम् ॥६१॥

धत्ते यस्यास्तपनदुहितुः शेषकल्लोललीलां
नीलच्छाया तुरगपटली भास्करस्याधुनापि[2] ।
तां कालिन्दीं सकलजयिनो यस्य सेनासमूहः
पृथ्वीलीलालुलितकबरीमेचकामाचचाम ॥६२॥

उर्वीमुर्वीधरसहचरैः पूरयन्यो यशोभि-
स्तन्निः शेषक्षितिपरिजयी कौरवं क्षेत्रमागात् ।
यत्र क्षत्रक्षतजपटले पार्थबाणाभिघातैः
कर्णभ्रष्टं कुरुपतियशोदन्तपत्रं ममज्ज ॥६३॥

यस्य प्रेयान्प्रथमतनयः कं न चक्रे सहर्षं
श्रीहर्षादप्यधिककवितोत्कर्षवान्हर्षदेवः ।
तीक्ष्णः स्वस्मिन्कनकवलये येन चक्रे रणेषु
क्ष्माभृच्चूडामणिकषणतः कुण्ठधारः कृपाणः ॥६४॥

यस्यापूर्वा पदपरिणतिः कापि चर्याविचारे
वाक्चातुर्ये प्रसरति गतिर्वादिनां मौनमुद्रा ।

---

१ श्रीकश्मीर- ज. । २ भास्करस्याधुनापि रा. ।

प्रख्यातं तत्त्रिजगति पुनः सर्वभाषाकवित्वं
यस्यास्वादे भवति सिकताकर्कशा[1] शर्करापि ॥६५॥
येनोत्कण्ठाव्यसनगुरुणा दत्ततापास्तरुण्यः[2]
स्वस्मिन्मूर्छाक्लमपरवशा बाष्पपङ्के लुठन्ति ।
तासां गण्डस्थलभुवि पुनः पाण्डिमा वर्ण्यते किं
यत्र स्पष्टीभवति शपथैः श्रोत्रयोर्दन्तपत्रम् ॥६६॥
दुर्गं प्राप्य क्षितिपतियशोधाम यस्यानुजोऽसौ
कस्याकार्षीन्न खलु पुलकोत्कर्षमुत्कर्षदेवः ।
येनारोप्य स्वभुजशिखरे निर्मिता दूरमुर्वी
म्लेच्छक्षोणीपतिहरिखुरक्षोदमुद्रादरिद्रा ॥६७॥
नाम्नापरो विजयमल्ल इति प्रतापी
भूपस्य तस्य तनयो नयनाभिरामः ।
पुष्पोपहारवति नूतनदन्तकान्त्या
वाग्देवता व्यधित यस्य मुखे प्रवेशम् ॥६८॥
नित्याभ्यासात्परिणतलिपेः स्रष्टुराश्चर्यलेखं
तल्लावण्यं वपुषि ललिते तस्य भूपालसूनोः ।
यत्र स्फूर्जल्लटभललनालोकलोभैकपात्रे
जागर्ति ज्यानिनदमुखरः संततं पुष्पचापः ॥६९॥
तस्मादस्ति प्रवरपुरतः सार्धगव्यूतिमात्रीं[3]
भूमिं त्यक्त्वा जयवनमिति स्थानमुत्तुङ्गचैत्यम् ।

१ सिकता- ज. । २ 'दत्तपातास्तरुण्यः' इति सर्वत्र । ३ -मात्रीं रा. ।

कुण्डं यस्मिन्नमलसलिलं तक्षकस्याहिभर्तु[1]-

र्धर्मध्वंसोद्यतकलिशिरश्छेदचक्रत्वमेति ॥७०॥

यस्यास्ति खोनमुष[2] इत्युपकण्ठसीम्नि

ग्रामः समग्रगुणसंपदवाप्तकीर्तिः ।

आलानरूपबहुयूपवति प्रविष्टं

नो यत्र बन्धनभियेव कलिद्विपेन ॥७१॥

ब्रूमस्तस्य प्रथमवसतेरद्भुतानां कथानां

किं श्रीकण्ठश्वशुरशिखरिक्रोडलीलाललाम्नः ।

एको भागः प्रकृतिसुभगं कुङ्कुमं यस्य सूते

द्राक्षामन्यः सरससरयू[3]पुण्ड्रकच्छेदपाण्डुम् ॥७२॥

कर्तुं कीर्तिप्रणयि कुशलाः कौशिकं गोत्रमुच्चै-

स्तत्र ब्रह्मप्रवणमनसो ब्राह्मणाः केचिदासन् ।

यान्काश्मीरक्षितितिलकतां मध्यदेशावतंसान्

गोपादित्यक्षितिपतिरसौ पावनानानिनाय ॥७३॥

कीर्तिं येषां शतमखसखीमुत्सुकानामवाप्तुं

धूमस्तोमे मखपरिचिते पूरयत्यन्तरिक्षम् ।

नो केषाञ्चिद्वचनमश्रृणोत्त्रों[4]करोन्नाकचिन्तां

शक्रश्चित्रार्पित इव परं छायया भूद्दरिद्रः ॥७४॥

---

१ -स्यादिभर्तु- रा. । २ 'खोनमुख' इति सर्वत्र । ३ सरससयू- प्र. ।
४ -मसृणोक्ता- ज. ।

तेषां जगत्त्रयपवित्रचरित्रभाजां
धत्ते स्म मुक्तिकलशः कुलशेखरत्वम्[1] ।
यस्याग्निहोत्रपरिशीलनजेन जाता
स्वेदाम्भसेव कलिकालकलङ्कशान्तिः ॥७५॥

शङ्के पङ्केरुहवसतिना स्थापिताः शान्तिहेतो-
रन्योन्येर्ष्याकलहचतुरा याश्चतुर्ष्वाननेषु ।
एकत्रैव स्वमुखकमले लीलया वल्लभानां
चक्रे तासामपि चतसृणां यः श्रुतीनां निवासम् ॥७६॥

दाता पराक्रमधनः श्रुतपारदृश्वा
नाम्नास्य राजकलशे[2]स्तनयो बभूव ।
प्रालेयभूधरगुहास्तिमिरच्छलेन
यस्याधुनापि मखधूममिवोद्वहन्ति[3] ॥७७॥

द्राक्षापूर्णान्यखिलजनताभोगहेतोर्वनानि
व्याख्यास्थानान्यमलसलिला यस्य कूपाः प्रपाश्च ।
स्थाने स्थाने सुकृतवसतेर्मण्डलाग्रावतंसा
धर्मस्याविष्कृतकलिभयस्याङ्गरक्षा बभूवुः ॥७८॥

क्षमासारः सारस्वतरसनिधानं श्रुतिनिधिः
समुत्पन्नस्तस्मादमलयशसो ज्येष्ठकलशः ।
महाभाष्यव्याख्यामखिलजनवन्द्यां विदधतः
सदा यस्यच्छात्रैस्तिलकितमभूत्प्राङ्गणमपि ॥७९॥

---

१ –शेषरत्वम् ज. । २ –कलस – ज. । ३ 'द्वमन्ति' इति सर्वत्र ।

इष्टापूर्तेष्वतिथिविषये सान्त्वने सेवकाना-

मन्येष्वन्येष्वपि च गहनं किं नु तस्योचितेषु ।

दृष्टादृष्टोपकरणगणप्रापणे यः प्रवीणां

नागादेवीमलभत शुभस्तोमपात्रं कलत्रम् ॥८०॥

अङ्गैस्त्वङ्गत्कनकरुचिभिः कार्मणं[1] लोचनानां

सूरेस्तस्मादजनि जगतां शेखरो बिल्हणाख्यः ।

सान्द्रैर्वेदध्वनिभिरनभिव्यक्तमञ्जीरनादा

मौञ्जीबन्धात्प्रभृति वदने यस्य वाग्देवतासीत् ॥८१॥

साङ्गो वेदः फणिपतिदिशौ शब्दशास्त्रे विचारः

प्राणा यस्य श्रवणसुभगा सा च साहित्यविद्या ।

को वा शक्तः परिगणयितुं श्रूयतां तत्त्वमेतत्

प्रज्ञादर्शे किमिव विमले नास्य संक्रान्तमासीत् ॥८२॥

चक्रं यस्याक्रियत वदनप्रेक्षि विद्यावधूनां

श्रीवाग्देव्याश्चरणरजसा कार्मणत्वं गतेन ।

याताः सार्धं दिशि दिशि पुनर्बन्धुराः सर्गबन्धाः[2]

कीर्तेः पारिप्लवविदलने सौविदल्ला बभूवुः ॥८३॥

विद्वत्तायाः स खलु शिखरं प्राप यस्येष्टरामो

ज्येष्ठो भ्राता क्षितिपतिशतास्थानलीलावतंसः ।

वक्त्रे काव्यामृतरसभरास्वादसक्तैर्यदीये[3]

दृष्टा देवी सुकविजननी सा प्रपापालिकेव ॥८४॥

---

१ -प्रतिदृशा ज., ब.। २ सर्वबन्धाः र.। ३ -स्वादशक्तैर्यदीये ज., ब.।

यस्यानन्दः समजनि यशोभाजनस्यानुजोऽसौ
स्पर्धाबन्धोद्धुरकविमदच्छेदलीलाकुठारः ।
प्रस्थे दौःस्थ्यं हिमशिखरिणः प्राप्य काठिन्ययोगा-
ज्जाने जिह्वाकिसलयसखी शारदा यस्य जाता ॥८५॥

काश्मीरेभ्यः सकलममलं[1] शास्त्रतत्त्वं गृहीत्वा
प्रालेयाद्रेरपि गुणमसौ निश्चितं स्वीचकार ।
देशे देशे कथमपरथा वादिनामाननानि
क्रुद्धश्चक्रे तुहिनपटलप्लुष्टपद्मोपमानि ॥८६॥

दोलालोलद्घनजघनया राधया यत्र भग्नाः
कृष्णक्रीडाङ्गणविटपिनो नाधुनाप्युच्छ्वसन्ति ।
जल्पक्रीडामथितमथुरासूरिचक्रेण केचित्
तस्मिन्वृन्दावनपरिसरे वासरा येन नीताः ॥८७॥

निःसामान्यश्रुतगुणकथादत्तवादिज्वराणां
छात्रौघानां दिशि दिशि हठात्तन्वतां यद्यशांसि ।
आसीदाशागजमदजलास्वादमत्तद्विरेफ-
श्रेणीगीतध्वनिकलकलः केवलं सोऽन्तरायः ॥८८॥

ग्रामो नासौ न स जनपदः सास्ति नो राजधानी
तन्नारण्यं न तदुपवनं सा न सारस्वती भूः ।
विद्वान्मूर्खः परिणतवया बालकः स्त्री पुमान्वा
यत्रोन्मीलत्पुलकमखिला नास्य काव्यं पठन्ति ॥८९॥

---

१ सकलमलं प्र. ।

यस्योत्तुङ्गैर्मणिमयगृहैर्लीलयोत्तारिता श्री-
व्योमोत्तंसा त्रिदश[1]पुरतः प्राप्तसोपानलीलैः ।
द्वारे गङ्गां कृतकलकलां तर्जयित्वा प्रविष्टा
कीर्तिर्यस्य स्ववशमकरोत्तत्पुरं कान्यकुब्जम् ॥९०॥

धर्मस्येव व्युपरतकलेर्यत्र गीर्वाणसिन्धु-
स्रोतःकोशे[2] विशति यमुनावेणिभङ्ग्या कृपाणः ।
तस्मिन्वारान्कति न कृतिना तीर्थनाथे प्रयागे
दत्ता विश्वाद्भुतगुणगणोपार्जिता येन लक्ष्मीः ॥९१॥

मन्ये भ्राम्यत्कलियुगभयादागतस्योपकण्ठे
धर्मस्याध्वश्रमविरमणं शीकरैर्या करोति ।
वाराणस्यां[3] पुरि परिहृतो येन तस्यां द्युसिन्धौ
स्नात्वा दैवोपनतकुनृपालोकनोत्थः कलङ्कः ॥९२॥

कालः कालञ्जरगिरिपतेर्यः प्रयाणे धरित्रीं
तुरुखाराणां[4] खुरपुटरवैः क्ष्मापशून्यां चकार ।
श्रीडाहालक्षितिपरिवृढः सोऽपि यं प्राप्य वृत्तं[5]
कर्णः कर्णामृतरसभरास्वादमन्तस्ततान ॥९३॥

यस्यातृप्तैः[6] स्फटिकगिरिणा तं विनिक्षिप्य वामे
प्रालेयाद्रेः क्षणमभिमुखो दक्षिणः पाणिरासीत् ।

---

१ -संसात् त्रिदश- रा. । २ -कोशो रा. । ३ वाणारस्यां ज., ब. ।
४ तुरुष्काराणां ज. । ५ वृत्तं ज. । ६ यस्याहसः प्र. ।

तं पौलस्त्यं विदलितवतः सूक्तिनिःस्यन्दशीतां
सीताभर्तुर्व्यरचयदसौ राजधानीमयोध्याम् ॥९४॥

नीत्वा गङ्गाधरमधरतां डाहलाधीशधाम्नि
क्रीडाक्रान्तप्रतिभटकवेः पूर्वदिक्कोटरेषु ।
निर्जित्यैरावतमदजलभ्रान्तभृङ्गालिनादान्
सुत्राम्णोऽपि श्रवसि लुठितं यस्य शङ्के कथाभिः॥९५॥

भोजः क्ष्माभृत्स खलु न खलैस्तस्य[1] साम्यं नरेन्द्रै-
स्तत्प्रत्यक्षं किमिति भवता नागतं हा हतास्मि ।
यस्य द्वारोड्डमरशिखरक्रोडपारावतानां[2]
नादव्याजादिति सकरुणं व्याजहारेव धारा ॥९६॥

कक्षाबन्धं विदधति न ये सर्वदैवाविशुद्धा-
स्तद्भाषन्ते किमपि भजते यज्जुगुप्सास्पदत्वम् ।
तेषां मार्गे परिचयवशादर्जितं गुर्जराणां
यः संतापं शिथिलमकरोत्सोमनाथं विलोक्य ॥९७॥

तामप्येष क्षितिपतिशतालोकनौत्सुक्ययोगा-
दाचक्राम[3] क्रमुकविटपिश्यामलामब्धिवेलाम् ।
यत्र स्वेच्छाप्रसरमधुनाप्यम्बुराशेर्भिनत्ति
क्षिप्ता तीक्ष्णप्रहरणमिषाद्भार्गवेणार्गलेव ॥९८॥

खल्वाटत्वं शिरसि घटयन्नम्बुधेर्यश्चकासे
लङ्कानाथापहृततनयापृष्ठलग्नेव धात्री ।

---

१ खलैर्यस्य श. । २ –पारापतानां ज. । ३ –त्सुक्यायोदचक्राम प्र. ।

सीतां[1]वार्ताश्रवणचकितेवान्तिके राक्षसानां
सेतोस्तस्माद्यदि परमगान्नास्य कीर्तिः परस्तात् ॥९९॥

सामान्योर्वीपतिषु विमुखः शेखरोऽसौ बुधानां
यातस्तस्यां ककुभि शनकैः कौतुकी दक्षिणस्याम् ।
यल्लोलाक्षीकुचतटभुवां ब्रूमहे किं गुरुत्वं
यासां शिष्यस्त्रिभुवनजयी जृम्भते पञ्चबाणः ॥१००॥

नीलच्छत्रोन्मर्द[2]गजघटापात्रमुत्त्रस्तचोला-
च्चालुक्येन्द्राद्लभत कृती योऽत्र विद्यापतित्वम् ।
अस्मिन्नासीत्तदनु निबिडाश्लेषहेवाकलीला-
वेल्लद्वाहुक्कणितवलया[3] संततं राजलक्ष्मीः[4] ॥१०१॥

दिङ्मातङ्गैरपि सपुलकैः शुश्रुवे यस्य कीर्ति-
र्निद्रामुद्राप्रणयिषु मदास्वादतः षट्पदेषु ।
तेन प्रीत्या विरचितमिदं काव्यमव्याजकान्तं
कर्णाटेन्दोर्जगति विदुषां कण्ठभूषात्वमेतु ॥१०२॥

लब्धा लक्ष्मीर्दिशि दिशि कृताः सम्पदः साधुभोग्याः
प्राप्ता योग्यैः सह कलहतः कुत्र नोच्चैर्जयश्रीः ।
गोष्ठीबन्धः सपदि सुजनैः सारनिष्कर्षदक्ष-
प्रज्ञालब्धस्तुतिभिरचिराद्स्तु काश्मीरकैर्मे ॥१०३॥

---

१ शीता- ज. । २ -च्छत्रोन्नद- रा. । ३ -क्कणितविक्कवलया प्र. ।
४ -लक्ष्मी ज.

आरुक्षाम नृपप्रसादकणिकामद्राक्ष्म लक्ष्मीलवान्

किञ्चिद्वाङ्मयमध्यगीष्महि गुणैः कांश्चित्पराजेष्महि ।

इत्यज्ञानमयीमकार्ष्म कियतीं नानर्थकन्थां मनः

स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यमर्त्यापगाम् ॥१०४॥

मन्दाकिन्याः पवनचटुलोत्ताल[1]वीचीदुकूले

कूलोत्सङ्गे विरचितवतां योगनिद्राभियोगम् ।

शेषाः केषामपि परिणतौ वासराः पुण्यभाजां

शान्तस्वान्तस्थितगिरिसुतावल्लभानां प्रयान्ति ॥१०५॥

स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः

प्राणानां सततप्रयाणपटहश्रद्धा न विश्राम्यति ।

त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतै-

स्तानाराध्यपदे विधत्त[2] सुकवीन्निर्गर्वमुर्वीश्वराः ॥१०६॥

हे राजानस्त्यजत सुकविप्रेमबन्धे[3] विरोधं

शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात् ।

तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं

रुष्टैर्नीतस्त्रिभुवन[4]जयी हास्यमार्गं दशास्यः ॥१०७॥

यस्य स्वेच्छाशबरचरितालोकनत्रस्तयेव

न्यस्तरचूडाशशिकलिकया क्वापि दूरे कुरङ्गः ।

---

१ –चटुलोताल प्र. । २ –राध्य विधत्त प्र. ; –राध्य गुरून्विधत्त ब. ।
३ –प्रेमप्रबन्धे प्र. । ४ रुद्धैर्गीतस्त्रिभुवन– प्र. ; क्रुद्धैर्नीतस्त्रिभुवन ब. ।

स व्युत्पत्तिं सुकविवचनेष्वादिकर्ता श्रुतीनां
देवः प्रेयानचलदुहितुर्निश्चलां वः करोतु ॥१०८॥

इति श्रीविक्रमाङ्कदेवचरिते महाकाव्ये त्रिभुवनमल्लदेवविद्यापति-
काश्मीरकभट्टश्रीबिल्हणविरचितेऽष्टादशः सर्गः ॥ १८ ॥

---

इति श्रीत्रिभुवनमल्लदेवविद्यापतिकाश्मीरकभट्टश्रीबिल्हणस्य कृतिर्विक्रमाङ्क-
देवचरिताभिधानं महाकाव्यं समाप्तम्[1] ॥

---

१ 'कृतिर्विक्रमांकाभिधानं समाप्तम् । छ । एवं जातग्रंथाग्रं २५४५' इति ज. ।

अथ

# ❧ चरितचन्द्रिका ❧

१–काव्येऽस्मिन्वीररसोऽङ्गीति मङ्गलेनैव ध्वन्यते । ऊर्ध्वगाम्युपरिष्टात्प्रसरणशील:, भुजप्रभादण्डो दण्डायमान: करकान्तिकलाप: । कंसरिपोर्मुरारे: । पाञ्चजन्य: 'शङ्खो लक्ष्मीपते: पाञ्चजन्य:' इत्यमर: । भङ्गी व्याज: । धाराम्भस: कृपाणधाराजलस्य । व्यनक्ति प्रकटयति । २–श्रीधाम्नि–श्रिय: कमलाया: शोभायाश्च धाम्न्याश्रये । दुग्धोदधिपुण्डरीके–दुग्धोदधिरेव पुण्डरीकं सिताम्भोजं तस्मिन् । चञ्चरीको भ्रमर: । भूतिरैश्वर्यम् । ३–जगन्ति कर्म । गरुडध्वजो विष्णु: । श्रियो लक्ष्म्या: । विभाव्यते ज्ञायते । सौभाग्यहेम्न:–सौभाग्यम् [ श्रिय: ] एव हेम तस्य । कषपट्टिका कषपाषाण: ( हि[1]. कसौटी ) । ४–एको वाम: । परस्य दक्षिणस्य स्तनस्य । वार्त्ता वृत्तान्तम् । मुखाग्रं पार्वत्या मुखाग्रभागम् । प्रियार्धस्थितिम्–प्रियस्यार्द्धनारीश्वरस्य शिवस्य, अर्द्धे स्वीये दक्षिणाङ्गे, स्थितिस्ताम् । पर्वतराजपुत्री पार्वती । ५–नन्दको लक्ष्मीपते: खड्ग: । नन्दकस्य यमुनाप्रवाहेण, लक्ष्म्याश्च राधया साम्यमिति श्रीकृष्णस्य स्मृति: संगच्छते । ❀ राधा विष्णुभार्या ❀ । ६–पार्श्वस्थेति–पार्श्वस्थाया वामाङ्गस्थिताया: पृथ्वीधरराजकन्याया: पार्वत्या: प्रकोपस्येर्ष्याजन्यक्रोधस्य विस्फूर्जितेन विचेष्टितेन विलासेन वा कातरस्य भीतस्य । मात: सम्बोधनम् । सन्ध्याविषया: सन्ध्यामुद्दिश्य विहिता: । एकदा शिव: सन्ध्यां कामयमान: पार्वत्यां भृशं कुपितायां व्याजवचनै: स्वापराधं जुगोपेति कथात्रानुसन्धेया । ७–वाचस्पतिमत्सरेण ग्रहसाम्येऽप्येष

---

१ हि.=हिन्दीभाषायाम्।

❀ ईदृशचिह्नद्वयान्तर्वर्तिनी टिप्पणी जैसलमेरग्रन्थस्थेत्यवगन्तव्यम्।

सुराचार्यो गुरुर्वाचस्पतिरित्यसूयया। साराणि तत्त्वभूतानि। ग्रहमण्डली ग्रहसमुदायः। मुक्ताक्षसूत्रत्वं मौक्तिकाक्षमालिकाभावम्। ८–करशीकराणां शुण्डादण्डोत्क्षिप्तजलबिन्दूनाम्। इभाननो गणेशः। तादृशशीकराणां तथाविधमन्त्राक्षतत्वेनोत्प्रेक्षणम्। इति मङ्गलम्। ९–अथोपक्रमणिकां प्रस्तौति। वैदर्भरीतौ तादृशवृष्टेस्तादृशजन्मभूमेस्तादृशस्य च प्रतिभूत्वस्य प्रतिलम्भकत्वस्यारोपः। केवलं भाग्यवन्तः कुशलाश्च तथाविधालौकिकगुणविशिष्टवैदर्भरीतौ काव्यं विरचयितुं प्रभवन्ति। १०–ते कवयः सहृदयाश्च। पञ्चमनादः संगीतशास्त्रप्रसिद्धः पञ्चमः स्वरः। मित्रपदेन सादृश्यं प्रतीयते। ११–साहित्यमेव पाथोनिधिः। लुण्ठनायापहरणाय। प्रगुणीभवन्ति प्रचुरीभवन्ति। १२–सर्वे क्षुद्राः काव्यार्थचौराः कवयः। लुप्तेषु मन्थनेनापहृतेषु। अमर्त्यैर्देवैः। सिन्धुः सागरः। १३–विशारदानां कुशलानां प्राचीनकवीनाम्। वैदर्भलीला वैदर्भीरीतिविलासः। प्रबन्धाः काव्यानि। सचेतसः सहृदयाः। अत्र प्रस्तुते काव्ये। १४–साहित्येति–अरसिकेषु। किं कुर्याद्विफल एवेति भावः। वासः सुगन्धिः। १५–प्रौढिर्लोकोत्तररचनाचातुरी। पुराणरीतिः प्राचीना पद्धतिर्वैदर्भीप्रभृत्यन्यतमा वा। ८ सर्गे ४५ श्लोकोऽवलोक्यः। १६–व्युत्पत्तिरलौकिकरचनाकौशलम्। आवर्जितेति–आवर्जिता रञ्जिताः कोविदा बुधा यया यस्या वा। टङ्किका पाषाणभेदनसाधनम्। १७–ते सहृदयाः। कथान्तरेषु कुकविरचनासु। ग्रन्थिपर्णं सुगन्धिमद्वृक्षविशेषः। 'ग्रन्थिपर्णं शुकं बर्हिपुष्पं स्थौणेयकुक्कुरे' इत्यमरः। 'कुक्कुरवद्रा'इति व्याख्यासुधा (भानुजिदीक्षितकृतामरटीका)। १८–जडेष्वज्ञजनेषु। खला नीचाः कवयः। कवीन्द्रोक्तिषु–सभासु प्रवर्त्तमानासु प्रतिस्पर्द्धिनीषु वा। के वराकास्ते मौनमेवावलम्बन्ते पराजिता एव भवन्तीति वा। अथवा कवीन्द्रोक्तिप्रतिस्पर्द्धिरचनायामसमर्था एवेति भावः। प्राप्तेति–जलेन वह्निः शान्तिं याति न पुनर्मणीनां प्रकाशः। १९–उल्लेखः ※ अभिप्रायोऽन्यत्रोल्लिखनम् ※; गुणपरीक्षणं समालोचनं वान्यत्र शाणोत्कर्षणेनोज्ज्वलीकरणम्। घटना रचना। सचेतसां सहृदयानाम्। वैकटिको रत्नपरी-

क्षकः । विवेचकाः सहृदया मत्सूक्तीर्विचारयन्त्विति तात्पर्यम् । २०–इह परगुणानामसहने । द्वेष्यैवेति–'पित्तेन दूने रसने सितापि तिक्तायते मानसराजहंस' इति श्रीहर्षः । २१–सहोदरा एकदेशजत्वाद् भ्रातरः । कुङ्कुमस्य काश्मीरजन्मनः केसराः किञ्जल्कास्तेषाम् । शारदायाः सरस्वत्या आदेश आज्ञा प्रसादो वान्यत्र काश्मीरदेशः । २२–रसध्वनेरिति-काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यमेतत्काव्यतत्त्वमिति भावः । २३–अनन्यसासान्यगुणत्वमसाधारणगुणवत्त्वम् । अनर्थाय फलाभावायैव । अल्पप्रतिभा जडाः । सभासु सुलभा अल्पप्रतिभा एषां जल्पं ज्ञातुं न क्षमन्त इत्यन्वयः । २४–उल्लेखश्चमत्कारोऽन्यत्र स्वर्णश्रेष्ठतासूचयित्री रेखा । विदग्धचेतांस्येव कषपट्टिकास्तासु । कण्ठाभरणत्वं हृदयालङ्कारताम् । २५–किं कुर्वन्ति न किमपीति भावः । दिव्यचरिता एव भूपतयः कवीनामाश्रया भवन्ति । किं किं प्रयोजनम् । जातु कदाचिदपि । २६–जानाति परमिति योज्यम् । राज्ञां यशसोऽपयशसो वा कवीश्वरा एव निदानम् । उक्तमेव राजतरङ्गिणीकारेण कविवरेण कल्हणेन—

भुजवनतरुच्छायां येषां निषेव्य महौजसां
जलधिरशना मेदिन्यासीदसावकुतोभया ।
स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं
प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ।

२७–पूर्वोक्तमेवार्थं प्रपञ्चयति । रघुराजपुत्रो रामचन्द्रः । आदिकवेर्वाल्मीकेः । २८–प्रवृत्तिर्व्यापारः । नृपतेर्विक्रमाङ्कदेवस्य । अभ्रसिन्धुर्मन्दाकिनी । २९–कर्णामृतं श्रवणयोः सुधावदानन्ददायि । दोषे दोषस्यैवान्वेषणे । केलिवनं क्रीडोद्यानम् । क्रमेलक उष्ट्रः । ३०–वंशः कुलं वेणुश्च । गुणा एव मौक्तिकानि तेषाम् । मङ्कारतीति–मङ्कारती कविवाण्येव सूत्रं तत्र निवेशितानां गुम्फितानाम् । एकावल्येकावृतो हारः । वो युष्माकं सहृदयानाम् । इत्युपक्रमणिका । ३१–सांप्रतं चालुक्यकुलमूलपुरुषोत्पत्तिं प्रस्तौति । विश्रुतो विख्यातः । सरस्वती वाग्देवी वाङ्मयं वा । सरस्वती ब्रह्मणः पत्नीति पुत्रीति चेत्युभयथापि लोकैरभ्युपगम्यते । भूरुत्पत्तिस्थान-

माश्रयो वा। स्वयंभूर्ब्रह्मा। ३२–ब्रह्मणः कमलासनत्वं लोकप्रसिद्धम्। आराधितः प्रसन्नः। यो ब्रह्मा। कुटुम्बं जातिम्। लक्ष्मीपदम्–लक्ष्म्याः कमलायाः शोभायाश्च पदं निवासस्थानम्। ३३–ब्रह्मर्षिभिर्मुनिश्रेष्ठैः सह। ब्रह्ममयीं परब्रह्मसम्बन्धिनीम्। वर्धयतः कुर्वतः। त्रैलोक्यबन्धोर्ब्रह्मणः। सुरसिन्धुर्वियद्गङ्गा। प्रत्यूषसन्ध्यासमयः प्रातःकालसन्ध्यावन्दनावसरः। ३४–चक्रवाकश्चञ्चुस्थितं मृणालसूत्रमाचकर्षेति सम्बन्धः। अन्योन्येति–मृणालतन्तोः परस्परवियोगजनकयन्त्रसूत्रत्वेन भ्रान्तिः। आरात्र्युपोषितः प्रियया वियुक्तो वराकश्चक्रवाकः, उषसि स्वप्रियामिलनाशया तदुपहाराय स्वभक्षणाय वा मृणालतन्तुमाकृष्टवानिति तात्पर्यम्। ३५–सिद्धाङ्गनानां देवयोनिविशेषवनितानाम्। राजीविनीजीवितवल्लभस्य सूर्यस्य। बिम्बं कर्तृ। प्रतिष्ठां साम्यम्। ३६–सुधाकरं चन्द्रम् [ सरोजिनीरिपुम् ]। वार्धकतो गतप्राया वृद्धा चेति हेतोः। मूर्धानमिति–अस्तोन्मुखत्वे मूर्ध्नोऽवनतित्वस्योत्प्रेक्षणम्। तदिति–तस्याः ॐ क्षपायाः ॐ [ चन्द्रवल्लभायाः ] तस्य चन्द्रस्य वा, विप्लवाय विडम्बनायै, उपहासाय। स्मितं विकास ईषद्धास्यञ्च। पङ्कजमेव वक्त्रम्। ३७–चुलुकाद् विस्तृताञ्जलेः। अन्यस्य चालुक्यवंशमूलपुरुषस्य। पङ्कजिनीवधूनां प्राणेश्वरः सूर्यः। पूर्वाचलमुदयाद्रिम्। ३८–रथाङ्गनाम्नां चक्रवाकाणाम्। परस्परेति–चन्द्रिकया निखिललोके नितान्तं धवलिते चक्रवाकयुगलस्यान्योन्यादर्शनं संगतमेव। शीतांशुशाणेति–चन्द्रे वर्तुलत्वसाम्यात्, शाणाफलकस्यारोपः; ११ सर्गे ७५ श्लोकोऽपि द्रष्टव्यः। ३९–भगवान् ब्रह्मा। विज्ञापितो निवेदितः। ४०–इतः परं चतुर्भिरिन्द्रः स्वीयमैश्वर्यं निरूपयन् ब्रह्माणं स्तौति। ऐरावणः सुरगजः। अलिमाला भ्रमरपङ्क्तिः कर्तृपदम्। तोरणो बहिर्द्वारम्। वन्दनमालिका तोरणस्रक्। ४१–अलिकदम्बो भ्रमरसमूहः। कुरङ्गनाभी कस्तूरिका। प्रतिष्ठा साम्यम्। समारोहति प्राप्नोति। ४२–नन्दनं देवोद्यानम्। गीर्वाणसारङ्गदृशो देवाङ्गनाः। यशांसि कर्म। ४३–महिम्नः प्रभुत्वस्यैश्वर्यस्य। अनङ्कुशस्य निरवधेः। स्वामिन्–ब्रह्मणः सम्बोधनम्। चक्कलकं कलापकम्। ४४–चारजनेन गुप्तचरलोकेन। नाथ स्वामिन्!

ब्रह्मन् ! विप्लवो धर्मविपर्ययोऽधर्माचारः । स्मर्तव्यतां लोपम् । निर्जराणां देवानाम् । ४५–धर्मद्रुहां धर्मविध्वंसकानाम् । अत्र भुवि । अवार्यवीर्योऽ-वन्ध्यपराक्रमः । अंशवः किरणाः । सुस्थाः प्रकाशिताः सुखबहुलाश्च । ककुभः प्राच्यादिदिशः सकलदिक्षु स्थिता लोकाश्च । ४६–पुरन्दरेणे-न्द्रेण । विरिञ्चिर्ब्रह्मा । ध्यानानुविद्धानि ध्यानव्याप्तानि । मुमोचेत्यादि–चुलुकमवलोकयामासेति भावः । ४७–इतः परं नवभिश्चालुक्यवंशमूल-पुरुषाविर्भावं प्रपञ्चयति । प्रकोष्ठो मणिबन्धस्य कूर्परस्य चान्तरम् । इन्द्रनीलरत्नं मरकतमणिः । डम्बरः प्रपञ्चो विलासो वा । वहन् धारयन् । सहोत्थान् सहैव जातान् । ४८–उत्तर्जनीकेन–उदूर्ध्वं तर्जनी प्रथमाङ्गु-लिर्यस्य तेन । कृताकृतेति–कृतं चाकृतं च कृताकृते तयोरवेक्षणे बद्धं कृतं लक्षं लक्ष्यं येन सः । निरर्गलानि निरङ्कुशानि । ४९–निजवंशजानां चालुक्यानाम्, भोगाय, धरित्रीं वैपुल्यविशेषभाजं विपुलां, कर्तुम् । केयूरयोरङ्गदयोः संक्रान्तानां प्रतिबिम्बितानां विमानानां व्योमयानानां सप्तभूमिकगृहाणां वा भङ्ग्या व्याजेन । क्ष्माभृतः पर्वताः । ५०–अखर्वः प्रचुरः । दन्तुर उन्नतः प्रकाशितो वा । क्षीरेति–क्षीरवद् विपाण्डुराणि । नवजातः शिशुर्दुग्धं पिबतीत्यनुसन्धीयते । जातमात्र एव तस्मिन् वैरियशांसि नश्यन्ति स्मेति तात्पर्यम् । ५१–सुवर्णनिर्माणं स्वर्णनिर्मितम् । स्वभावसिद्धं प्रकृतिजन्यम् । विष्टर आसनम् । ५२–स्वःसुन्दरीत्यादि–दानवा इतः परं देवाङ्गना न बन्दीकरिष्यन्तीति देवाङ्गनाभिः प्रसन्नया दृशावलोक्यमान इति भावः । ५३–पङ्कजविष्टरेण कमलासनेन । देवेन ब्रह्मणा । ५४–पौरुषमेव काञ्चनं तस्य–कषोपले कषपाषाणे–नीलत्वसा-म्यात् । यशांस्येव पाण्डुसरोरुहाणि । दृष्टिं व्यापारयन्नवलोकयन् । अवा-प्तपाणिप्रणये करस्थे । कृपाणे खड्गे । ५५–हेमाचलो मेरुः । जाम्बूनदं सुवर्णम् । आविरासीत् प्रकटीबभूव । प्रवीणो निपुणः । ५६–हर्षेति–हर्षाश्रुभिः पारिप्लवं चञ्चलं दृक्सहस्रं यस्य तम् । पङ्करुहासनस्य ब्रह्मणः । मरुदिति–मरुतां देवानां विपक्षाः शत्रवो दानवास्तेषां क्षये दीक्षितः कृतप्रतिज्ञः प्रवृत्तश्च । ५७–क्ष्माभृतो राजानः पर्वताश्च । रत्नाकरो रत्नराशिः

सागरश्च । वंशश्चालुक्याख्योऽन्वयः । शौरेर्विष्णोः । गाङ्गो गङ्गासम्बन्धी । ५८—यत्र चालुक्यवंशे । मानव्ययं गर्वनिरासम् । ५९—मीलदिति विशीर्णेति च पतिविरहात् । मुखानि कर्तृ । यद्भूपतीनां चालुक्यवंशोद्भवानां नृपाणाम् । ६०—कण्टकाः क्षुद्रशत्रवः । ६१—यत्पार्थिवैर्यद्वंशजैर्भूपतिभिः । धारा तीक्ष्णाग्रभागः । तदीयेति—तदीयानि शत्रुसम्बन्धीनि कपालानि शिरोस्थीन्येव शाणोपलपट्टिकास्तासु । ६२—चन्द्रशिखामणौ शङ्करे । यो रावणः । क्ष्माधरराजपुत्र्या गौर्या । ६३—प्रसाध्य विजित्य । यामयोध्याम् । मैथिलीशो रामः । ते चालुक्यवंशजाः । अवदातेति—'अवदातः सितो गौरः' इत्यमरः । ६४—जिगीषवो जेतुमिच्छवः । केऽपि राजानः । पदं चक्रुर्न्यवसन् । नागरेति—नागरखण्डचुम्बिनो नागवल्लीलग्नाः पूगद्रुमाः क्रमुकवृक्षा यस्यां तस्याम् । ६५—तदुद्भवैस्तेभ्यो नृपेभ्यः समुत्पन्नैः । चोली चोलदेशाङ्गना । रह एकान्तविलासः । करीन्द्रदन्ताङ्कुरा एव लेखन्यस्ताभिः । कूले तटे । ६६—द्वीपक्ष्मापालपरंपराणां द्वीपाधिपराजसमूहानाम् । दोर्विक्रमाद्भुजपराक्रमात् । विष्णोः प्रतिष्ठेति रामेण स्थापितमिति हेतोः । विभीषणस्य राज्ये लङ्काधिपत्ये । परं केवलम् । सङ्कुचिता मन्दादराः । ६७—कर्पूरेति—कर्पूरपरागैः पाण्डुषु धवलेषु । भ्रान्त्या कर्पूरभ्रमेण । तुषाराद्रिर्हिमाचलः । दक्षिणस्यां दिशि कर्पूरद्वीपोऽस्ति । ७ सर्गे ७५ श्लोकोऽपि द्रष्टव्यः । ६८—इतःपरं षड्भिस्तैलपं नृपं वर्णयति । तद्वंशविशेषकश्चालुक्यकुलतिलकः । संख्ये रणे । वीररसं वीराख्यं रसं जलं च । जले विलीने पङ्कमेव शिष्यत इति भावः । ६९—राष्ट्रकूटो वंशविशेषो यं निःशेषं विनाश्य तैलपश्चालुक्यलक्ष्मीमुन्निनाय । कोविदो निपुणः । यस्य तैलपस्य । ७०—स्विन्नकरस्य स्वेदार्द्रहस्तस्य । यस्य तैलपस्य । संख्येषु रणेषु । कालो यमः । पुरन्दर इन्द्रः । निबिडत्वमाप दृढो बभूव । ७१—अरातिः शत्रुः । शरः 'गुन्द्रस्तेजनकः शरः' इत्यमरः; 'सरहरी' इति ख्यातः । काण्डो दण्डः । यशांसि कर्तृ । ७२—स्फूर्जदिति—स्फूर्जद् विलसद् यश एव हंसस्तस्य विलासपात्रम् । निस्त्रिंशः खड्ग एव नीलोत्पलं तत् । यस्तैलपः । उत्तंसः—'पुंस्युत्तंसावतंसौ

द्वौ कर्णपूरे च शेखरे' इत्यमरः। संग्राम एव लीलासरस्तस्मात् । ७३–सैन्यं निजबलम्। साक्षिमात्रं विधाय केवलं साक्षितामापाद्य, अथ च तत्सहायतां विनैव । प्रतिपक्षलक्ष्म्याः शत्रुराज्यश्रियः। प्रातिभाव्यार्थम्–प्रतिभूः प्रतिलग्नकः ( हि. जामिन ) तस्य भावः प्रातिभाव्यं तदर्थम् । आजुहाव स्वान्तिकमानिनाय । ७४–इतः परं पञ्चभिः सत्याश्रयं नृपं वर्णयति । वंशः कुलं वेणुश्च । सत्याश्रयस्तन्नामकः। भ्रुकुटिक्रुधेव वक्रत्वनीलत्वादिसाम्यं क्रोधे हेतुः। कपालानि शिरोऽस्थिखण्डानि। ७५–इषवो बाणाः। संयुगा युद्धान्येव यामिन्यो रात्रयस्तासु। प्रोतेति–प्रोतानि विद्धानि प्रतिक्ष्मापतीनां शत्रुनृपाणां मौलिरत्नानि शिरोमणयो येषु ते। विन्दते स्म विचारयन्ति स्म, जानन्ति स्मेति वा । चक्रवालं मण्डलम्। ७६–गुणो मौर्वी। कोटिर्धनुरग्रभागः । अस्त्राणि शरान्। ७७–भूभृतो राजानः पर्वताश्च। क्रौञ्चाचलः पर्वतविशेषः, यं परशुरामो विव्याध । 'हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम्' इति मेघदूते। भार्गवः परशुरामः। मार्गणो बाणः। ७८–दृप्तारिदेहे सगर्वशत्रुशरीरे। समरोपमर्दो रणसंघर्षः। यज्ञोपवीतभ्रमतो विप्रोऽयमिति भ्रान्तेः। अन्तरायो विघ्नः। ७९–इतः परमष्टभिर्जयसिंहदेवं नृपं वर्णयति। ततः सत्याश्रयादनन्तरम्। गजाहवेषु हस्तिप्रधानेषु रणेषु। करे निजपाणौ। मुक्ताफलानि मौक्तिकानि–कर्तृपदम्–प्रकृतम्, यशांसीव व्यराजन्त शुशुभिरे, इति सम्बन्धः। ८०–प्रतापः कोशदण्डजं तेजः प्रकृष्टतापश्च। कदर्थ्यमानाः पीड्यमानाः । प्रत्यर्थिभूपालाः शत्रुनृपाः। महिषी कृताभिषेका राज्ञी सैरिभी च। अङ्कपाली - आश्लेषः। ८१–प्रतापो भानुरिव तस्मिन्। प्रतिष्ठां गौरवम्, भजति सति। संयुगेषु युद्धेषु। सूर्योपलः सूर्यकान्तमणिः। पार्थिवानां नृपाणाम्। तापोऽन्तर्दाह उष्णत्वञ्च। ८२–ध्वजिनी सेना। धरित्री पृथ्वी। अकर्मठमकर्मशीलम्। कूर्मपतिं विष्णुद्वितीयावतारकच्छपम् [ उद्देश्यम् ] । आर्द्रेति–आर्द्रव्रणाधिष्ठितं नूतनव्रणसहितं पृष्ठपीठं यस्य तादृशम् [ विधेयम् ]। ८३–शिवा शृगाली। ८४–यात्रासु विजयोद्यमेषु। जयसिन्धुराणां गन्धगजानाम्। सप्तच्छदः सप्तपर्णनाम-

धेयो वृक्षविशेषः। बान्धवः सदृशः। ८५–विपक्षाः शत्रवः। अधिज्य-चापस्य–अधिगता ज्या मौर्वी यस्य तादृशश्चापो यस्य तस्य। परं केवलम्। ८६–यशोवतंसं निजकीर्तिमण्डितम्। सुराणां नगरमिन्द्रपुरीम्। पुरन्दर इन्द्रः। ८७–इतः परं सर्गान्तं यावद् आहवमल्लदेवं वर्णयति। मण्डलाग्रः खड्गः। धारेति–धाराजलात् कृपाणधाराजलाद् उत्था–उत्पन्ना। ८८–आख्यायिका हर्षचरितादिः। कथा कादम्बर्यादिः। सर्गबन्धो महा-काव्यम्। दशरूपकं नाटकादिः। रामो दाशरथिः। ८९–रिक्तभावं रिक्त-त्वम्। प्रपापालिका जलशालायां नियुक्ता स्त्री। मुखान्यग्रभागा आन-नानि च। ९०–कौक्षेयकः कृपाणः। प्रतापम्–अन्यत्र प्रकृष्टतापम्। चोली चोलदेशनारी। ९१–दीप्रेति–दीप्रो दीप्तिमान् प्रताप एवानलस्तस्य संनिधानान्नैकट्यात्। प्रमारः परमार इति वंशविशेषः, यत्र भोजो जन्म लेभे। धारा प्रवाहः। धारा भोजराजधानी। ९२–पानीयं खड्गधाराज-लम्। भूभृतो राजानः पर्वताश्च। मालवभर्तुर्भोजराज्ञः। धाराम्–एकत्र नगरीम्, अन्यत्र जलधाराम्। परिहर्तुं त्यक्तुम्। ईशः समर्थः। ९३–निःशेषं निर्वासिताः स्वस्थानाद्बहिष्कृता मानसं प्रापिताश्च राजहंसाः श्रेष्ठराजानः पक्षिविशेषाश्च येन सः। बालाम्बुदेति–नूतनजलधरवन्नीलेन। कीर्तिहंसीम्–भोजराजकीर्तिरेव हंसी ताम्। ९४–धारा नगरी जलधारा च। चित्रमद्भुतम्। ९५–मुखान्यग्रभागान्। तत्कीर्तिभिस्तत्पदेन होम-परामर्शः। तारापतिश्चन्द्रः। ९६–क्षीबो मत्तः। धारा नगरी। धारा प्रवाहः। ९७–शतक्रतोरिन्द्रस्य। मध्यमचक्रवर्ती मध्यमलोकपालः। क्रमात् परिपाट्या। यः शतक्रतोः शङ्कास्पदतां नायासीदिति सम्बन्धः। ९८–चिन्तामणिर्ध्यानादेव सकलवस्तुदाता रत्नविशेषः। पुरः पुरस्तात्। वराको दीनः। तत्र राज्ञि, आहवमल्लदेवे। सौवर्णतुलाधिरूढे–सुवर्णतुला-पुरुषदानार्थम्। स चिन्तामणिः। पाषाणतुलाधिरोहं पाषाणसाम्यप्राप्तिम्। ९९–कलेस्तुर्ययुगस्य। उत्सारणकारणेन दूरीकरणार्थम्। यागो यज्ञः। १००–उष्णगभस्तिभासः–आदित्यात्। कलिस्तुर्ययुगं कर्तृ। १०१–कृती पुण्यवान् कुशलश्च। आहवमल्लगुणरञ्जिताः प्रजास्तत्पूर्वजगुणान् विस्म-

रन्ति स्मेति भावः । १०२–विशीर्णेति–विशीर्णो नष्टश्छिन्नश्च कर्णस्तन्नामधेयो डाहलाधिपः श्रोत्रं च यस्याः सा । पृथ्वीभुजङ्गः क्षितिपः, आहवमल्लदेवः कामुकश्च । डाहलश्रीर्डाहलदेशराज्यलक्ष्मीः । ताडङ्कः कर्णभूषणम् । पाठान्तरम्–महाकवय उक्तमेवार्थं भङ्गयन्तरेण बहुधा निरूपयन्ति । जैनसंप्रदाये तदेव पाठान्तरमित्युच्यत इति मन्यामहे । अत्र पाठान्तरपदेन तदेव बोद्धव्यम्, नतु पाठभेदरूपोऽर्थोऽभिप्रेतः । १०३–उक्त एवार्थो भङ्गयन्तरेण प्रतिपाद्यते । कीर्तिः कर्तृपदम् । दन्तो हस्तिदन्तः । १०४–असिः खङ्गः । अत्युच्छलता नितान्तमुद्गच्छता । धाराजलेन खङ्गधाराजलेन । धाम्ना तेजसा । मातङ्गो गजश्चण्डालश्च । अभ्युक्ष्य प्रक्षाल्य । १०५–यद्वैरिसामन्तेति–यस्य वैरिसामन्तनितम्बिनीनां शत्रुनृपाङ्गनानाम् । अश्रान्तोऽनवरतं प्रवृत्तः । १०६–एकत्र वासाद् वक्त्राख्य एकस्मिन् स्थानेऽवस्थितेः, इदं संस्मरणे हेतुः । अवसानभाजो लुप्तायाः । ताम्बूललक्ष्म्यास्ताम्बूलजन्यशोभायाः । तानवमभावम् । १०७–जालं समूहः । वेला समुद्रतटम् । समुत्सारणकारणेनापसारणार्थम् । भार्गवं परशुरामम् । १०८–उत्करः समूहः । भङ्गी व्याजः । रोषेण निजसंपत्तिनाशजन्यकोपेन । अम्बुराशिः समुद्रः । १०९–पाथोधिः सागरः । शोणाश्मभिः पद्मरागमणिभिः । शोणितेति–शोणितवद्रुधिरवत् शोणा रक्ता देहाः शरीराणि येषां तैः । अभीक्ष्णं शश्वत् । रघुराजेति–रघुराजस्य रामचन्द्रस्य बाणेन [ जातः ] जीर्णो यो व्रणस्फोटस्तम् । आचचक्षे कथयामास प्रकटीचकारेति वा । ११०–राशीकृतमेकत्रीकृतम् । वेला समुद्रतटम् । चमूः सैन्यम् । अम्भोविभूतेर्जलसमूहस्य । क्षारजलस्य पातुमशक्यत्वादपरिक्षयः । १११–उत्तम्भयामास निचखान । अदम्भवीरोऽव्याजशूरः । असूयितमसोढम्, इदं जयस्तम्भविशेषणम् । स्वैरविहारशीलैः स्वच्छन्दविहरणपरैः । आलानं गजबन्धनस्तम्भः । वारणेन्द्रो गजेन्द्रः । ११२–यदन्तःपुरेति–यस्य राज्ञोऽन्तःपुरसुन्दरीणामवरोधाङ्गनानाम् । उपान्तभाजां समीपवर्तिनीनाम् । गृहीतसारः–गृहीतः [मन्थनेन] सारोऽमृतादिः सारपदार्थो यस्य सः । त्रिदशैर्देवैः । ११३–विजयोद्यमेषु जय-

यात्रासु। दशकण्ठशत्रुः-रामचन्द्रः। समस्या-अर्द्धम्। ११४-दोर्दण्डो बाहुदण्डः। द्रविडप्रकाण्डं चोलदेशेश्वरम्। अभाजनमपात्रम्। वीररसस्य वीराख्यरसस्य जलस्य च। उत्करः समूहः। ११५-पृथ्वीभुजङ्गो भूपतिः कामुकश्च। परिकम्पिताङ्गीम्-भयेन प्रेम्णा च। यश इति-यशश्चोलकीर्तिरेव पटस्तस्योल्लुण्ठनमपहरणं, तस्य केलिं करोतीति तादृशः। काञ्चीं चोलराजधानीं मेखलां च। चोलराज्यश्रियं चोलनृपतिलक्ष्मीमङ्गनां च। ११६-चोलस्य चोलदेशराज्ञः। भालत्वचं ललाटचर्म। अद्यापि-इतः परमपि। अयं श्लोको बहुत्रालङ्कारग्रन्थेषु समुद्धृतः। ११७-प्रतियोगी ❀ शत्रुः प्रतिध्यानी च ❀। भुजशौर्येति-भुजशौर्यमेव वह्निस्तस्मिन्। प्रत्यर्थिपृथ्वीपतिः शत्रुभूपालः। मन्त्रः ❀ षाड्गुण्यरूपः, ॐ ह्रीम् इत्यादिकश्च ❀। ११८-दैवस्य राज्ञः। पुष्पेषुः कामः। अखर्वाः प्रबलाः। अप्रतिभानम् ❀ अप्रतिभां मूकत्वं च ❀। ऊर्जितेति-ऊर्जितज्याया उत्कृष्टमौर्व्या निष्ठ्यूते निर्गते नितान्तं निष्ठुररवे प्राप्तोऽप्रवादः प्रथमजल्पो येन सः।

## इति प्रथम सर्गः

---

# अथ द्वितीयः सर्गः

१–अथ पञ्चविंशतिपद्यैः कल्याणनामधेयां चालुक्यराजधानीं वर्णयति। असौ पृथिवीपुरन्दरः क्षितीन्द्रः [ आहवमल्लदेवः ], क्रमात् कियतापि कालेन, परार्ध्यं श्रेष्ठम्, कल्याणमिति * कल्याणकटकं नगरम् इति प्र० * ( प्र० = प्रसिद्धम् ? ) पुरम्, चकार निर्मापयामासेति सम्बन्धः। हर्म्यं धनिनां वासगृहम्। आवलिः पङ्क्तिः। विभाव्यते ज्ञायते। संनिभं सदृशम्। २–निवर्तिताः स्खलिताः। नतभ्रुवामङ्गनानाम्। मुखानिला मुखवायवः [ उद्देश्यम् ]। मानो रतिकोपः। मलयाद्रिवायवः–विधेयम्। ३–क्षपाकरश्चन्द्रः। कातरेति–कातरं विच्छायं रश्मिमण्डलं यस्य सः। पुरन्ध्री सुचरित्रा स्त्री। मुकुरो दर्पणः। ४–दन्तपत्रं कर्णाभरणविशेषः। संक्रान्तिमिषेण प्रतिबिम्बव्याजेन। कान्तिजलं लावण्यपानीयम्। ५–वर्त्म व्याजः। समीपतां नैकट्यम्। मुखानि कर्म। जाग्रन्मदनान्युद्दीप्तकामानि। सुभ्रुवामङ्गनानाम्। यामिकः प्राहरिकः। यामिनीपतिश्चन्द्रः। ६–उदरं मध्यम्। शरद् शरदृतुः। कलिन्देति–कलिन्दकन्याया यमुनाया ह्रदोऽगाधजलं, तद्वन्मेचकं नीलम्। नभः कर्म। ७–प्रकर्षवत्या–अत्युन्नतया। कपिशीर्षं प्राकारस्योच्चतमो भागः। वप्रसंहतिः प्राकारपङ्क्तिः कर्तृपदम्। अम्बरेति–अम्बरमाकाशमेव केलिदर्पणस्तस्मिन्। ८–तारकापतौ चन्द्रे। रौप्येति–रौप्यो रजतनिर्मितो यः कर्पूरकरण्डः कर्पूराधारपात्रविशेषस्तद्वत् पाण्डुरः। रोहिणी चन्द्रकान्ता। ९–यदीयेति विशेषणम्। अमुग्धेति च विशेष्यम्। स्फटिकस्थलीभुवां स्फटिकभूमिसमुत्पन्नानाम्। दवाग्निर्वनवह्निः। १०–परिजातो देवतरुः। विडम्बनामुपहासम्। गृहीतसारस्य–[ मन्थनेन ] गृहीतः सारः पारिजातसहितानि चतुर्दशरत्नानि यस्य तस्य। ११–मन्युः कोपः। नृपेण–आहवमल्लेन। कक्षां साम्यम्। शतमन्युरिन्द्रः। मन्युः क्रतुः कोपश्च। पुरी–अमरावती। पुरप्राग्रहरस्य नगरश्रेष्ठस्य। गाहते प्राप्नोति। १२–गण्डेति–गण्डस्थलमेव चन्द्रमण्डलं तस्मिन्। कुण्डलातिथौ कर्णाभरणविशिष्टे। कुरङ्गकश्चन्द्रकलङ्कात्मको मृगः।

१३—समुच्छलदिति - समुच्छलत् समुल्लसन् मौक्तिकानां कान्तिरेव वारि येषु तैः। सुरसद्ममूर्धगैर्देवप्रासादशिखरस्थैः। प्रपा पानीयशालिका। १४—कार्मणं वशीकरणम्। लीलायितं विलासम्। एणचक्षुषामङ्गनानाम्। भवाय शंभवे। १५—प्रशस्तिर्बिरुदावलिः। प्रतिवस्तुतां तद्रूपत्वम्। दात्यूहः पक्षिविशेषः। १६—रुषां मानकोपानाम्। भुजङ्गः कामिजनः। पञ्चमोर्मयः पञ्चमस्वरतरङ्गाः कर्तृपदम्। १७—( कासुचन प्रतिषु 'यद्व-श्मसु' इति प्रमादान्मुद्रितं शोधनीयम् ) यद्वेश्मसु यस्य नगरस्य गृहेषु। रोहिणीपतिश्चन्द्रः। गुणं लाभम्। अलक्ष्यतामदृश्यत्वम्। पुरन्ध्री सुचरित्रा स्त्री। १८—सौधो राजसदनम्। समुच्छलदिति—समुच्छलतां समुल्लसतां मौक्तिकानां पताकावस्त्रप्रान्तप्रोतानां मुक्तानां कान्तिनिर्झरैः प्रभापरम्परा-भिः करणैः। इदं प्रकृतम्। सुरापगापयो मन्दाकिनीपानीयं कर्म। १९—त्र्यम्बकः शिवः। स्मितेन्दीवरदीर्घचक्षुषामङ्गनानाम्। पार्श्वं सामी-प्यम्। २०—असौ स्मरः। उत्पलं नीलकमलम्। मित्रता साम्यम्। मनांसि पुरुषाणाम्। तथा च शाकुन्तले—'ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति' इति। २१—रतिरेव रत्नसंपत् तासाम्। वधूरेव तडित् तस्यास्ताण्डवस्य मेघमण्डली। विभ्रमा एव तारकस्रक् तासाम्। स्मरत-ल्पकल्पना कामकेलिशय्यारचना। इदं विशेष्यम्। स्मरतल्पकल्पनायां समुद्रवेलायाः, मेघमण्डल्याः, नभस्थल्याश्चारोपः। २२—स्थितिं न त्यजन्ति मानसं न यान्ति। हर्षगद्गदा आनन्दोन्मत्ताः। दिशन्त्यर्पयन्ति। वप्रः प्राकारः। २३—सौधो राजसदनम्। विगाहमानस्य प्राप्तवतः। विधोश्चन्द्रस्य। कुरङ्गको लाञ्छनात्मको मृगः। वतंसः कर्णपूरः। २४—वागुरा मृगबन्धनी। कुरङ्गो मृगः। पञ्चशरः कामः। अन्वहं प्रतिदिनम्। वितन्वते कुर्वन्ति। २५—अमुष्यास्य कल्याणस्य। मानसं सरश्चित्तञ्च। अलका कुबेर-नगरी। इति कल्याणवर्णनम्। २६—ककुभः दिशः कर्म। भार्गवः पर-शुरामः। स नृपः—आहवमल्लः। तत्र कल्याणनगरे। अर्थी याचकः। प्रति-पादनं दानम्। २७—अनर्घेषु बहुमूल्येषु। २८—बाष्पमश्रु। पदैर्वाक्यैः। सहधर्मचारिणीं धर्मपत्नीम्। सरस्वती वाणी। २९—फलेन पुत्ररूपेण।

शून्यो विकलः । दुनोति पीडयति । गृहस्थाश्रमधर्म एव पादपः । आत्मनः प्रतिबिम्बम्–'आत्मा वै जायते पुत्रः' इति वचनात् । ३०–अलक्षणं वन्ध्यात्वचिह्नम् । बालमृगाक्षि–आहवमल्लधर्मपत्नीसम्बोधनम् । मृग्यते लक्ष्यते । ईदृशः सर्वलक्षणसंपूर्णायाः । पुण्यविपर्ययः पापम् । ३१–पुरः मदनन्तरम्, अग्रतो वा । पोतो यानपात्रम् । कूपको गुणवृक्षकः, नौमध्यस्थरज्जुबन्धनकाष्ठम् । शकुन्ती पक्षिणी । ३२–गेहिनी कलत्रम् । अलीकमनृतम् । ३३–गुणं लाभम् । अत्र सुतरूपे वस्तुनि । ३४–अश्वमेधो यज्ञः । गृहमेधिनो गृहस्थाश्रमिणः । शुभं कल्याणम् । ३५–पुत्रिणां पुत्रवतां पुरुषाणाम् । धुरि–अग्रगण्यत्वे । ३६–देवस्य राज्ञः । श्रोत्रपथप्रमाथिनीं कर्णारुन्तुदाम् । परं केवलम् । ३७–धीरं यथास्यात्तथा । अधीरलोचनां चञ्चललोचनां राज्ञीम् । अङ्क उत्सङ्गः । आतङ्ककलङ्कं दुःखजं मालिन्यम् । द्विजावली दन्तपङ्क्तिः । ३८–कवोष्णो मन्दोष्णः । निग्रहणाय दण्डनाय । ३९–कृतश्रुतागमोऽधीतसकलशास्त्रः । अत्र सुतवस्तुनि । ४०–बालमृगाङ्कशेखरः शङ्करः । चकोरलोचने राज्ञीसम्बोधनम् । पात्रं भाजनम् । तपस्विनो वराकाः । ४१–तपसे तपस्यायै । प्रभूतभावो बहुलभक्तिः । प्रयते चेष्टे । विभावरीवल्लभखण्डमण्डनः शङ्करः । ४२–कलुषस्य कर्मणः पापस्य विघ्नस्य वा । खण्डशशाङ्कशेखरः शङ्करः । ४३–देव्या राज्ञ्या । समस्तचिन्तां राज्यभारम् । प्रार्थितवस्तुसिद्धये पुत्रप्राप्त्यै । ४४–तपः कर्म । स्थण्डिलं चत्वरम्, यागार्थं परिष्कृता भूमिः । असाधयदकरोत् । अपकर्षं हीनताम् । ४५–दुष्प्रसहं सोढुमशक्यम् । चण्डेति–चण्डद्युतिः सूर्यस्तस्य मण्डलं तस्यातिथिर्निकटस्थः, तेजोहीन इति यावत् । ४६–चर्या–आचारः । समाहिता पूता सावधाना च । नरनाथसुन्दरी राज्ञी । निशातेति–निशातस्तीक्ष्णो यः शाणः कषपाषाणस्तेनोल्लिखितमुज्ज्वलितम् । समन्वगादनुगच्छति स्म । ४७–मृगाङ्कचूडस्य शिवस्य । किरीटनिम्नगा गङ्गा । उपाचरदसेवत । स्वहस्तेति–स्वहस्तेन लिप्तं [गोमयादिना] ईश्वरस्य शिवस्य मन्दिराजिरं मन्दिराङ्गणं यया सा । ४८–तथाविधायास्तादृशपुत्रप्राप्तिरूपायाः । मतमिष्टम् । अद्रिकन्याद-

यितः शङ्करः। कल्पयति स्म – अरचयत्, अर्पयति स्मेति वा। ४९ नभश्चरीं भारतीमाकाशवाणीम्। ५० – अलमिति – तामेवाह। चुलुक्येति – आहवमल्लसम्बोधनम्। आरोहति प्राप्नोति। ५१ – क्षितीन्द्र हे राजन्। भाजनं पात्रम्। वंशोऽन्वयो वेणुश्च। शुचितां पवित्रतां धवलतां च। ५२ – दिलीपेति – दिलीपो मान्धाता च सूर्यवंशजौ राजविशेषौ, तौ मुखे आदौ येषां ते तादृशा ये आदिपार्थिवा आदिराजानस्तेषां प्रथा ख्यातिस्ताम्। ५३ – कर्म तपः सुकृतं च। श्रियं लक्ष्मीं सीतां च। रामो दाशरथिः।५४ – श्रुतिशुक्तिम् – श्रुतिः कर्ण एव शुक्तिर्मुक्तास्फोटस्ताम्। व्योमेति – व्योम – आकाशमेव पयोनिधिस्तस्य। उदञ्चिरोमाञ्चतयोद्गतरोमहर्षणतया। ५५ – पुरन्ध्री सुचरित्रा स्त्री। पारणा व्रतानन्तरं भोजनं व्रतसमाप्तिर्वा। ५६ – विप्रो ब्राह्मणः। अरज्यत रतो बभूव। ५७ – कमनीयं सुन्दरम्। पुरुहूत इन्द्रः। संपादितेति – संपादितः कृतो मांसलोऽतिबहुल उत्सवो येन तादृशः। निर्वृतिः सुखम्। ५८ – सोमश्चन्द्रः। गोत्रं कुलम्। ततस्तस्मात्। अभिधानं नाम कर्म। ५९ – अनन्येति – अनन्यसामान्यमसाधारणं तनूजं पुत्रं शंसते कथयतीति तादृशी ताम्। दिव उद्गतां दिवं नभोवाणीम्। निर्भरं नितान्तम्। मध्यमलोकनायकः – आहवमल्लः। ६० – कस्यचिद् दिव्यसूनोः। गण्डपालीं कपोलम्। बिसं मृणालतन्तुः। देव्या राज्ञ्याः। ६१ – उपयाचितम् – दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यं दोहदं तद्विदुर्बुधाः। स्वमनोरथसिद्धये, इष्टदेवाय प्रतिज्ञात उपहारः। हरः शङ्करः। ६२ – धौतां क्षालितां श्वेतां च। ६३ – पयसे दुग्धाय। सुधा चन्द्रस्थं पीयूषम्। आननं चूचुकम्। तयोः स्तनयोः ६४ – क्षीरमिषेण दुग्धव्याजेन। गालनशुभ्रवाससः – गालनं स्रावणं क्षरणं वा (हि. छानना) तस्य शुभ्रं वासो वस्त्रं तस्य। ६५ – पयो दुग्धं जलं च कर्म। समल्लिकावासं मल्लिकापुष्पगन्धसहितम्। ६६ – मृगीदृशो राज्ञ्याः। चूचुकं कुचाग्रम्। प्रभावेति – प्रभावेणालौकिकसामर्थ्येन संक्रान्तं स्तनेऽर्पितं रसायनौषध्या दलद्वयं पत्रयुगलम्। ६७ – निरन्तरेत्यनवरतकष्टदायि। अर्थिनां याचकानाम्। दारिद्र्यं धनाभावम्। असौ कुमारः।

मध्यस्थमवलग्नस्थमुदरस्थं वा, अन्यत्र च तटस्थम्। दारिद्र्यं कृशता। नरनाथयोषितो राज्याः। ६८ बलिस्तन्नामा दैत्यः। समुल्लासमौद्धत्यम्। स विष्णुः। ना विष्णुः पृथिवीपतिरिति वचनात्। वलिस्थितिं त्रिवलिसत्ताम्। वलिरुदररेखा। ६९—अयं कुमारः। सा राज्ञी। ७०—काञ्ची राज्याः। यामिकः प्राहरिकः। ७१—महागृहाणां प्रासादानाम्। डम्बरः समूह आटोपो वा। महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः। ७२—उर्वीतिलकस्य कलत्रं राज्ञी। मेखला काञ्ची। उदेष्यत उदीयमानस्य। तेजसः कुमारस्य। पुरः प्राक्। ७३—क्षमावल्लभेति राज्याः। उपधानमुपबर्हः ॐ गांडुयउं ॐ। ७४—पदद्वयीं निजचरणद्वयम्। इयेष—ऐच्छत्। चिराय मुमोचेति सम्बन्धः। ७५—तारासु नक्षत्रराजिषु। पाटले रक्तवर्णे। गुरुस्मया—अतिगर्वा। दिगङ्गनाः कर्म। संवाहनं मर्दनम्। आजुहाव—आह्वयते स्म ७६—मुखराणि शब्दायमानानि। स्तब्धशिरःसु निश्चलोर्द्ध्वभागेषु, अविनीतेषु च। तेजसा कान्त्या गर्वेण च। बद्धमत्सरा सेर्ष्या। ७७—निवेदयन्ती सूचयन्ती। सुधावर्तिरमृतशलाकेवानन्ददायिनी ७८—शास्त्रवर्त्मना शास्त्रोक्तविधिना। पुंसवनादिकर्मसु पुंसवनप्रभृतिसंस्कारेषु। क्षितेरीशितुः—राज्ञः। ७९—कृतद्रवैर्द्रवीभूतैः। चन्द्रकरैः शशिकिरणैः। आप्लुतोऽभिषिक्तः। ८०—भिषग्भिर्वैद्यैः। वितीर्णेति—वितीर्णानि रक्षाविधये मण्डलान्यक्षताश्च यत्र तादृशम्। विशारदाभिर्निपुणाभिः। गोत्रवधूभिः कुलाङ्गनाभिः। अर्चितं भूषितम्। ८१—सूतिकागृहं प्रसूतिमन्दिरम्। दैवज्ञो ज्यौतिषिकः। ८२—विस्फुरदिति—विस्फुरन्तीं प्रभां धरन्तीति तादृशेषु, अन्यत्र विस्फुरत्प्रभोऽधरो येषां तादृशेषु। अर्तिः पीडा। परिच्छदे परिजने दास्यादिके। ८३—निखातेति—निखाता रक्षौषधिर्यत्र तादृशी या गेहदेहली तस्याः समीपे सज्जीकृताः शस्त्रपाणयो यैस्तेषु। इदं 'मन्त्रवादिषु' इत्यस्य विशेषणम्। त्राटनम्—अक्षतान् परितः प्रक्षिप्य तान्त्रिकैः क्रियमाणो विधिविशेषः। ८४—गृहोदरस्थे सूतिकागृहमध्यस्थे। जरतीपरिग्रहे वृद्धासु सेविकासु। उपांशु शनैः ॐ एकान्ते ॐ। वितीर्णकर्णासु—आकर्णयन्तीषु।

८५—यत्र मुहूर्त्ते। अद्भुतधाम्नि दिव्यगुणविशिष्टे। लग्नं राशीनामुदयो मुहूर्त्तम्। नन्दनस्तनयः। पताका कलापकम्। ८६—सुरप्रसूनानि देवपुष्पवृष्टिः। षट्पदो भ्रमरः। परमत्यर्थम्। ककुभो दिशः। ८७—नवेति—नवस्य नूतनस्य प्रतापस्य तेजसः, अङ्कुराणां चक्रवत् कान्तया। आरात्रिकमिष्टदेवस्य पुरस्तात् प्रज्वलितदीपभ्रामणम् (हि० आरती)। समाजहार स्वीचकार। ८८—आसन्नेति 'समीपे निकटासन्न' इत्यमरः। वपुषा कुमारशरीरेण। इति हेतोः। ८९—अवनीन्दोः—आहवमल्लमित्यर्थः। प्रथममादौ। नान्दीनिनादो मङ्गलध्वनिः। तदनु तत्पश्चात्। तदनुरूपोत्साहतस्तादृशपुत्रजन्मानुकूलोत्साहाद्धेतोः। वाग्विलासोऽकथयदिति सम्बन्धः। ९०—चारणः कुशीलवो बन्दिविशेषः। गाथको गायकः। करटी गजः। तूर्यं वाद्ययन्त्रविशेषः (हि० तुरही)। उत्तालः * त्वरितः *। वैतालिको बन्दी। ९१—आस्था विश्वासो दृढभक्तिः। पुरोधाः पुरोहितः। विधानविद् विधिज्ञः। गृहिणां गृहस्थाश्रमस्थानाम्। गार्हस्थ्यस्य गृहस्थाश्रमधर्मस्य।

इति द्वितीयः सर्गः।

---

# अथ तृतीयः सर्गः

१ – क्षितीन्दोराहवमल्लात्। समाख्यां नाम। २ – चालुक्यविभूषणस्य देवस्याहवमल्लस्य। अवदातद्युतिना धवलकान्तिना। ३ – इतः परं कुमारस्य बाललीलां वर्णयति। हारं मातृहृदयस्थं मुक्ताकलापम्। पयोधरं मातृस्तनम्। अबाह्या अन्तरङ्गाः। गुणिनः – गुणस्तन्तुः शौर्यादिश्च। आत्मीयं स्वभावमात्मप्रकृतिम्। ४ – प्रविश्य – कुमारस्य शरीरे। विनिःसरन्ती – मुखात्। अनिमित्तेति – अकारणेषद्धासकान्तिः। नरेन्द्र आहवमल्लः। ५ – मुष्टिप्रविष्टेति – मुष्टौ कुमारस्य करे प्रविष्टं यदरुणरत्नं पद्मरागमणिः, तदेव दीपस्तस्य प्रभालता, कर्तृपदम्। विपक्षेति - विपक्षाणां शत्रूणां कण्ठक्षतजैर्गलरुधिरैरनुलिप्ता। कृपाणलेखा खड्गः। सहजा सहैवोत्पन्ना। ६ – यद् यस्मात्। समुत्थितानामूर्द्ध्वस्थानाम्। आगामि भविष्यत्। नीचेषु नीचप्रकृतिकेषु, अधःस्थेषु च। आचचक्षे कथयामास। ७ – धात्रेयिका - उपमाता। हुङ्कारं प्रतिवचनम्। पेयूषममृतम्। गण्डूषो मुखपूरणम्। ८ – अव्यक्तमस्पष्टं यथा स्यात्तथा। संवननं वशीकरणम्। ९ – चूलकर्म चौलाख्यसंस्कारः। विनोदः क्रीडा। उच्चयः समूहः। नन्दनः पुत्रः। नन्दनतां देवोद्यानत्वम्। १० – उत्सङ्गः – अङ्कः। सङ्गलितैर्भ्रष्टैः। कार्मणं वशीकरणम्। ११ – अमंस्त मेने। देवः – आहवमल्लः। १२ – वितन्वतः कुर्वतः। रागो रक्तिमा स्नेहश्च। १३ – मुखेन्दुसंचारेति – मुखं कुमारस्याननमेवेन्दुः। कुरङ्गः कलङ्कात्मको मृगः। कण्ठावसक्तेन कण्ठेऽर्पितेन। १४ – वारनारी वेश्या। मञ्जीरो नूपुरः। राजहंसाः पक्षिविशेषाः श्रेष्ठराजानश्च। १५ – आयसं लोहनिर्मितम्। तदीयशौर्यं केसरिपराक्रमम्। १६ – प्राप्तोदयः – प्राप्त उदय औन्नत्यमाविर्भावश्च येन सः। सहखेलनाय सहक्रीडायै। शीतरश्मेश्चन्द्रस्य। १७ – प्रतिष्ठा – उत्कर्षः। लिपिर्लिखिताक्षरविन्यासः। अत्र लोकेऽध्ययने वा। गुरवः – उपाध्यायाः। १८ – पृषत्कान् बाणान्। पार्थस्यार्जुनस्य। विरलीबभूव निबिडेतरा बभूव। १९ – भूपालेति – भूपालकन्या एव मधुपाङ्गना भ्रमर्यस्ताभिः। कवित्वेति –

कवित्वं वक्तृत्वञ्च फलं यस्याः सा । २०—कलापः समूहः । कुमुद्वती कुमुदिनी । २१—तस्मिन् कुमारे । अवधीर्य तिरस्कृत्य । मुग्धा मनोज्ञा । छटा शोभा । पेतुः पतितानि । २२—निद्रादरिद्राणि निद्रारहितानि । २३—तेजस्विनां सप्रतापानाम् । भास्वान् सूर्यः । विष्णुपदं विष्णुचरणमन्यत्राकाशम् । २४—तेजोधनानां तेजस्विनाम् । संक्रान्तिभङ्ग्या प्रतिबिम्बव्याजेन । २५—संवादेति—संवादस्यानुकूलभावित्वस्य यशसा कीर्त्या दरिद्रो रहितः । चन्द्रार्धचूडस्य शङ्करस्य । २६—अकुण्ठमप्रतिहतम् । उत्कण्ठमानमुत्सुकम् । २७—अङ्कश्चिह्नं विरुदम् । अयं कुमारो विक्रमाङ्कः । २८—एनं कुमारम् । धुनी नदी । साधारणतामुभयसमानताम् । २९—सिञ्जितं नूपुरध्वनिः । सहोदरेण तुल्येन । ३०—आज्ञा—मम । पार्थिवानां सामन्तनृपाणाम् । त्यागोपभोगेषु—मम । मा—आस्तां मा भवतु । ३१— देवः—आहवमल्लः । प्रतिकूलभावं बाधकत्वम् । चन्द्रचूडाभरणः शिवः । प्रमाणं साक्षिभूतः । ३२—यामिकः प्राहरिकः । मौर्वी ज्या । ३३—कर्णाटपतेः कुन्तलदेशेश्वरस्य, आहवमल्लस्य । दुकूलं वस्त्रम् । ३४—वाचालता बहुभाषित्वम् । सुधांशुश्चन्द्रः । पाटवनाटनं चातुर्याडम्बरः । ३५—विचारचातुर्यं विवेकः । अपाकरोति दूरीकरोति । तातस्य मत्पितुर्भवतः । ३६—आचारविपर्ययस्य विपरीताचारस्य, अनाचारस्य । अहो खेदे । वैशसमतिकष्टम् । आः ! अत्यन्तखेदे । अनङ्कुशोऽनाचारी, स्वतन्त्रः । कलिकुञ्जरः—कलिः कलियुगमेव कुञ्जरो हस्ती । ३७—लक्ष्म्याः करं ग्राहयितुं युवराजपदेऽभिषेचयितुम् । कार्यं प्रयोजनम् । विपर्यासमलीमसेनाचारवैपरीत्यकलङ्कितेन । परिरम्भणमालिङ्गनम् । ३८—अन्यायपरायणेन दुर्नीतिशीलेन । गोत्रे चालुक्यवंशे । ३९—सलीलमनायासपूर्वकम् । पदातिः सैनिकः । ४०—तस्य दशरथस्य । ४१—विश्राम्यतु दूरीभवतु । कुन्तलेन्द्र हे कर्णाटपते । समालोचयति विचारयति । ४२—पांसुलानां स्वैरिणीनाम्, धुरि—अग्रभागे [ स्थिता ] इयं लक्ष्मीः । ४३—प्रसादेति—प्रसादः प्रसन्नतैव मुक्तावलिर्मुक्ताहारस्ताम्, अथवा प्रसाद उपहारः । ४४—

प्रभूतैः प्रचुरैः। भवानीदयितः शिवः। प्रसादीकृतवानुपहारीकृतवान्। ४५–कर्णामृतानि श्रवणयोः सुधावदानन्ददायीनि। सुरद्विरेफैर्देवोद्यान-भ्रमरैः। पारिजातो देवतरुः। ४६–नयविप्लवानां दुर्नीतिपरम्पराणाम्। मातङ्गो गजः। ४७–रक्तासवैः–रक्तं रुधिरमेवासवो मद्यं तैः। विनय-व्रतस्य सदाचारस्य। ४८–अत्र सोमदेवे। गुणाः शौर्यादयो, रज्जवश्च। निसर्गलोला स्वभावचपला। ४९–दैवज्ञो ज्यौतिषिकः। एतस्य सोमदेवस्य। पापग्रहा अनिष्टग्रहाः। गृहीतपापाः प्रतिबन्धकाः। ५०–मृगाङ्कमौलिः शिवः। ५१–प्रमाणीकुरु स्वीकुरु। वत्स हे पुत्र। निर्मत्सरा ईर्ष्याद्वेष-रहिताः। ५२–तातस्य मत्पितुर्भवतो दुराग्रहः। ५३–तस्य सोमदेवस्य। राज्यदूता राज्यप्राप्तिसाधका तत्सूचका वा। शशिशेखरः शिवः। कीर्ति-विपर्ययोऽयशः। ५४–अस्य सोमदेवस्य। बिभर्तु–सोमदेवः। ५५–चित्रतरैराश्चर्यजनकैः। प्रतिपत्तिः स्वीकारो गौरवं वा। ५६–चन्द्रमौलिः शिवः। इत्यमुना प्रकारेण। ५७–प्रतिपत्तिपात्रे यौवराज्यभाजि। अनुमन्यते स्म वाञ्छति स्म। पूरेण जलप्रवाहेण। निम्ने नीचस्थाने। सिन्धुर्नदी। ५८–देवोपदेशादाकाशवाण्याः। रत्नपरीक्षको वैकटिकः। महार्हं बहुमूल्यम्। ५९–शेषो नागराजोऽनन्तः। आदिकूर्मस्तयोरुभयोर्धारयिता कच्छपः। ६०–स आहवमल्लः। वन्दिताज्ञम्–वन्दिता–आज्ञा येन यस्य वा तम्। यशोवतंसानि कीर्तिभूषितानि। ६१–कुम्भी गजः। चीन-पिष्टं सिन्दूरम्। विपाटलो रक्तवर्णः। चोलबलं चोलदेशसैन्यम्। रक्तापगा रुधिरनदी। ६२–चालुक्यरामे चालुक्यश्रेष्ठे, रामो दाशरथिश्च। हरयोऽश्वाः कपयश्च। वाहिनी सेना। तत्र कुमारे। भङ्गी व्याजः। ६३–कुञ्जरो गजः। चैत्रश्चैत्रमासः। चन्दनवायुर्मलयानिलः। आसीत् प्रादुर्बभूव। ६४–राजहंसो नृपश्रेष्ठः पक्षिविशेषश्च। निस्त्रिंशः खड्गः। यशःक्षीरं–यशः–एव क्षीरं दुग्धं तत्–कर्म। ६५–वीरप्रकाण्डे शूरश्रेष्ठे। द्रविडाङ्गनानां चोलीनाम्। ६६–विरुद्धे–आक्रान्तवति। पशुवत्–पलायनजन्यश्रमाधिक्यात् पात्राभावाद्वा केवलमुखेन। माता–इति जननीति मत्वा। ६७–मालवेन्द्रं मालवदेशनृपतिम्। अकण्टके वैरिरहिते। ६८–त्रिलोकवीरश्चै-

लोक्यातुलपराक्रमः। कियतो महाहवान् महारणान्—इति सम्बन्धः। दुर्दमानामजेयानाम्। ६९—उत्कन्धरानुन्नतग्रीवानुद्धतांश्च। अतितुङ्गस्यात्युन्नतस्य गौरवान्वितस्य च। नम्रभावो मस्तकावनमनं शरणागतिश्च। ७०—व्याजावतीर्णेन—व्याजेन छद्मनावतीर्णो गृहीतावतारस्तेन। जनार्दनो विष्णुः। हारेति—मुक्ताहारकान्तिभिः—इदं प्रकृतम्। नाभीसरोजं विष्णोर्नाभिकमलम्। ७१—भोजराजो मुञ्जश्चैतौ मालवदेशराजानौ। कुञ्जरो हस्ती। ७२—परिरम्भ आलिङ्गनम्। प्राज्यं श्रेष्ठम्। कृपाणाहतिभिः खड्गप्रहारैः। ७३—एकेति—एकातपत्रेणैकच्छत्रेणोर्जितं श्रेष्ठं यद्राज्यं तस्य लोभस्तस्मात्। छत्रान्तराणामन्यत्रान्यराज्यानाम्। भूभृतो राजानः पर्वताश्च। वंशः कुलं वेणुश्च। दण्डश्छत्रदण्डः, अन्यत्र सैन्यम्। ७४—गौडो गौडदेशनृपतिः। स्तम्बेरमो गजः। आहवो युद्धम्। कामरूपो देशविशेषः। प्राज्यं प्रभूतम्। प्रत्यूषोऽहर्मुखम्। कटकोऽद्रेर्नितम्बः। सिद्धवनिता देवयोनिविशेषाङ्गनाः। प्रालेयं हिमम्। ७५—सुरपतिरिन्द्रः। गाढेति—गाढमत्यन्तं पीडितमाकृष्टं यद्धनुस्तस्य टङ्कारस्तम्। उच्चैःश्रवा इन्द्रतुरङ्गः। आरूढः—तदनु। सुरवारण इन्द्रगजः। इभो गजः। एष इन्द्रः। ७६—काञ्ची चोलराजधानी। पदातिभिः सैनिकैः। अमुष्यास्य विक्रमाङ्कस्य। विलुण्ठिता हठादपहृतसकलपदार्था। देवालयेति—देवालयानां देवमन्दिराणां ध्वजपटावलिमात्रं पताकांशुकान्येव शेषं यस्याः सा। अम्बरं वस्त्रम्। कौपीनकं गुह्याच्छादनवस्त्रम्। ७७-द्राविडश्चोलदेशराजा। उड्डामरोऽत्युत्कटः, अत्युत्सुको वा। कोदण्डः कार्मुकम्। वैदेहीरमणो रामः। प्रत्यावृत्तिः पुनरागमनम्। अकाण्डेऽसमय एव। लङ्काचरै राक्षसैः।

## इति तृतीयः सर्गः

## अथ चतुर्थः सर्गः

१–कार्यतः–विक्रमाङ्कस्यैव युवराजकृत्यकरणक्षमत्वात्। स कुमारः। अव्याजवीरो निष्कपटशूरः। २–मलयस्तन्नामकः पर्वतः। समं सह। केरलकान्तानां केरलदेशाङ्गनानाम्। चूर्णकुन्तला अलकाः। ३–स्तम्बेरमो गजः। निर्द्रुमीकृते चन्दनवृक्षरहितत्वं प्रापिते। दुर्भिक्षमभावः। ४–डिण्डीरः फेनः। पिण्डं पिण्डप्रदानम्। श्रीखण्डं चन्दनम्। परोक्षाणामिव परलोकं गतानामिव। ५–वारणो गजः। और्वाग्निर्वडवानलः। ६–मलयनिम्नगा मलयाद्रिनद्यः। ७–सीमन्तिन्यङ्गना। जन्मभूमिर्मलयः। ८–तदीयेति–तत्पदेन विक्रमाङ्कपरामर्शः। सुरभिः सुगन्धिः। गुहाः * कर्मतापन्नाः *। ९–गजोन्मूलितेति–अम्बुधिविशेषणम्। अम्बुधेः–सकाशात्। १०–करटी गजः। श्रीखण्डं चन्दनम्। बलं सैन्यम्। ११–श्रीभुजङ्गस्य विष्णोः। चमूः सेना। १२–तोयद्विपो जलहस्ती। अङ्घ्रिः पादः। निगडः शृङ्खला। कुण्डलीभूय वर्तुलीभूय। वार्धिः समुद्रः। १३–दधिरेऽवहन्। सुरदन्ती–ऐरावतः। १४–वाहनमश्वः। गाहमानं जले प्रविशत्। मन्दुरा वाजिशाला। उच्चैःश्रवा इन्द्रतुरङ्गः। १५–दन्ती गजः। भ्रमः–प्रेक्षकाणाम्। १६–कालकूटं विषम्। हरग्रस्तं शिवकण्ठस्थम्। पयसां निधिः सागरः। १७–विद्रुमः प्रवालः। १८–कीलालं रुधिरम्। अपवित्रीकृतत्वादधुना कुम्भयोनिर्मुनिः समुद्रं पातुमसमर्थः। १९–उदरं मध्यम्। पन्नगः सर्पः। अन्त्रमाला–अन्त्रपद्धतिः। दन्ती गजः। २०–सिंहलद्वीपः सिंहलनामकोऽन्तरीपः। लोपामुद्रापतेर्मुनेरगस्त्यस्य। २१–धुनानेन कम्पयता। चित्रमाश्चर्यम्। गाङ्गकुण्डं गाङ्गकुण्डचोलपुरं, राजेन्द्रचोलनिर्मापिता चोलदेशराजधानी। कुण्डलं कर्णाभरणम्। २२–यशःकूर्चिकया–यशो निजकीर्तिरेव कूर्चिका तूलिका तया। द्रविडी द्रविडदेशनारी। पाण्डिमा धवलत्वम्–भर्तृवधेन कुङ्कुमविलेपनाभावात्। २३–लूनशिरस्का छिन्नमस्तका। २४–अवोचन्त असूचयन्। पुरन्ध्री सुचरित्रा स्त्री। जलार्द्रा जलेनार्द्रं व्यजनम्।

२५–लाङ्गूलं पुच्छम्। अन्तःपुरस्य जनशून्यत्वात्। २६–यत्पलायितो यस्मात् कुमारात् पलायितः। संकटं संकीर्णम्। दरी कन्दरा। बहुमन्यत–उपकारित्वात्। २७–विद्रुतानां पलायितानाम्। अलकाश्चूर्णकुन्तलाः। कर्पूरो घनसारः, तिलकं विशेषकम्, पक्षे कर्पूरस्तिलकश्च वृक्षविशेषौ, तैः क्षतत्वादङ्किताः। २८–द्रविडक्षितेश्चोलदेशस्य। प्राकारेति–प्राकारो वप्र एव सूत्रं तदेव शेषं यस्याः सा। काञ्ची चोलदेशराजधानी, अन्यत्र मेखला। २९–अनास्पदमपात्रम्। वेङ्गिर्देशविशेषः। ३०–चक्रं समूहः। चक्रकोटो नगरविशेषः। अन्ये सर्वेऽपि गजाः स्वायत्तीकृताः। ३१–कृतकार्यः साधितसर्वभूमिपालः। गम्यत्वं पात्रत्वम्। अरतेरुद्वेगस्य। ३२–शङ्कातङ्कमनिष्टाशङ्काभयम्। श्रेयः कल्याणम्। तातपादानाम्–आहवमल्लस्य। सास्रं सबाष्पम्। ३३–कैश्चिदनिर्दिष्टनामकैरिव। न्यधीयत निहिता। ३४–संमुखान्यचिरभावीनि। शरीरिणां मानवानाम्। ३५–अकारणं निर्हेतुकम्। ३६–दुर्निमित्तमनिष्टमपशकुनादि। अप्रयाणमवस्थानम्। कृष्णनदी कृष्णाभिधाना नदी। ३७–संमुखपातिनं पुरस्तादागच्छन्तम्। ३८–अप्रियावेदनेऽनर्थकथने। अत्यर्थं नितान्तम्। आयतैर्दीर्घैः। ३९–निर्यद्भिर्निर्गच्छद्भिः। अतिमात्रमत्यन्तम्। दुर्वार्त्तेति–दुर्वार्त्तानिष्टसमाचार एव वज्रानलो वज्रवह्निस्तम्। ४०–ककुभां दिशानाम्, अनादरे षष्ठी। भर्ता–आहवमल्लदेवः। विद्रवन्तं पलायमानम्। ४१–गणयित्वा विचार्य। ४२–आसन्नं निकटस्थम्। ४३–निरुत्साहया निरुत्सवया। शीकरा जलबिन्दवः। ४४–अवधीरय दूरीकुरु। व्यापिपर्ति व्याप्नोति। ४५–पाण्ड्यो देशविशेषस्तद्भूपतिर्वा। चोलश्चोलदेशनृपतिः। सिंहलः सिंहलद्वीपः। ४६–अकाण्डेऽकस्मादेव। विधिचाण्डालः–विधिर्ब्रह्मैव चाण्डालः–दुष्कर्मकारित्वात्। निष्कम्पा विघ्नरहिता अविच्छिन्ना वा। ४७–अङ्कपाली–आश्लेषः। पेयूषममृतम्। ४८–अर्धप्रबुद्धान्यर्धनिद्रितानि। वीक्षितान्यवलोकनानि। वासव इन्द्रः। गजनिमीलिकामुपेक्षाम्। ४९–दशनज्योत्स्नां दन्तचन्द्रिकाम्। मन्त्रिणोऽमात्यान्। ५०–महीभुजां शत्रुनृपतीनाम्। टङ्कः पाषाणदारणः। सर्वे मद्वशवर्तिन

इति भावः । ५१-श्रेणिः परम्परा । स्वयश एव राजहंसस्तस्य । ५२-विमुद्राभिरनन्ताभिः । कुलवधूसाम्यं स्थायित्वं निश्चलत्वम् । वेश्मसु गृहेषु । ५३-कोदण्डो धनुः । पाण्डित्यं चातुर्यम् । काकुत्स्थेति-काकुत्स्थो रामचन्द्रस्तस्येव निबिडं स्थाम तेजो बलञ्च यस्य सः । विक्रमलाञ्छनो विक्रमाङ्कदेवः । ५४-वोढा धारयिता । सोमेश्वरो ज्येष्ठः सोमदेवः । ५५-माहेश्वरः शिवभक्तः । गिरिजानाथनगरे शिवलोके । ५६-उन्मद उन्मत्तः । द्वाःस्थो द्वारपालः । अगम्यमविषयम् । ५७-श्रोत्रमैत्रीं कर्णगोचरताम् । विप्रुषो जलबिन्दवः । ५८-अन्तः प्रान्तभागः । हृतजीवितमधमजीवनम् । पार्वतीजीवितेश्वरः शिवः । ॐ सर्वं विनश्वरं हरादन्यत् ॐ । ५९-उत्सङ्गः क्रोडः । तुंगभद्रा नदी । देहग्रहविडम्बनां जन्मदुःखम् । ६०-श्रीकण्ठः शिवः । यत्र तत्र तीर्थादन्यत्र । ६१-प्रत्यपद्यन्त स्वीचक्रुः । ६२-दक्षिणेति-दक्षिणापथस्य दक्षिणदेशस्य जाह्नवी गङ्गा तुङ्गभद्रा । ६३-तरङ्गा एव हस्तास्तैः । इन्द्रमन्दिरे स्वर्गलोके । ६४-उद्दण्डात्युन्नता । डिण्डीरः फेनः । विमानं व्योमयानम् । पद्मसद्मा ब्रह्मा । ६५-शीकरा जलबिन्दवः । धराचन्द्रः क्षितिचन्द्रमाः । प्रत्युद्गतः कृताभ्युत्थानः । ६६-धौरेयोऽग्रणीः । चण्डीशः शिवः । द्वन्द्वं युगलम् । ६७-अपरिच्छिन्नममितम् । उत्करः समूहः । कृच्छ्रं कष्टम् । ६८-कण्ठदघ्ने कण्ठप्रमाणे । कल्लोला महान्तस्तरङ्गाः । चन्द्रचूडामणेः पुरीं शिवलोकम् । ६९-विरते तूष्णींभूते । तत्र दूते । असिधेनुश्छुरिका । ७०-तादृशस्तथाविधात् । ७१-यमं कृतान्तम् । तिग्मांशुः सूर्यो यमपिता । कण्टकं कुलकलङ्कम् । ७२-एतदिति-एतत्पदेनाहवमल्लमृत्युकुमारविलापादिपरामर्शः । ७३-कालकला दीर्घसमयम् । तथा विलपन् । सन्तानोऽविच्छिन्नप्रवाहः । दुर्दिनं वृष्टिः । ७४-आदिकूर्म हे प्रधानकच्छप, सर्वभारधर । कर्माणि भाग्यानि । शेष हे नागराज, अनन्त । ७५-स्वैरक्रीडा स्वच्छन्दविलासः । संभूय मिलित्वा । ७६-पुरन्दरधुरां स्वर्गराज्यभारम् । व्यवहितः कृतः दूरीकृतः । ७७-वीरसिंहासने रणक्षेत्रे । ७८-पौरुष हे पुरुषार्थ । वैधुर्यं विरहः । प्रताप हे तेजः । ७९-पद्मे हे लक्ष्मि । पद्माक-

रान्—तडागान्। पतिराहवमल्लः। ८०—शेषोऽनन्तः। विटङ्कः शिखरम्। स्नेहः—आर्द्रत्वं प्रेम च। कुतस्तस्याचेतनत्वात्। ८१—दुर्मेधा अतिजडः। पुराणः पुरातनः। ८२—शौर्यादि—आहवमल्लस्य बोध्यम्। एकत्राधारे। ८३—परिक्षयो मृत्युः। पाठान्तरम्- १ सर्गे १०२ श्लोकस्य टिप्पणी द्रष्टव्या। ८४—सर्गरत्नमुत्कृष्टा सृष्टिः। संघटिष्यन्ते मिलिष्यन्ति। परमाणवः कारणद्रव्याणि। ८५—वाहिनी सेना नदी च। सत्त्वं गुणो बलश्च, अन्यत्र जलजन्तुः। ८६—आर्येण ज्येष्ठभ्रात्रा। भाजनमाश्रयः। ८७—पन्थानं प्रत्यपद्यत कथश्चित् स्वस्थो बभूव। ८८—संस्थितस्य मृतस्य। ८९—संघातः समूहः। पुरीं कल्याणनगरम्। ९०—सुखगोष्ठी विद्वत्परिषत्। विभावरी रात्रिः। ९१—वाग्मिता वाचोयुक्तिपटुत्वम्। ९२—अग्रजन्मना सोमदेवेन। ९३—बाष्पाम्भसोऽश्रुजलस्य। तयोर्विक्रमाङ्कसोमदेवयोः। धाराः प्रवाहाः। अतिमांसला अतिदीर्घाः। ९४—वृत्तिर्व्यवहारः। कैतवबाह्याभिर्निष्कपटाभिः। अत्यवाह्यन्त यापिताः। ९५—ज्येष्ठं सोमदेवम्। गरिष्ठो गुरुतरः। प्रवृत्तय आचरणानि। ९६—वस्तुजातं पदार्थसमूहम्। तस्मै सोमदेवाय। ९७—भज्यते—उल्लङ्घ्यते। भवितव्यता भावि—अनिष्टादि। ९८—परिभ्रष्टं गलितम्। यश एवांशुकं वस्त्रम्। ९९—तूर्यं वाद्ययन्त्रम्। महात्मनां कुलवृद्धानाम्। १००—विक्लवः स्वाङ्गान्येव धारयितुमशक्तो विह्वलस्तस्य भावो वैक्लव्यम्। मदो ज्वरः। श्रियं राज्यलक्ष्मीं शोभां च। राजयक्ष्मा क्षयरोगः। १०१—कुन्तलाः कर्णाटदेशः केशाश्च। वैराग्यं सोमदेवस्य दुराचारेण, अन्यत्र पतिमरणेन। धवे स्वामिनि। १०२—स्तम्बेरमा गजाः। तदिति—तत्पदेन सोमदेवपरामर्शः। अभ्युक्षणं सिञ्चनम्। उदस्तेति—उदस्तान्युत्क्षिप्तानि यानि हस्तशीकरवारीणि करशीकरजलानि तैः। १०३—पालैरिति पाठे—पालैरश्वरक्षकैर्मण्डलभ्रमणोद्यता वर्तुलाकारेण धावनतत्पराः। दिव्यमग्निदिव्यादि, परीक्षाविशेषः। अयोग्यतां दूरं धावनासमर्थत्वम्। कैश्चित्कारणैर्धावनादिष्वनुपयुज्यमाना अश्वा गत्यविच्छेदसंपत्तये मण्डलाकारेण भ्राम्यन्त इति स्थितिः ॐ फालैर्दिव्यगोलकश्च। मण्डलं

दिव्यभूमिश्च ॐ। १०४–जातु कदाचित् । जातुषीं लाक्षामयीम् । विलयो गलनम् । क्षात्रं क्षत्रियसम्बन्धि । तेजः प्रतापमुष्णत्वञ्च । १०५–आचकाङ्क्ष पातुमैच्छत् । १०६–उद्दाम उत्कटः । समीरः पवनः । रजो धूलिः, रजोगुणश्च । मार्गमन्यत्र सत्पन्थानम् । अनीश्वरोऽसमर्थः । १०७–संभारः समूहः । दैवोपहतो दुर्दैवग्रस्तः । तमोऽन्धकारः, अज्ञानञ्च । स्तोमः समूहः । १०८–उपरि प्रतिबन्धेनोर्ध्वं गन्तुमशक्यत्वेन । विह्वलो विकलः । १०९–सर्वेषां छलान्वेषणतत्परः सर्वांश्छलयितुमिच्छन् । मदमूर्छया मदोन्मत्ततया । ११०–व्यरज्यत विरक्तो बभूव । लोभैकवसतेर्लोभस्यैवाश्रयात् सोमदेवात् । संवननं वशीकरणम् । १११–अकार्ये दुराचारे प्रजापीडने । कुमारस्य तात्पर्यं विक्रमाङ्कस्येच्छाम् । ॐ विक्रमाङ्कदेवस्यापि मारणे ॐ । ११२–अङ्कुशः सृणिः । अख्यातिरकीर्तिरेव बीजं तस्य वापाय रोपणाय । ११३–प्रणयप्रवणा प्रीतितत्परा । तस्य विक्रमाङ्कस्य । ११४–स सोमदेवः । इन्दुमित्रे चन्द्रसदृशे धवले । ११५–निराकर्तुं दूरीकर्तुम् । राज्येति–राज्यमेव ग्रहः पिशाचादिस्तेन गृहीतानामाक्रान्तानाम् । ११६–किं कार्यं किं प्रयोजनम् । विपर्यस्तधिया विपरीतबुद्धिमयेन । अमुना सोमदेवेन । ११७–साधयामि व्रजामि । ११८–द्रविडादयो द्रविडदेशनृपतिप्रभृतयः । आर्यं सोमदेवम् । विपर्यस्तं दुराचारिणम् । ११९–अर्थो वस्तु । चुलुक्यशिखामणिर्विक्रमः । श्रवणसरणिं कर्णमार्गम् । भेरी दुन्दुभिः । क्ष्माभृतः प्रतिनृपतयः । १२०–प्रत्यक्ता परिहृता । मधुना चैत्रेण वसन्तेन वा । मौर्वी ज्या । निराकृता रहिता । स्थितिरवस्था मर्यादा वा ।

## इति चतुर्थः सर्गः ।



## अथ पञ्चमः सर्गः

१–एष सोमदेवः। राज्यकण्टकविशोधनोद्यतो राज्यशत्रुदूरीकरणतत्परः। सिंहदेवं जयसिंहम्। २–तूर्यं वाद्ययन्त्रविशेषः। श्रीः–राज्यलक्ष्मीः। विलक्ष्यचेतसा शून्यचित्तेन [उपलक्षिता श्रीः], अथवेदं 'भूभुजा' इत्यस्य विशेषणम्। भूभुजा विक्रमाङ्कदेवेन सह। ३–आः–अत्यन्तखेदे। एनं विक्रमाङ्कम्। तल्पं शय्या। विभावरी रात्रिः। ४–अवनीपतेः सोमदेवस्य। त्रासेति–त्रासो भयमेव पङ्कपटलं तस्मिन्। पटीयसि अतिघने। संख्यं युद्धम्। ५–स सोमदेवः। कथन्मना दूयमानमानसः। पुष्कलं प्रचुरम्। बलं सैन्यम्। अमुष्य विक्रमाङ्कस्य। असात्त्विकं तामसम्। ६–स विक्रमाङ्कः। अप्रतर्क्येति-अप्रतर्क्येणाचिन्त्येन भुजवीर्येण शालन्ते ये ते तथोक्ताः। गहना अनुद्विग्नाः। ७–अन्तको यमः। प्रतिभटक्ष्माभृतां शत्रुनृपतीनाम्। तन्मदेति–तस्य सोमदेवस्य मदद्विरदानां मत्तदन्तिनां पादैश्चूर्णितं पिष्टम्। एककवलं क्षणमात्रेणैव क्षीणम्। ८–प्रत्यनीकपृतनाः शत्रुसेनाः कर्म। कालो यमः। कुहरं बिलम्। महीपतिं सोमदेवम्। ९–बाहुपञ्जरे–बाहू स्वभुजावेव पञ्जरं तस्मिन्। श्रीविलासभुवि–श्रियो लक्ष्म्याः शोभायाश्च विलासस्य भूराश्रयस्तस्मिन्। लालयन् रञ्जयन्। शतपत्रं कुशेशयम्। चित्रमाश्चर्यम्। १०–मन्युर्दैन्यम्, शोकः। सुप्रसन्नपयसा निर्मलजलया। तुङ्गभद्रा नदी। ११–अवगाहनं प्रवेशः स्नानं वा। वाहिनी नदी। प्रतिपथेन विपरीतमार्गेण। निम्नगा नदी। प्रणयं संगतिम्। आपगापतिः समुद्रः। १२–वारणो गजः। विशदं स्वच्छं निर्मलम्। १३–षट्पदो भ्रमरः। कुञ्जरो गजः। मुखरत्वं वाचालत्वम्। १४–मतङ्गजो हस्ती। करेणुर्हस्तिनी। चण्डिमा पराक्रमः। अप्रतिहतोऽबाधगतिः। १५–वाजी-अश्वः। तटिनी नदी। क्रमेलक उष्ट्रः। १६–द्विरदो गजः। आविलीकृतः कलुषत्वं प्रापितः। हन्त खेदे। अभ्रमुप्रियतमस्य दन्तिन ऐरावतस्य। १७–परिवारसुन्दर्योऽन्तःपुराङ्गनाः। अवधीरिताङ्कुशः–अवधीरितस्तिरस्कृत उपेक्षितोऽङ्कुशः सृणिर्येन सः। मदलङ्घितो मदोन्मत्तः। भाग्यसंपद्-

अङ्गनानां भयजन्यदिव्यविलासदर्शनात् । उपरि स्थितस्य हस्तिपकस्य । १८—घुसृणं कुङ्कुमम् । आग्रहमगाहत—आक्रान्तुमैच्छत् । १९—इतः परं पञ्चभिर्वनवासमण्डलं वर्णयति । केलिकाननं क्रीडोद्यानम् । शकुन्ताः पक्षिणः । एणलोचना अङ्गनाः । २०—यत्र वनवासमण्डले । दाहतः प्रभृति शिवनेत्रजन्यदाहादारभ्य । मेचकः श्यामः । क्रमुकः पूगवृक्षः । उष्णकिरणः सूर्यः । २१—यत्र वनवासमण्डले । केतकव्रातः केतकीसमूहः । भर्गः शिवः । २२—खण्डः समूहः । कुहरं मध्यम् । वीचिस्तरङ्गः । यत्र वनवासमण्डले । मरुतो वायवः । २३—वनवासमण्डलं वनवासीतिनामधेयः प्रदेशः । तत्—कर्म । उपवनस्थलीभुवः कर्म । २४—तूर्यं वाद्ययन्त्रविशेषः । प्रबोधयन् जागरयन् । २५—एनं कुमारम् । जयकेशी कोंकणदेशाधिपः ॐ सिद्धजयसिंहदेवस्य मातामहः ॐ । ॐ प्रार्थितात्—दण्डपदेन ॐ । कोंकणप्रणयिन्यः कोंकणदेशाङ्गनाः । २६—आलुपेन्द्रमालुपाख्यदेशाधिपम् । त्यक्तचापलं विनीतम् । अविनयाग्रदूतिका—औद्धत्यसूचिनी । तादृशाम् ॐ कुमारवश्यपराक्रमिणाम् ॐ । २७—व्यापृतैः संलग्नैः । शिलीमुखैर्बाणैर्भ्रमरैश्च । केरलक्षितिपवामचक्षुषां केरलदेशनृपाङ्गनानाम् । पूर्वकल्पितं प्रथममेव कृतम् । गण्डपालिषु कपोलेषु । २८—विभाव्यावलोक्य । रभसाद् वेगात् । क्ष्माभुजङ्गं पृथ्वीवल्लभम् । साध्वसम्—'साध्वसं भयलज्जयोः' इत्यमरः । लोलेति—लोले चपले वारिनिधिरेव नीलकुण्डले यस्याः सा । भूः पृथ्वी, अङ्गना च । २९—प्रतिक्रिया प्रतीकारः । द्राविडेन्द्रपुरुषश्चोलदेशाधिपवीरराजेन्द्रदूतः । ३०—मौलिर्मस्तकम् । स दूतः । व्याजहारोवाच । दशनेति—दशनांशवो दन्तकिरणा एव पल्लवास्तेषु न्यस्तानि कोमलानि पदानि वाक्यानि चरणाश्च यस्यास्ताम् । सरस्वतीं वाचं वाग्देवतां च । ३१—चुलुक्यनृपवंशमण्डन हे विक्रम । धाम किरणान् । पङ्करुहिणीविलासिनः सूर्यस्य । संकलयितुं गणयितुम् । ३२—करवालः खड्गः । यत्प्रभवं यस्माज्जातम् । ऐन्दवीं चान्द्रमसीम् । ३३—खड्गवारि कृपाणधाराजलम् । शैवलः शेवालम् । कुन्तलाः केशाः । निवहः समूहः । ३४—समरसीम्नि रणक्षेत्रे । व्यक्तिं प्राकट्यम् । एणचक्षुषामङ्गनानाम् । ३५—ते तव । करटिनो गजाः ।

अलिभिर्भ्रमरैः। ककुभो दिशः। प्रसन्नतां नैर्मल्यम्। ३६–त्वादृशेन त्वत्तुल्येन। क्षत्रं क्षत्रियजातिः ॐ क्षात्रधर्मः ॐ। युगान्तसमयः प्रलयकालः। ३७–अग्रजे सोमदेवे। ऊर्जितगुणेन श्रेष्ठगुणशालिना। ते तव। ३८–भुवा राज्येन। केसरी सिंहः। भूधरे पर्वते। ३९–महाभट हे महावीर। कुपार्थिवः कुत्सितो नृपः क्षितीशश्च। कदर्थनं पीडनम्। ४०–गिरिगुहाश्रये–गिरीणां पर्वतानां गुहा एवाश्रयस्तस्मिन्। साहसाङ्क हे विक्रमाङ्क। गलितत्रपा गतलज्जाः। ज्या मौर्वी। प्रतिरवः प्रतिध्वनिः। ४१-उत्प्रतापेति-उद्गतः प्रताप एव दहनो वह्निर्यस्मात्तत्। मुखमग्रभागमाननञ्च। [असिः–एव] इन्द्रजालिक इन्द्रजालनिपुणो मायावी। दिव्यं स्वर्गीयम्। लूनेति–लूनं छिन्नं मर्त्यं शिरो येषां तेषाम्। ४२–भाग्यभूमिं सौभाग्यभाजनम्। भारतादिषु महाभारतप्रभृतिप्राचीनकथानकेषु। ॐ भारतं वर्षम् ॐ। दर्शनेन स्वस्य। ४३–क्षमाभुजां शत्रुनृपतीनाम्। लोहकर्षकदृषच्चुम्बकमणिः। सहोदराः सदृशाः। उपान्तवर्त्मनि निजसमीपम्। ४४–चोलभूमिपतिर्वीरराजेन्द्रः। किं नु वक्ति किमपि वक्तुमसमर्थः। ४५–श्रुतिं प्राप्तवत्सु कर्णगोचरतां गतेषु। राजहंसवनिता राजहंसी। मानसं चित्तं सरश्च। तावकी त्वदीया। ४६–कन्यकां निजपुत्रीम्। त्वत्करप्रणयिनीं तव हस्तगताम्। ४७–चारुणा सुन्दरेण। कुन्तलपतिर्विक्रमाङ्कः। प्रसन्नतां रोषाभावम्। तादृशां चोलभूपतिसदृशानाम् ॐ पराक्रमिणाम् ॐ। ४८–शशिमुखी चोलकन्यका। मिषमात्रं व्याजमात्रम्। नित्यकुण्डलितकार्मुकः सततसज्जधनुः। ४९–उदीरयन् प्रकटयन्। अञ्चलः प्रान्तभागः। कुन्तलीनयनपूर्णचन्द्रमा विक्रमाङ्कः। ५०–सुजनतां सौजन्यम्। मुखरत्वं दुष्टकर्म। अत्र राज्ञि। भारती वाणी। ५१–दोषजातं दुर्गुणसमूहम्। क्षारभावं क्षारत्वम्। कथमपि महता कष्टेन। ५२–दिग्जयव्यसनिना सकलदिग्विजयदुर्ललितचित्तेन। वेत्ति–अथवा। ५३–वाञ्छितं कन्यकादानादि। पारयामि समर्थः। ५४–अमृतद्रवोपमां सुधाप्रवाहतुल्याम्। इन्दुकराश्चन्द्रकिरणाः। इति पूर्वोक्तप्रकारेण। अपयातसाध्वसो विगतभयः। साधुश्चोद्धतः। व्यजिज्ञपन्निवेदयाञ्चक्रे। ५५–वदान्यतोदारता। समादिश-

त्याज्ञापयति। परिपन्थी विरोधी। अर्थिनां याचकानाम्। ५६-अव्यक्तं निष्कपटम्। अत्र मत्पतौ। निवृत्य परावृत्य। तुङ्गभद्रा नदी। मुद्रिते चिह्निते। पदमवस्थितिम्। उपान्तवर्त्मनि सीमान्तप्रदेशे। ५७-कैश्चिद्देव-तत्पश्चात्। सततप्रयाणकैरविरतप्रयाणैः। तत्र तुङ्गभद्रातटे। पर्वण्यमावास्यायाम्। तिग्मरश्मिः सूर्यः। ५८-गाहते भजति। अत्रास्मिन् चोलराज्यप्रदेशे तु। प्रीतिदानं प्रीतिमूलकं कन्यादानम्। भीतिदानतां भयजन्यदानत्वम्। तेन हेतुना। विलक्षता सलज्जत्वम्। यद् यदि। ५९-मादृशां मत्तुल्यानाम्। शुभविपर्ययादपुण्यात्। यदि परम्। भवादृशेषु त्वत्सदृशेषु। सा-असत्यता। ६०-कोविदेन विचक्षणेन। प्राङ्निवेदितं पूर्वसूचितम्। ६१-नगरान्निजराजधानीतः। पुष्पसायकपताकया कामवैजयन्त्या। ६२-सन्धिबन्धं स्नेहसम्बन्धम्। शान्तेति-शान्ता दूरीभूता साध्वसं भयमेव महारुक्-महापीडा यासां ताः। धामसु गृहेषु। ६३-अस्य चोलराजस्य। भैरवैर्भयानकैः। अभ्रं नभः। अभ्रमुभुजङ्ग ऐरावतः। निर्भरं व्याप्तम्। ६४-सर्वतः सर्वत्र। प्रतिरवापदेशतः प्रतिध्वनिव्याजात्। द्विरदवृन्दघट्टनाद्धस्तियूथसंघर्षणात्। ६५-ऊर्मिस्तरङ्गः। करशीकराम्बुभिः शुण्डादण्डोत्क्षिप्तजलबिन्दुभिः। वारणो गजः। ६६-चमूः सेना। रजो धूलिः। दिग्भ्रमं दिङ्मोहम्। कुञ्जरध्वजपटान्तवीजनैर्गजानां केतुवस्त्राञ्चलकृतैः पवनैः। ६७-क्षोणिरेणुमिषतः क्षितिरजोव्याजात्। सदाध्वगः सदैव गन्ता। स्यन्दने निजरथे। पश्चिमाद्रिविषमस्थलीभुवामस्ताचलगर्तानाम्। ६८-नन्दनं देवोद्यानम्। पांसुभिः क्षितितलोत्थितधूलिभिः। वासितैः सुगन्धितैः। चौर्यकेलिः ※ परपुरुषपरनारीक्रिया (-क्रीडा ?) ※। सुरपांसुलाजनः स्वर्गस्वैरिणीलोकः। ६९-पुष्पमधु मकरन्दम्। पांसुदूषितं क्षितिरजोमलिनम्। नन्दनं देवोद्यानम्। अलिभिर्भ्रमरैः। पटलं समूहः। ७०-जैत्रेति-जैत्रा जयशीला या वाजिपृतना घोटकचमूस्तस्याः खुरक्षताभिः क्षोणिधूलिपटलीभिः क्षितिरजःपुञ्जैः। बलं सैन्यम्। सुगमत्वमनायासगम्यत्वम्। ७१-चेतसश्चित्तस्य। दधतीः कर्म। अवटस्थलीभुवो गर्तप्रचुरा भूमीः। वाजिभिरश्वैः। वातहरिणो वातमृगः।

७२—धनुश्चापः प्रियङ्गुलता च। शिलीमुखा बाणा भ्रमराश्च। विभूतिभिः समृद्धिभिः। केलिकाननं क्रीडोद्यानम्। व्यधीयत निर्मीयते स्म। ७३—अप्रयाणरहितैर्विश्रान्तिरहितैः। स चोलदेशाधिपः। तरङ्गिणीं तुङ्गभद्राम्। कार्यजातं कर्तव्यसमूहम्। ७४—परिजनः सेवकवर्गः। पृष्ठतः किञ्चित्कालानन्तरम्। ७५—अर्णवः समुद्रः। पिशुनोऽन्योन्यभेदकः। मध्यवर्तिभिरुभयथापि मध्यस्थैः। प्रतीपगतिर्विपरीतमार्गगामिनी। अब्धिवल्लभा नदी। ७६—सिन्धुर्नदी। निलय आवासः। सर्वेऽपि नदीतटे निजावासं कर्तुमिच्छन्ति स्म। अन्तरेति—अन्तरे मार्गे एव क्षपिता यापिता रात्रियैंस्तैः। ७७—चोलश्चोलदेशनृपतिः। अवगाहनं स्नानम्। घनसारः कर्पूरः। विटङ्कः शिखरम्। तटिनी तुङ्गभद्रा। ७८—दक्षिणतटे तुङ्गभद्राया दक्षिणतीरे। बाहुं निजभुजम्। आहवो युद्धम्। ७९—द्राविडश्चोलनृपः। तत्कटकं विक्रमाङ्कसैन्यम्। अनर्थपङ्कतोऽनिष्टपङ्कात्। वितरणं दानम्। ८०—संगमो योगः। संमत इष्टः। गुरुर्ग्रहः। पुष्यो नक्षत्रभेदः। ८१—श्रियः प्रियतमो विष्णुः। कर्मणा भाग्येन। उदश्रुनयन उद्गतहर्षाश्रुः। प्रभावतः प्रभावात् प्रभायुक्तस्य च। ८२—पादयोर्विक्रमाङ्कस्य चरणयोः। न्यवर्तयन्निषेधति स्म। संभ्रमस्त्वरा, आदरश्च। ८३—वयसावस्थया। वयोधिकैर्वयोवृद्धैः। ८४—उदीरितवतोक्तवता। ८५—अर्धासनेति—अर्धासनस्य विक्रमाङ्कस्य सिंहासनेऽर्धस्थानस्य प्रणयेन प्राप्त्या पूर्णमनोरथः। प्रत्यादिशन् तिरस्कुर्वन्। किरीटरत्नातपं मुकुटमणिकान्तिकलापम्। सदसि सभायाम्। ८६—चन्द्रातपं शशिज्योत्स्नाम्। चालुक्यगोत्रतिलक हे विक्रमाङ्क। दुर्वृत्ता अविनीता दुराचारिणः। गुरुराचार्यो महांश्च। ८७—धाम कुलगृहम्। दृष्टान्तभूर्दृष्टान्तस्थानम्। अनवधेरसीमस्य। वेधसा ब्रह्मणा। आदिराजानो मान्धातृप्रमुखा आदिपार्थिवाः। ८८—व्यस्तमेकैकम्। समस्तं मिलितम्। ८९—धाम्नि गृहे। माधुर्यधुर्यैरतिमधुरैः। पदैर्वाक्यैः। व्याहृत उक्तः। चोलीनां चोलदेशाङ्गनानाम्। विनोदयन् व्यापारयन्। चालुक्यविद्याधरो विक्रमाङ्कः।

इति पञ्चमः सर्गः

# अथ षष्ठः सर्गः

१–विभवभरेण समृद्धिसमूहेन। नृपनन्दनाय विक्रमाङ्कदेवाय। परिणेतुर्विक्रमाङ्कदेवस्य। २–द्रविडनरपतेश्चोलराजाय। निरवधि प्रभूतम्। कुन्तलनाथनन्दनो विक्रमाङ्कदेवः। ३–तत्र चोलराजे। प्रतिपदं प्रतिक्षणम्। क्षितीन्दुर्विक्रमाङ्कदेवः। ४–द्रविडपतिकथाद्भुतक्षणेषु चोलनृपतिविषयक-वार्तालापावसरेषु। पुलकपरिकरै रोमाञ्चैः। कपोलपालीं गण्डस्थलीम्। ५–असौ चोलनृपतिः। परिचयं गोचरत्वम्। सुजनशिखामणिः सज्जन-श्रेष्ठः। ६–द्रविडनृपतिपुत्रिकां चोलकन्यकाम्। स कुमारः। प्रणयिषु स्नेहपात्रेषु। ७–रभस औत्सुक्यं त्वरा, आनन्दो वा। स्थितिमव-स्थाम्। विधिहतकदुराग्रहादधमदैवनीचेच्छया। अकाण्डेऽसमय एव, अकस्मात्। द्रविडेन्द्रं चोलनृपतिम्। इन्द्रधाम्नि स्वर्गे। ८–हिमकरश्चन्द्रः। कराः किरणाः। ललाप विलापांश्चकार। ९–द्रविडविषयश्चोलदेशः। श्रवणपथातिथिना आकर्णितेन। अभिजनवति कुलीने। चोलराजपुत्रेऽ-धिराजराजेन्द्रनामधेये। असौ कुमारः। १०–करटी गजः। समीरणः पवनः। धरणिभुजां नृपतीनाम्। क्षितिपतिर्विक्रमाङ्कः। आदिपुरीमादि-नगरीम्। काञ्चीं चोलदेशराजधानीम्। ११–समजन्यभूत्। मेखला काञ्ची। कलापः समूहः। पुष्पचापः कामः। प्रगुणं बहुलम्। अमुष्य कुमारस्य। पुरन्ध्रिचक्रं नगराङ्गनासमुदायः। १२–अधर ओष्ठः। किंशुकं पलाशपुष्पम्। शुकः कीरः। क्रमुकदलं पूगखण्डम्। अर्पयन्ती–मुखेनैव। नेत्रप्रणयिनि दृष्टि-गोचरे। १३–अध्यरोहदारुरोह। तृणं तृणवत्तुच्छम्। मनसिजः कामः। १४–मुधा व्यर्थमेव। नयनान्तं कटाक्षम्। मृगीदृशां तरुणीनाम्। मन-सिजचक्षुः कामरूपं नेत्रम्। १५–हृदि–अन्तःकरणे वक्षःस्थले च। पद्म-वस्थितिः। शुद्धभासोभयत्रापि निर्मलकान्त्या। अधरं तिरस्कृतं नीचैः पातितं च। धरणीन्द्रसूनुना कुमारेण। १६–मनसिजः कामः। नखलिपिं नखक्षतपरंपराम्। आचचक्षे–उवाच। १७–मणिकुण्डलं कर्ण। श्रवण-

परिच्युतं कर्णभ्रष्टम्। पुष्पबाणः कामः। असितोत्पलचारुलोचनाया इदं परस्या विशेषणम्। —श्रियम् अभजतेति सम्बन्धः। १८—नगरकुरङ्गलोचनानां पुराङ्गनानाम्। १९—रदच्छद ओष्ठः। लुलोके दृष्टः। प्रकटितेति क्रियाविशेषणम्। किलकिञ्चितं विलासः। ईक्षणाञ्चलेन कटाक्षेण। २०—वेदिका प्राङ्गणादिषु कृतमुपवेशनस्थानम्। अन्तरालं मध्यम्। सुरशिखरी मेरुः। उष्णकरः सूर्यः। निराचकार तिरस्कृतवान्। २१—तत्र काञ्चीनगरे। परिसरभूमिषु नगरबहिर्भागे। गाङ्गकुण्डं राजेन्द्रचोलनिर्मापिता गाङ्गकुण्डचोलपुराख्या चोलदेशस्यैका राजधानी। २२—द्रविडनरपतिश्चोलदेशराजा। पयसां निधौ सागरे। अविहितविवाहमङ्गलाया अपरिणीतायाः। आदिधाम प्रथमगृहम्। २३—यद् गाङ्गकुण्डपुरम्। वप्रः प्राकारः। सुरपुरममरावती। हेमशैलः सुमेरुः। विबुधविभूतिभराद् देवानामन्यत्र पण्डितानामैश्वर्यबलात्। २४—परिपन्थी शत्रुः। पदं राज्यसिंहासनम् ❀ गाङ्गकुण्डपुराधिपत्ये ❀। तत्र गाङ्गकुण्डपुरे। चोलसूनुमधिराजराजेन्द्रम्। २५—अटवीधनुर्धराणां वनचरवीराणाम्। विषमपथेषु दुर्गमार्गेषु। तुङ्गभद्रा नदी। वन्दनमालिका तोरणस्रक्। २६—परिगलितेषु व्यतीतेषु। चोलसूनोरधिराजराजेन्द्रस्य। श्रियं राज्यम्। राजिगाभिधानो राजिगेत्यपरनामधेयो राजेन्द्रचोलः। प्रकृतिविरोधेति—प्रकृतिविरोधो नैसर्गिकवैरं प्रजाजनकृतो विप्लवो वा तेन हतस्य विशसितस्य। इदं चोलसूनोर्विशेषणम्। वेङ्गिनाथो वेङ्गिदेशाधिपतिः। २७—असौ राजिगः। अमुं विक्रमाङ्कदेवम्। प्रगुणं सज्जम्। पृष्ठकोपहेतोः पृष्ठभागादाक्रमणार्थम्। प्रकृतिविरोधिनं निसर्गवैरिणम्। सोमदेवं ज्येष्ठभ्रातरम्। २८—सुभटेति—सुभटशतानामसंख्यवीराणां निशातासु तीक्ष्णासु खड्गधारासु विहरणेन सव्रणः क्षतः पादपल्लवो यस्याः सा। नयनिपुणेषु न्यायपरेष्वपि। भरेण सामस्त्येन। क्षिपति धत्ते। पदं चरणमन्यत्रावस्थानम्। २९—सुकृतविपर्ययतः पापात्। तादृक् तथाविधा। यया कुमत्या। नौर्नौका। ३०—शस्त्राण्येव देवतास्तासाम्। निरङ्कुशे स्वेच्छाचारे। एताः शस्त्रदेवताः। प्रधनेषु संग्रामेषु। ३१—मुषितधियोऽपहृतसन्मतयः। रभसवशा-

दविमृश्यकारित्वात्। दग्धभूपा दुष्टनृपतयः। बलं शक्तिः सैन्यञ्च। पतङ्गव्रतं शलभत्वं नाशमिति भावः। ३२-हन्त खेदे। प्रतिहारवारणाभिर्द्वारपालादिपरिजनकृतैर्लोकदूरीकरणैः। प्रकृतिजडाः स्वभावमूर्खाः। अमी नृपतयः। संरभन्ते चेष्टन्ते। ३३-विदधति कुर्वन्ति। कुधियः कुबुद्धयः पुरुषाः। स्फटिकेति-स्फटिकमणिनिर्मितशिवलिङ्गमूर्त्तिषु। मनसि निधाय विचार्य। त्रिनयनलिङ्गं शिवज्योतिर्लिङ्गम्। मिथ्या-असत्यमिति कृत्वा। ३४-पुरुषव्रतं पौरुषम्। अतिकातरा नितान्तं भीताः। परिकलयन्त्याशङ्कन्ते। ३५-अभिसरणपरा-अभिसारिका भ्रमन्ती च। वराकी दुराचारिणी। धरणिभुजां नृपाणाम्। पदं चरणमवस्थानं च। कलङ्कं कालुष्यम्। ३६-वितर्कयन्ती ज्ञापयन्ती। अनाप्तं परकीयजनम्। आप्तवर्गमिष्टजनम्। उपसर्पणं ॐ समीपगतिः ॐ। ३७-विधिदैवम्। निर्दलयन्ति विनाशयन्ति। ३८-अनुचितमभक्तिपदम्। अमुना विक्रमाङ्कदेवेन। अग्रजस्य सोमदेवस्य। व्यवसितं कृतम्। अस्मिन् कुमारे। चकार सोमदेवः। चोलराजिगेन वेङ्गिचोलदेशाधिपतिराजेन्द्रेण। ३९-नृपतनये विक्रमाङ्के। राजिगस्य राजेन्द्रस्य। बलेन सैन्येन। ४०-अथ सोमदेवगजान् वर्णयति। अनुसरद् भजमानम्। असितातपत्रमैत्रीं नीलच्छत्रसादृश्यम्। मधुकरमण्डलं भ्रमरसमूहः कर्तृपदम्। येषां दन्तिनाम्। दानं गजमदः। सरोरुहिणी कमलिनी। अनुकारः सादृश्यम्। ४१-अगणितसृणिभिः-अगणितास्तिरस्कृताः सृणयोऽङ्कुशा यैस्तैः। यैर्गजैः। कुलगिरयो महेन्द्रादयः कुलाचलाः। अजस्रं सन्ततम्। धातुतरङ्गिणी गैरिकादिनदी। ४२-दशनयुगं दन्तयुगलम्। श्रियं राज्यलक्ष्मीम् ॐ हस्तिनां हि दन्तेषु श्रियः ॐ। उपोढकौतुका उपजातकुतूहलाः। स्मरणशरणपङ्कजानि विलीनकमलानि। ४३-व्यधुश्चक्रुः। षट्पदानां भ्रमराणाम्। विटपी वृक्षः। ४४-गलन्तीमधः पतन्तीम्। करैः शुण्डादण्डैः [ उपलक्षिताः ]। ४५-रण एव जलधिः। द्विरदेश्वरा महागजाः। तदीयाः सोमदेवसैन्यस्थाः। श्रियं शोभाम्। योधमण्डलानि सुभटसमूहाः। ४६-अथ सोमदेवसैन्याश्वान् वर्णयति। कुलिशेति-

कुलिशं वज्रं तद्वत् कठिनानां लोहबन्धानां खुरेषु कीलितानां लोहानां ( हि. नाल ) योगात् सम्बन्धात् । कुट्टिमो निबद्धा भूः । विशिखशकलानि बाणखण्डानि । रणखुरली युद्धभूमिः । यदीयैरश्वसम्बन्धिभिः । ४७–वालधिः पुच्छकेशपुञ्जः । समीरणः पवनः । मरुद् वायुः । अविभाव्यतया–अदृश्यतया । ४८–प्रतिफलननिभात् प्रतिबिम्बव्याजात् । सहस्रभासा सूर्येण । पल्ययनं पर्याणम् । अर्थिता अपेक्षिताः । येऽश्वाः । ४९–जवो वेगः । नाथ हे स्वामिन् । नभस्याकाशे । विधिं ब्रह्माणम् । प्रतिक्षिपन्ति स्मोपालभन्ते स्म । ५०–प्रतिदिशं दिशि दिशि । अश्ववारोऽश्वारोहः । वर्मबन्धः कवचः । हया अश्वाः । उपक्रममुद्योगम् । ५१–असितविलसितेन नीलवर्णेन । तद्बलानां सोमदेवसैनिकानाम् । असिलतिकानिवहेन खड्गसमूहेन । गगनमेव गिरिः पर्वतस्तस्य तटी–कर्तृपदम् । इन्द्रनीलद्युतिर्मरकतद्रवः । ५२–कुन्तमाला प्राससमूहः । शिखण्डिशिखण्डो मयूरपिच्छम् । क्षणमविरहिता क्षणाय [ शिरसां मण्डलैः ] युक्ता । विपक्षाः शत्रवः । ५३–अभिहितैरुक्तैः । भुवनैकमल्लः सोमदेवः । रस उत्साहः । अन्तरमवकाशम् । विकल्पः संशयः । ५४–द्रविडबलं चोलराजराजिगसैन्यम् । राजसूनोर्विक्रमस्य । नृपतिः सोमदेवः । आगाद्राजगाम । ५५–ग्रहेति–ग्रहः पिशाचादिस्तेन कलितं ग्रस्तम् । अग्रजं सोमदेवम् । निवेदयाञ्चकार शनैरुवाच । ५६–एतद् भ्रातृयुद्धरूपम् । विधिहतकेन दुर्दैवेन । विरोधेति–विरोधो वैरमेव सारिणी जलप्रणालिका अल्पनदी वा ताभिः । अविनयेति–अविनयो दुराचार एव रसो जलं तस्य पूरेण प्रवाहेण पूरिताभिः । अकीर्तिरेव फलम् । ५७–निहतनयो भ्रष्टनीतिः । समं सह । परिपन्थिना शत्रुणा [ राजिगेन ] । पृषत्कैर्बाणैः । अपरामृशता–अस्पृशता । ५८–परिपन्थिनीमननुमोदिताम् । श्रियं राज्यलक्ष्मीम् । अत्र सोमदेवे । कदर्थयामि पीडयामि । ५९–अपसरणं पलायनम् । इतो रणस्थलात् । किंस्विद् वितर्के । गोत्रं कुलम् । ६०–गिरं वाणीम् । विशदमना निर्मलचेताः । तस्य पार्श्वे सोमदेवसन्निधौ । राजपुत्रो विक्रमः । ६१–स सोमदेवः । प्रपद्य

तथेति स्वीकृत्य । वितथवचा असत्यवाक् । कुलपांसनत्वमाप्तः कुलकलङ्कभूतः । अनुगुणमनुकूलम् [ विक्रमाङ्कम् ] । अनार्जवं कुटिलम् । ६२-उपनतं प्राप्तम् । त्रिदिवगतः स्वर्गस्थः । वक्ष्यते कथयिष्यति । जातनिद्रं सुप्तम् । शशिमौलिः शिवः । ६३-देवकार्ये दुष्टदलनात्मके । तरलयति चञ्चलयति । विकल्पदोला-विकल्पः सन्देह एव दोला-कर्तृपदम् । मनः कर्म । ६४-सपदि सांप्रतम् । शुभं पुण्यम् । भोगहेतोरुपभोगाय । विगलति नश्यति । ६५-भव संपद्यस्व । प्रगुणधनुः सज्जचापः । परिपन्थिनां शत्रूणाम् । प्रमाथे विनाशे । ६६-गिरितनयादयितस्य शङ्करस्य । इन्दुमौलेः शिवस्य । ६७-प्रहारसज्जं प्रहरणतत्परम् । बलयुगलं सैन्यद्वयम् । प्रतिकलं प्रतिक्षणम् । स विक्रमाङ्कः । ६८-मदकरटिनं मदगजम् । मथनगिरिं मन्दराद्रिम् । प्रतिबलेति-प्रतिबलं शत्रुसैन्यमेव वारिधिस्तस्य लोडनम् । चकार विक्रमाङ्कः । ६९-अहमहमिकया-अन्योन्याहंकारेण । अमुष्य विक्रमाङ्कस्य । बलं सैन्यम् । तयो राजिगसोमदेवयोः । महाम्बुराशेर्महासागरस्य । तदनु तत्पश्चात्-इदमादौ सम्बध्यते । ७०-असितपताकया नीलध्वजेन । ध्वजगरुडः केतुचिह्नभूतो गरुत्मान् । पन्नगः सर्पः । सत्यगरुत्मतः परमार्थगरुडस्य । प्रतिष्ठां साम्यम् । ७१-अवतंसो भूषणम् । द्विरदो गजः । परमार्थसिंहलीलां सत्यसिंहशोभाम् । केतुर्ध्वजः । मृगेन्द्रश्चिह्नात्मकः सिंहः । ७२-क्षतजतरङ्गवतीषु रुधिरनदीषु । चिह्नमत्स्याः केतुचिह्नमीनाः । संख्ये रणे । अकृत्रिमः सत्यः । ७३-दूरमत्यर्थम् । अनिमिषप्रियाजनस्य देवाङ्गनालोकस्य । अवलम्बनानपेक्षं गमनं निराश्रया-आकाशगतिः-कर्तृपदम्-प्रियमकरोदिष्टसाधकमभूदिति सम्बन्धः । ७४-प्रहतिनिवहः प्रहरणसमूहः । अधिरोहो हस्त्यारोहो भटः । करटी गजः । अनुशयं पश्चात्तापम् । ७५-अरातिः शत्रुः । चूडामणिर्मुकुटरत्नम् । परागं धूलिम् । एको भटः । निराचकार दूरीकरोति स्म । ७६-समरसंकटे तुमुले रणे प्रवृत्ते । प्रतिभटाः शत्रुवीराः । अरिकरतः शत्रुहस्तात् । करवालं खड्गम् । ७७-असुभिः प्राणैः । यियासुभिर्निर्गन्तुमिच्छुकैः [ उप-

लक्षितः ]। अमनुत मन्यते स्म। ७८—विघटितकवचस्त्यक्तवारबाणः। उज्झितकङ्कटं त्यक्तकवचम्। लालसा—अतिप्रीतिः। खलानां निन्दकपुरुषाणाम्। प्रतिक्षिपन्ति दूरीकुर्वन्ति। ७९—कपालानि शिरोस्थीनि। मदकरटी मदगजः। शिशिरं शीतलम्। पानपात्रप्रणयिनं चषकस्थम्। आसवं मद्यम्। मृत्योर्यमस्य। ८०—कपालशुक्तेः शिरोस्थिशकलस्य। कृपाणलूनः खड्गच्छिन्नः। कृतान्तो यमः। पिधानमाच्छादनम्। ८१—महाहवप्रबन्धे तुमुलसंग्रामे। पाटनं विदारणम्। राजसूनुर्विक्रमाङ्कः। ८२—द्रविडबले राजिगसैन्ये। न्यपिबत् पपौ। अरातिः शत्रुः। ८३—कपालजालं कर्परसमूहः। करटिनि गजे। दुरापभाजनानामलभ्यचषकाणाम्। सीधु मद्यम्। व्यघटत लोपमाप। ८४—पदं चरणमवस्थानञ्च। सुरभिकुशेशयकोशः सुगन्धिकमलकलिका। नृपसुतो विक्रमाङ्कः। करवालः कृपाणः। मधुकरमालिका—अलिपङ्क्तिः। ८५—समवर्ती कृतान्तः। चषकः पानपात्रम्। कपालशुक्तयः शिरोस्थिशकलानि। करिदशनपरंपरा गजदन्तपङ्क्तिः। उपदंशमूलकानां—मद्यपानान्तराले मूलकाख्यः शाकभेदः ( हि. मूली ) चर्व्यते भक्ष्यते चेति प्रसिद्धिः। तथाच वेणीसंहारे—'अग्रमांसोपदंशं पिब नवशोणितासवम्' इति। ८६—अवनिपतिद्वयं राजिगं सोमदेवं च। पृषत्केति—पृषत्का बाणा एव कटाक्षाः। क्षितिपतितनयेन विक्रमेण। संगराग्ररङ्गे—संगराग्रं युद्धाग्रभाग एव रङ्गो नाट्यभूमिस्तस्मिन्। ८७—कुलिशं वज्रम्। कङ्कपत्रं बाणविशेषः। करटी गजः। निपेतुरपतन्। ८८—द्विरदपतिर्महागजः। अमुष्य विक्रमाङ्कस्य। कालो यमः। रणसरः—रण एव सरस्तडागस्तत्—कर्म। विभ्रमपुण्डरीकं विलासकमलम्। ८९—करङ्कोऽस्थिपञ्जरम्। द्विरदघटा गजसमूहः। चक्रवालं मण्डलम्। अनणु बहुलम्। शिवा क्रोष्ट्री। ९०—किमपरमन्यत् किम्। स विक्रमाङ्कः। राजयुग्मं नृपतिद्वयम्। द्रविडपतिः—राजिगः। बन्धनधाम्नि कारागृहे। ९१—विलुलुठतुर्लोठनं चक्रतुः। तदीये विक्रमाङ्कसम्बन्धिनि। महनीयानि पूजनीयानि प्रशस्तानि। द्रविणं धनम्। विभूतिरैश्वर्यम्। ९२—समरदेवता युद्धाधिष्ठातृदेवता। सपर्या पूजा।

परिकरितः परिवारितः । कङ्कटः कवचः । कटकं सैन्यम् । ९३–वितरितु-मर्पयितुम् । इदं राज्यम् । तुहिनकिरणखण्डमण्डनेन शङ्करेण । स्फुरद्-शरीरगिरोल्लसदाकाशवाण्या । न्यषेधि निषिद्धः । ९४–अथ विक्रमा-ङ्काभिषेकं वर्णयति । मुखमग्रभाग आननं च । भङ्गी व्याजः । सरसि-रुहेषु कमलेषु । पूरयत्सु ध्वनयत्सु सत्सु । सरिति नद्याम् । प्रतिफलि-तार्कमिषेण प्रतिबिम्बितसूर्यव्याजेन । लग्नवेलां शुभमुहूर्त्तम् । ९५–मरुत्सु वायुषु । भक्त्या प्रेम्णा । कुलसरितां गङ्गादिपवित्रनदीनाम् । नभस्याकाशे । गाङ्गं गङ्गाया इदम् । शीकरच्छलेन जलबिन्दुव्याजेन । ९६–अतिविशदतया–अतिप्रसन्नतया । मुखेष्वग्रभागेष्वाननेषु च । केतकमित्रं केतकीपुष्पतुल्यम् । मानसेषु चित्तेषु । ९७- वरकरिषु श्रेष्ठग-जेषु । हेषितमश्वरवः । ९८–सुरपथ आकाशम् । चिरचिन्तेति–चिराय चिन्तया–आचान्ता परिपीडिता या चालुक्यलक्ष्मीस्तस्याः क्लमं दुःखं मुष्णातीति तादृशम् । ९९–चालुक्यनरेन्द्रसूनुर्विक्रमाङ्कः । अनुजं सिंह-देवम् । महत्याः श्रियः पात्रमसूत्रयद् वनवासिमण्डलाधीश्वरं चकार । गहनं कठिनम् ।

## इति षष्ठः सर्गः

# अथ सप्तमः सर्गः

१–स विक्रमाङ्कदेवः । सर्वं लोकम् । आवर्ज्यानुकूलीकृत्य । रिपुप्रमाथी वैरिविनाशकः । दिग्दन्तिशेषा अशेषहस्तिग्रहणात् । २–नरनाथचक्रे–मण्डलाधीश्वरमण्डले । निचोलेति–निचोल आवरणम् ॐ खोल ॐ एव कारा गुप्तिगृहं तस्यामासितो निवेशितश्चापदण्डो येन सः । चोलस्य चोलराज्ञः । कल्याणं ॐ कल्याणकटकपुरम् ॐ । ३–मन्मथः कामः । सूत्रधारो नाट्याचार्यः । स्थानोपदेशी संगीताचार्यः । शृङ्गारः शृङ्गाररसः । मधुर्वसन्तः । आविरासीदाजगाम । ४–शीतर्तुभीत्या शिशिरर्तुभयेन । चन्दनाद्रेर्मलयाचलस्य । हिमव्यपाये शिशिरसमाप्तौ । ततश्चन्दनाद्रेः । ५–पवनाशनानां वाय्वाहारिणाम् । पन्नगानां सर्पाणाम् । आशां दिशाम् । गन्धवाहा वायवः । ६–पुरातनानामतिप्राचीनानाम् । वाहनानामश्वानाम् । प्रतस्थे चचाल । ७–केरला दक्षिणदिशि देशविशेषः । द्राघिष्ठमतिदीर्घम् । असौ मारुतः । तस्य चैत्रस्य । ८–अथ विरहिणीविलापं प्रपञ्चयति । शिलापट्टा एव कपाटानि तेषां मुद्रा । श्रीखण्डशैलस्य चन्द्रनाद्रेः । दरी कन्दरा । वियोगिनीकण्टको विरहिणीरिपुः । ९–विरूक्षणीयः कोपनीयः । सखि हे वयस्ये । दाक्षिणात्यो वायुर्मलयपवनः । अयं वायुः । १०–मृगं वाहनभूतं हरिणम् । मारुतस्य मृगवाहनत्वात् । शबराधिराजः किरातश्रेष्ठः । श्रीखण्डपृथ्वीधरश्चन्दनाद्रिः । ११–मृषा मिथ्या । तिष्ठतु–आस्तां तावत् । दैन्यं प्रार्थनात्मकम् । मरुता वायुना सह । स्मरग्लानिं कामकेलिश्रमम् । १२–अयं मारुतः । अनेन मारुतेन । सुतरामत्यन्तम् । शरत्प्रदोषः शरत्कालिकं रजनीमुखम् । १३–मेधा धारणावती धीः । दिङ्मोहो दिग्भ्रमः । परतोऽपरभागे । १४–भ्रमत्सौरभमांसलेनोल्लसत्सुगन्धबहुलेन । निमीलितानां परिपीडितानाम् । प्रियकाङ्क्षिणीनां विरहिणीनाम् । १५–कन्दर्पदेवस्य कामदेवस्य । विमानं व्योमयानम् । रसेति–रसः शृङ्गार एव पार्थिवो नृपस्तस्य । सुदृशामङ्गनानाम् । १६–गतागतेषु गमनागमनेषु । त्रुटिर्भङ्गः । आल-

म्बगुणेषु दोलालम्बनरज्जुषु । कुसुमायुधस्य कामस्य । १७–जनेषु कामिलोकेषु । दोलेति–दोलासु प्रेङ्खासु तरलाश्चञ्चलाः । पुरन्ध्रीरङ्गनाः कर्म । संभूयैकत्रीभूय । भूयःसु–अतिसंख्याकेषु । मनोभूः कामः । १८–विलासवत्योऽङ्गनाः । अर्धं विलासमापुरिति सम्बन्धः । नभःप्राङ्गणसङ्गिनीनां व्योमाङ्गणस्थानाम् । त्रिदशा देवाः । १९–परं केवलम् । कार्मुकं धनुः । कुसुमायुधेन कामेनैव नत्वन्येन । २०–इन्दीवरलोचनानामङ्गनानाम् । लोलासु चञ्चलासु । 'दोलासु दोलासु' इति जह्लणशार्ङ्गधरसंगृहीतः पाठः । प्रमादादनवधानतां परित्यज्येति भावः । मनोभूः कामः । २१–मल्लिका पुष्पविशेषः । लवङ्गं देवकुसुमम् । विश्वसंमोहनदीक्षितस्याखिललोककार्मणनिपुणस्य । मुख्याङ्गसंपत् प्रधानसाधनानि । कुसुमायुधस्य कामस्य । २२–लोलांशुकपल्लवानां चञ्चलवस्त्राञ्चलानाम् । तज्जघनादि । सुदृशामङ्गनानाम् । २३–उन्नम्योर्ध्वं गत्वा । प्रकर्षमौन्नत्यम् । पुरुषायितेषु विपरीतरतेषु । २४–समीरणः पवनः । क्लेशातिरेकात् कष्टबाहुल्यात् । कुसुमायुधस्य कामस्य । २५–विलासदोलाः प्रेङ्खाः कर्म । पुरन्ध्रिभिरङ्गनाभिः । उद्वसां जनशून्याम् । वसन्तीं लोकबहुलाम् । २६–विशश्राम विश्रान्तिमकरोत् । गुरुराचार्यः । अनङ्कुशः स्वेच्छाचारी । केरलमारुतो दक्षिणपवनः । २७–शिष्यभावं शिष्यत्वम् । वामभ्रुवामङ्गनानाम् । पुंस्कोकिलाः पिकाः । २८–अजस्रं सन्ततम् । शकुन्ताः पक्षिणः । विलासिनीनामङ्गनानाम् । भ्रेमुर्गतागतं चक्रुः । असंभ्रमेणाव्याकुलम् । २९–हस्तद्वयी करयुगलम् । गुणा रज्जवः । दुकूलं वस्त्रम् । किमप्यनिर्वचनीयं यथा स्यात्तथा । उल्लसितः सोल्लासः । मनोभूः कामः । ३०–प्रियो वल्लभः । कृतान्तो यमः । मधुर्वसन्तः । आततान–अजनयत् । ३१–निवारणं निषेधः । पल्लववीजनानां किसलयव्यजनपवनानाम् । स्थितिरवस्थानम् । अपूर्वोऽद्भुतः । परिहारमार्ग उपचारोपायः । ३२–लीलाशुकाः केलिकीराः । अनुकारोऽनुकरणम् । अवाह्यन्त बहिर्निष्कास्यन्ते स्म । काले–उचितावसरे । ३३–वृत्तावसरं व्यतीतकालम् । तुषारं हिमम् । अलिनां भ्रमराणाम् ।

पङ्कोदरात् कर्दममध्यात् । ३४–नवीनेति–नवीनोऽभिनवो यो दन्तोद्गमस्तद्वत् सुन्दरेण । वासन्तिका माधवीलता । कुड्मलो मुकुलः । उत्सङ्गो मध्यं क्रोडश्च । विपिनस्थलीनां वनस्थलीनां, स्त्रीत्वेन जननीप्रतीतिश्च । बालो नवजातः शिशुश्च ॐ छोरु ॐ । ३५–अनुवेलं प्रतिक्षणम् । उद्वेल्लता विस्तारयता । मुखमग्रभागमाननञ्च । मुग्धस्य सुन्दरस्य । मधोर्वसन्तस्य । ३६–भृङ्गी भ्रमरी । पौष्पं रजः परागः । क्ष्माफलके क्षितितले । लिपिज्ञानकृतक्षणस्याक्षराभ्यासे विहितोत्सवस्य । मधोर्वसन्तस्य । ३७–पुष्पोत्कररेणुपुञ्जे प्रसूनपुञ्जपरागसमूहे । लतेति–लतानां प्रसूनान्येवांशुकं वस्त्रम् । ३८–प्रवालः किसलयमेव–ओष्ठः । लतैव वध्वस्तासाम् । मुकुलाः कुड्मला एव स्तना यासां तासाम् । अलिर्भ्रमर एव वैतालिको बन्दी । मधुर्वसन्तः । ३९–पञ्चबाणः कामः । मधोर्वसन्तस्य । अभङ्गो बलिष्ठः । ४०–राशीकृता एकत्रीकृताः । चैत्र एव द्विरदो गजस्तस्य । अक्षूणहेतोः ॐ अङ्गीकृतसाम्राज्यभारस्य मधोरनुचरत्वान्मारुतस्य ॐ । 'अक्षूण' पदस्यार्थो नावगम्यते । 'अक्षोभ' इति पाठे प्रतिपन्ने–अक्षोभो गजबन्धनस्तम्भो गजबन्धनभूमिर्वेत्यर्थः संगतः स्यात् । ११ सर्गे ८२ श्लोकोऽपि द्रष्टव्यः । ४१–द्विरेफो भ्रमरः । वासन्तिका माधवीलता । कुसुमं कर्तृ । वसन्तमासश्चैत्रः । 'मल्लिकामुकुले चण्डि ! भाति गुञ्जन्मधुव्रतः । प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव' इत्यन्यत्र । ४२–हिमर्तौ शीतऋतौ । उष्णखिन्नो घर्मव्यथितः । व्यजनोपमानां तालवृन्ततुल्यानाम् । समीरणः पवनः । ४३–मनस्विनीनां मानवतीनाम् । मनसश्चित्तात् । मानस्य कोपस्य । जीवग्रहाय प्राणग्रहणाय । ककुभां दिशाम् । ४४–अवशाद्सामर्थ्यात् । कलपञ्चमो मधुरः पञ्चमः स्वरः । चक्रे कृतम् । कार्यं लोकविजयात्मकम् । ४५–पदातिसंवर्गणकारणेन कामसैन्यावर्जनाय । चम्पकराशिभङ्ग्या चम्पकपुष्पपुञ्जव्याजेन । वसन्त एव सामन्तः । स्मर एव पार्थिवस्तस्य । ४६–चूत आम्रः । द्विरेफो भ्रमरः । एवमेव निष्कर्मा । ४७–विलासिनामेकशेषः । त्रिलोक्यां त्रिभुवने । उत्तम्भितेति–उत्तम्भित ऊर्ध्वं कृतोऽशोकपलाशान्येव पाणिर्येन सः । चैत्रमल्लश्चैत्र एव मल्लो वीरः ।

प्रतिमल्लं प्रतिपक्षवीरम् । ४८–पुरन्ध्रीति–पुरन्ध्रीणां कामिनीनां गण्डूषसुरायां मुखमद्येऽभिलाष इच्छा तम् । व्यसनमासक्तिर्दुःखं वा । 'पादाघातादशोकं विकसति बकुलं योषितामास्यमद्यैः' इति कविसमयः । ४९–चूतेति–चूतद्रुमाल्याम्रवृक्षपङ्क्तिरेव भुजपञ्जरस्तेन । रणदिति–रणन्ती शब्दायमाना द्विरेफावलिर्भ्रमरपङ्क्तिरेव कङ्कणं यत्र तेन। मधुर्वसन्तः । पूर्वाभिभाषी स्वागतं वदन्। ५०–उन्निद्रेति–उन्निद्राणि विकसितानि पङ्क्तिस्थितानि चम्पकानि येषु तानि। चकाशिरे शुशुभिरे । कवलीकृतानां भक्षितानाम् । काञ्ची मेखला । अञ्चितानि युक्तानि । ५१–मर्मेति–मर्मव्यथाया विस्मयेनाधिक्येन घूर्णमानेभ्यो भ्रममाणेभ्यो मूर्धभ्यो मस्तकेभ्य उच्छलतां कुण्डलानां विभ्रमेण व्याजेन । ५२–उदञ्चयन्नुन्नयन् । किंशुकपुष्पाणि पलाशकुसुमान्येव सूचीः–कर्म। लतैव कशाग्रम् । वियोगिनामेकशेषः । निग्रहणाय वशीकरणाय। ५३–प्रसूनेति–प्रसूनानि पुष्पाण्येव नाराचपरंपरा बाणपङ्क्तयस्ताभिः। योधेषु भटेषु। वसन्त एव मत्तद्विरदः। स्मर एव भूमिपालः । ५४–समर्प्यमाणेति-समर्प्यमाणान्यद्भुतानि कौसुमानि पुष्पमयाण्यस्त्राणि यस्मै सः । अधिज्यधन्वा सज्जकार्मुकः । निषङ्गस्तूणीरः । ५५–शृङ्गारिण्यङ्गना। नियन्त्रणं निरर्गलम्। अनिन्द्यमपूर्वम्। इन्दोश्चन्द्रस्य । प्रसादं नैर्मल्यम् । ५६–अथ वियोगिनीविलापं प्रपञ्चयति । चैत्र सम्बोधनम् । तस्मिन् मन्मथे । अनङ्गेऽशरीरे । अन्तर्गतमभिप्रायः । मिषेण व्याजेन। ५७–वितर्क्य विचार्य । दीक्षितो निपुणः। त्र्यम्बकः शङ्करः । प्रियखण्डितानां विरहिणीनाम् । ५८–हराहवे शङ्करेण सह जाते युद्धे । पञ्चशरं कामम् । क्षत्रपराङ्मुखः क्षत्रियधर्मविमुखः । अस्य कामस्य । पुरोऽग्रे । चैत्र एव चाण्डालस्तत्सम्बोधनम् । ५९–इहैवास्मिन्नेव जन्मनि लोके वा। 'अत्युग्रपुण्यपापानामिहैव फलमश्नुते' इति वचनात् । उल्मुकमलातम्। लोकस्य बहिर्वनेषु ※ अदृश्यत्वात् ※। ६०–दृष्टदोषो दोषपूर्णः । संगृहीतोऽङ्गीकृतः ।

अङ्गीकृतेति – 'तत्संसर्गी च पञ्चम' इति वचनात् । केनाप्यन्येन । एष भारस्त्वदङ्गीकारात्मकः । ६१ – इत्थममुना प्रकारेण । उद्वेजितानां परिपीडितानाम् । मधुमासलक्ष्म्या चैत्रशोभया । पक्ष्मललोचनानामङ्गनानाम् । विचेष्टितानि व्यापाराः । ६२ – गम्भीरता गाम्भीर्यं विधेयम् । चाटुः श्लाघा । सौभाग्यं विधेयम् । अन्यप्रमदारदाङ्कः सपत्नीदन्तक्षतचिह्नम् । यूनां कामिनाम् । पुरन्ध्रिभिरङ्गनाभिः । ६३ – अथ वन्दिकृतं सुरभिसमयवर्णनं प्रक्रमते । मानेति – मानस्य कोपस्य ग्रन्थिर्मान एव ग्रन्थिर्वा तस्य कदर्थनाय भञ्जनाय निरासाय । कथिता आदिष्टाः । पुंस्कोकिलाः पिकाः । दाक्षिणात्यमरुतां मलयवायूनाम् । अध्यक्षभावोऽधिकारित्वम् । पुष्पास्त्रस्य कामस्य सम्राजः । विरहप्रत्यूहहेवाकिनो विरहविघ्नध्वंसकस्य । सन्नद्धः सज्जः । मधुर्वसन्तः । ६४ – मधुलिहां भ्रमराणाम् । मधु पुष्परसः । कलकण्ठः पिकः । पञ्चमः स्वरः । अर्जनं प्राप्तिः । शृङ्गारिणः कामस्य । चित्रमाश्चर्यम् । अकाण्डे सहसा । ६५ – उत्तालस्योत्कटस्य । वैतालिकैर्वन्दिभिः । विरुदावली प्रशस्तिः ※ पवाडा ※ । मधोर्वसन्तस्य । कोकिलयोषितां पिकीनाम् । कामो यदि पौष्पं धनुर्धुनीते [ तदा ] परं कौतुकादेवेति सम्बन्धः । ६६ – गुलिधनुःशिक्षां ※ गोलिया 'धणुही' अभ्यासु ※ १३ सर्गे ३३ श्लोकोऽपि द्रष्टव्यः । मलये शैले । दावाग्निं वनवह्निं ※ दवाडि ※ । दुर्मना दुःखितचेताः । कामेन सह । धावति प्रवर्त्तते । त्वयि विक्रमाङ्के । वातूलतामुन्मत्तताम् । ६७ – सन्नद्धं प्रगुणीभूतम् । माधवीनां वासन्तीलतानाम् । मधु मकरन्दः । मधुपवधू भृङ्गी । गण्डूषो मुखपूरणम् । दाक्षिणात्या मरुतो मलयवायवः । प्रतिकलं प्रतिक्षणम् । कौसुमाः पुष्पसम्बन्धिनः । पांसुकूटाः परागपुञ्जाः । पुष्पास्त्रः कामः । विरहिणामेकशेषः । ६८ – भ्राजिष्णुभस्त्राकरणिं दीप्यमानतूणीरसादृश्यम् । शाखिनो वृक्षाः । निस्त्रिंशः खड्गः । भृङ्गमालाभिर्भ्रमरपङ्क्तिभिः । निबिडोत्साहकण्डूलदोष्णो घनोत्साहेन कण्डूलभुजस्य । पु-

ष्पेषोः कामस्य । व्यतिकरः सम्बन्ध एकत्रीकरणम् । ६९-श्रीखण्डवातैश्चन्दनवायुभिः । भुवः कर्म । सृजत्युत्पादयति । परिमलाचान्तये सुगन्धपानाय । चञ्चरीकान् भ्रमरान् । चारुभ्रूः कामिनी । त्वद्वियोगे विक्रमाङ्कविरहे । जीवरक्षाभ्युपायमात्मनः प्राणरक्षणविधिम् । ७०-मलयेति कर्तृपदम् । स्फारकर्पूरवासो बहुलकर्पूरसुगन्धिः । द्रविडयुवतिश्चोलदेशाङ्गना । ७१-पानीयं जलं कर्म । नालिकेरीति-नालिकेरीफलस्य कुहरे मध्ये कुहूत्कारि शब्दायमानम् । कावेरी नदी । तालद्रुमास्तालीवृक्षाः । सुराभाण्डानि मदिरासंग्रहपात्राणि । भाङ्कारः शब्दः । मोचा कदली । वान्ति वहन्ति । द्राविडीनां चोलदेशाङ्गनानाम् । रयो वेगः । वायवः कर्तृपदम् । ७२-भृङ्गालीभिर्भ्रमरपङ्क्तिभिः । अधिज्यं सज्जम् । पुष्पधनुषः कामस्य । दोला प्रेङ्खा । पञ्चेषुः कामः । लक्ष्यं शरव्यम् । ७३-मधुपो भ्रमरः । पुष्पमधुना मकरन्देन । केलीभुवः क्रीडास्थलानि । दिशन्ति जनयन्ति । प्राग्भारतो बाहुल्यात् । परित्याजितोऽसंख्यास्त्रार्पणात् । लक्ष्येष्वलक्ष्येषु चोभयत्र निर्विचारमिति भावः । ७४-चित्रामाश्चर्यमयीम् । लिपिं शोभाम् । काननमही-उद्यानभूमिः । दोला प्रेङ्खा । पुरन्ध्री-अङ्गना । प्राग्भारो विस्तारः । आधुन्वतः कम्पयतः । मान एव द्रुमः । गहनं दुष्करम् । लङ्कानिलस्य दक्षिणपवनस्य । ७५-पौलस्त्यो रावणः । उद्यानमशोकवाटिका । विटपी वृक्षः । मैथिली सीता । पादमुद्राश्चरणचिह्नानि । पौलस्त्येति 'समीराः' इत्यस्य विशेषणम् । कर्पूरद्वीपोऽन्तरीपविशेषः । १ सर्गे ६७ श्लोकोऽपि द्रष्टव्यः । वेलाचलः समुद्रतटस्थः पर्वतः । क्रीडेति-क्रीडाताम्बूलचूर्णेन ग्लपितस्य खिन्नस्य मुखस्य हृता क्लान्तिर्म्लानता यैस्ते । केरलीनां केरलदेशाङ्गनानाम् । दाक्षिणात्याः समीरा मलयवायवः । ७६-चूत आम्रः । कवलनाद् भक्षणात् । ग्रामणीः श्रेष्ठः । छाया * आरम्भः * । पञ्चेषुः कामस्तस्य जैत्रेषुतां जयशीलबाणत्वम् । ताम्यदिति-ताम्यतः शुष्यतस्तालुनः काकुदस्य यद् विटङ्कमूर्ध्वभागस्तस्य सङ्कटा सङ्कुला या तटी

तस्यां सञ्चारतो गतेः । पञ्चमः स्वरः । कोकिलकामिनी पिकी उन्मूलति निर्गच्छति । ७७—विरहविधुरा वियोगव्यथाव्याकुलाः । मनोभवलेखः कामसन्देशः । सुरभिसमयो वसन्तकालः । नृपतेर्विक्रमाङ्कस्य । प्रमोदं हर्षम् ।

## इति सप्तमः सर्गः



# अथ अष्टमः सर्गः

१–तत्र वसन्ते । पुष्पास्त्रमित्रे कामसुहृदि । श्रोत्रमैत्रीं कर्णगोचरत्वम् । २–यथेति–तामेवाह । मान्मथी कामस्य । करहाटो देशविशेषः । कार्मणं वशीकरणम् । ३–विद्याधरेति–चन्दलदेवीदत्तजन्मा शिलाहारवंशो विद्याधरप्रभव आसीत् । गौरीदयितः शिवः । ४–चन्द्रलेखा–इन्दुकला । मैत्री सादृश्यम् । मनोभुवोऽनङ्गस्य । ५–अन्तरङ्गमात्मीयम् । शृङ्गारो रसः । सा चन्द्रलेखा । वयस्तारुण्यं विशेष्यम् । ६–अथ चन्दलदेव्याः पादादिकेशान्तसौन्दर्यवर्णनं प्रक्रमते । 'मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः' इति कविनियमः । चन्दलदेव्या विद्याधरकुमारीत्वादिदं सङ्गच्छत एव । लटभभ्रुवः सुन्दरभ्रुवः । रत्नावली रत्नश्रेणिः । रत्नाकरः सागरः । ७–अत्र पादयोः । आवरणं निवारकम् । वेद्मि मन्ये । प्राङ्गणपद्मिनी स्थलकमलिनी । ८–मम पादयुग्मस्य । तुलाकोटिर्मञ्जीरः, अन्यत्र स्वर्णतुलायाः कोटिद्वितयम् । आताम्रमारक्तम् । ९–नखा एव रत्नानि । अलक्तकमार्जनं यावकरसलेपः । श्रीखण्डलेपेन चन्दनद्रवेण । विधोश्चन्द्रस्य । १०–जाग्रतो विकसितात् सावधानाच्च । इभो गजः । ११–रागस्य पादरक्तिम्नः । पूर्वपक्षाय तिरस्काराय । प्रत्युदाहरणानि खण्डनीयानि । १२–मानसोत्तंसा मानससरोभूषणाः । अन्तरं ॐ जेतलु विशेषु ॐ १३–भ्रुकुटिभङ्गो भ्रुकुटिवक्रीभावः । नूपुरो मञ्जीरः । १४–हेममञ्जीरमालाभ्यां कनकनूपुरपरम्पराभ्याम् । जङ्घैव लता । कृतेति–कृतमालवालं वृक्षमूलकृतजलाधारो यस्य तत् । वाल्लभ्यात् प्रेम्णा । १५–लम्भिताः प्रापिताः । मृदुभिः कोमलैः सरलैश्च । जडैः शीतलैर्मूर्खैश्च । १६–तदूरू तस्याः सक्थिनी कर्म । सम्भाव्य ज्ञात्वा । हस्तसर्वस्वं शुण्डादण्डसौन्दर्यम् । मातङ्गत्वं चण्डालत्वञ्च । १७–चन्द्रकान्तो मणिः । कन्दर्पदोःस्तम्भः कामबाहुस्तम्भः । १८–श्रोणी कटिप्रदेशः । मेखला काञ्ची । १९–

आयामो विस्तारः । श्रोण्यां कटिप्रदेशे । रशनादाम काञ्ची । २०-अनङ्गः कामः । स्वर्णविष्टरः सिंहासनम् । संघातः समूहः । २१-वृद्धिं विस्तारम् । कदर्थिताः पीडिताः । २२-गौराङ्गी सा नायिका । दृढमत्यन्तम् । हारयति सखीजनैः स्वसमीपं प्रापयति । अपरिस्पन्दा निश्चला । २३-गरिमा गौरवम् । पृषत्को बाणः । २४-रन्ध्रं छिद्रम् । तिमिरलेखा-अन्धकारः । मेखला काञ्ची । २५-पयोधरभरः स्तनभारो मेघपङ्क्तिश्च । रत्नशलाका मरकतरत्नाङ्कुराः । श्रोणीति-श्रोणिः कटिप्रदेश एव वैदूर्यभूमिर्मरकतभूमिस्तस्याः । 'विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव' इति कालिदासः । २६-कन्दर्पेति-कन्दर्पस्य कामस्य हेमकटकात् स्वर्णवलयात् । ❀ सुवर्णकटकमध्ये हि लाक्षा भवति ❀ । लाक्षा जतु । २७-निगडो लोहवलयम् ( हि० बेडी ) । स्मर एव दन्ती गजस्तस्य । तात्पर्यं बिभ्रती जिज्ञासमाना । २९-स्तनौ कर्म । चापेति-चापे निजधनुषि न्यस्तो भरो येन तस्मिन् । कोदण्डाटनिर्धनुष्कोटिः । नतभ्रुवो नायिकायाः । ३०-मन्ये शङ्के । समाप्तो लावण्यस्य सारो यस्मिन् तस्मिन् । सर्गे रचनायाम् । प्रजापतिर्ब्रह्मा । ३१-शासनमाज्ञापत्रादि । रोमाली विशेष्यम् । नाभिरेव गोलकं मषीपात्रम् ❀ श्रीभाजनम् ❀ तस्मात् । ३२-जाने मन्ये । तन्मध्ये नायिकाशरीरे । कुहरं विवरम् । ३३-कुरङ्गशावाक्ष्या मृगशावकलोचनायाः । लावण्यमेव पानीयम् । घटीयन्त्रगुणोऽरघट्टघटीरज्जुः । ३४-मध्येनोदरेण । त्रिवलिव्याजत उदररेखामिषात् । भ्रूभङ्गानामावलिर्भ्रूकुटिभङ्गी । ३५-त्रिवलीमार्ग उदररेखापन्थाः । रतिः कामपत्नी । ३६-दुरारोहमारोढुमशक्यम् । मार्गाली मार्गपङ्क्तिः । ३७-दरिद्रं कृशं निर्धनं च । ३८-त्रिवल्युदररेखात्रयम् । स्तनेति-यथा यथा स्तनभार उन्नतोऽभूत् तथा तथा । हारमुद्रा हाररेखाचिह्नम् । ३९-युक्तं स्थाने । मध्ये-उदरे । तन्वी नायिका । कार्श्यकीकरणाय नायिकायाश्चापरत्वसम्पादनाय । अत्रैव मध्य एव ।

कुसुमास्त्रेण कामेन । ४०–काञ्ची मेखला । कस्यां दिशि केन-रूपेण । सहेतुकम्–अपि तु सकारणमेव । ४१–मात्यागच्छति । निर्विवरे–'मृणालसूत्रान्तरमप्यलभ्यम्' इत्यन्यत्र । चित्रमाश्चर्यम् । अन्तरे मध्ये । क्रीडेति–क्रीडया विलासेन कुण्डलितमुद्दण्डमति महत् कोदण्डं धनुर्येन सः । कुसुमायुधः कामः । ४२–चकोराक्षी नायिका । –चुम्बिनि सति । नर्म केलिः । ४३–शङ्के मन्ये । अक्लेशसाध्यं सुखविजेयम् । कुसुमधन्वनः कामस्य । बहिः–हृदयबहिर्भागे एव । अस्या नायिकायाः । ४४–स्तनावेवाञ्जलिः । मन्मथं कामम् । उन्मुखमित्यादि ॐ द्वाभ्यामपि सहैव स्थातव्यमिति भावः ॐ । ४५–अप्रतिसमाधेयमप्रतीकार्यम् । स्फुटतां विदीर्यमाणानाम् । 'अत्युन्नतिस्फोटितकञ्चुकानि वन्द्यानि कान्ताकुचमण्डलानि' इत्यत्रैव । ४६–कुम्भौ गजशिरःपिण्डौ । सदम्भौ सकपटौ । कलशौ घटौ । चक्रवाकौ पक्षिणौ । वराकौ दीनौ । ४७–मुखमेवेन्दुः । पूरः प्रवाहः । अन्योन्यं परस्परम् । ४८–तत्कुचौ तस्याः स्तनौ । मनसिजः कामः । आसाते तिष्ठतः । मौलिरत्नस्य चूडामणेः । भास्वतो दीप्यमानस्य सूर्यस्य च । ४९–अधीराक्षी चञ्चललोचना । दुर्वहमतिगुरु । चित्रमाश्चर्यम् । ५०–त्रिवलीतटे उदररेखाप्रदेशे । तिमिरलेखा अन्धकारः । अगोचरेऽविषये । ५१–अयं कण्ठः । ग्रामः स्वरविशेषः । स्फुटीभवद्ग्रामविशेषमूर्छनामवेक्षमाणं महतीं मुहुर्मुहुः' इति माघः । सूत्रितं रचितम् । ५२–असौ कण्ठः । उद्वेलेति–उद्वेलान्निर्मर्यादाल्लावण्यस्य रत्नाकरात् सागरात् समुद्भवो यस्य सः । मङ्गल्यो माङ्गलिकः । कुसुमधन्वनः कामस्य । ५३–श्रोत्रपीयूषं कर्णामृतम् । गण्डूषो मुखपूरणम् । काकली सूक्ष्मध्वनिः । विपञ्ची वीणा । ५४–कुसुमायुधकोदण्डे कामधनुषि–आधारे । विस्तीर्णचक्षुषोऽङ्गनायाः । प्रतिहस्तः प्रतिनिधिः ॐ पडिहथ ॐ । ५५–अहं पद्मम् । अधीराक्षि सम्बोधनम् । कान्तिर्निजशोभा । ५६–आयुर्जीवितकालस्तस्य

रेखाम् । द्राघीयसीमतिदीर्घाम् । शौण्डीर्यं गर्वः पराक्रमो वा । प्रत्याशा मनोरथः । मनोभुवः कामस्य । ५७-गौराङ्ग्या नायिकायाः । मीलितं स्थगितम् । हेमकङ्कणं सुवर्णकरभूषणम् । वयस्याभिः सखीभिः । अन्वमीयत ज्ञायते स्म । ५८-प्रकोष्ठः कूर्परमणिबन्धान्तरालम् । नालं दण्डः । हेमाब्जस्य सुवर्णकमलस्य । ५९-तूणेषुधिः । मौर्वी ज्या । पुष्पचापेन कामेन । ६०-कुरङ्गाक्ष्या नायिकायाः । मुद्रिकाङ्गुलिभूषणम् । प्रोता विद्धा । पञ्चेषोः कामस्य । लक्ष्यं शरव्यम् । ६१-सहेमकटकं सुवर्णवलययुक्तम् । पद्मतस्करं कमलकान्तिलुण्टाकम् । पद्मिनीवल्लभस्य सूर्यस्य । अंशुना किरणेन । ६२-मनः कामिचित्तमेव कुरङ्गः । पाशाली पाशपरम्परा । मनोभुवः कामस्य । ६३-वहतो धारयतः । वाचालां सशब्दाम् । वलयः कटकम् । ६४-सरलेऽवक्रे, आर्जवयुक्ते च । दोर्लेखे बाहुयुगलम् । चञ्चलचक्षुषो नायिकायाः । अमुग्धाभ्यः प्रौढाभ्यः । आजह्रतुरपहृतवत्यौ । श्रियं शोभां लक्ष्मीं च । ६५-बाहू भुजौ । आभोगो विस्तारः । एताभ्यां बाहुभ्याम् । लुण्ठनमपहरणम् । ६६-मुखमेवारविन्दं तस्मै दत्ता श्रीर्येन सः । अरुणो रक्तः सूर्यश्च । पाण्डुरत्विषः कान्तिविहीनान् । ६७-उदय आविर्भाव उन्नतिश्च । वदनमेवेन्दुस्तस्य । लावण्यमेव समुद्रस्तस्य । विद्रुमः प्रवालः । ६८-बन्धूकं बन्धुजीवकपुष्पं तद्वद् बन्धुरो रम्यस्तेन । सोदर्यात् सहोदरत्वात् । अङ्केति-अङ्क उत्सङ्गे लालितः कौस्तुभः कौस्तुभमणिर्येन तम् । ६९-दन्तच्छद ओष्ठः । दशनमालिका दन्तपङ्क्तिः । सरस्वती वाणी । दलानि पत्राणि । अञ्चिता भूषिता । ७०-कुरङ्गाक्ष्या नायिकायाः । माणिक्यं पद्मरागमणिः । ७१-पुराणबाणाश्चिरकालीनशराः । अस्त्राणि शराः । नासा नासिका । तूणेषुधिः । ७२-अमुष्यास्या नायिकायाः । लक्ष्मीरुत्पलशोभा । चक्षुषा नेत्रेण । नूतनं नवीनम् । वेद्मि जाने । उत्पलं कर्णावतंसनीलकमलम् । ७३-सुभ्रुवो नायिकायाः । श्रवणोत्तंसेति-कर्णावतंसात्मकलीलादूर्वा-

ङ्कुरे । ७४-श्रवणमार्गेण चलिते कर्णान्तविश्रान्ते, अन्यत्रोपदेश-वचनाकर्णनविरते । प्रकामधवलेऽत्यर्थं श्वेतेऽन्यत्र निर्मलहृदये । कृष्णानुरक्ततां श्यामत्वं रक्तिमानं च, अन्यत्र श्रीकृष्णविषयकानुरागम् । ७५-शृङ्गारिणां कामिनाम्, एकशेषः । अमुष्या नायिकायाः । श्रवणोन्मुखयोः कर्णान्तगामिनोः, अन्यत्रोपदेशाकर्णननिरतयोः । दृशोर्नेत्रयोः । नेत्रयोर्वशीकरणसामर्थ्यं कामादप्यधिकमिति भावः । ७६-वक्त्रेन्दौ-वक्त्रं निजाननमेवेन्दुस्तस्मिन् । कुरङ्गो लाञ्छनमृगः । श्रोत्रपाशाभ्यां कर्णपाशाभ्याम् । पाशौ-आनायौ । मृगीदृशा कामिन्या । ७७-किञ्चिन्मनाक् । भामिनी नायिका । प्रतिद्वन्द्वि विरोधि । तर्जयन्ती भर्त्सयन्ती । ७८-माणिक्यं पद्मरागमणिः । प्रतिहतेस्तेजसः सोढुमशक्यत्वादिव । नताङ्ग्याः कामिन्याः । उत्सङ्गः क्रोडभागः । ७९-चटुलचक्षुषश्चञ्चललोचनायाः । पत्रद्वयी पर्णयुगलम् । वंशो वेणुः । ८०-नासैव वंशो वेणुः । सनाभिना तुल्येन । बाला नायिका । ८१-कचभरव्याजात् केशपाशमिषेण । पार्वतीबुद्ध्या-इयं नायिका पार्वतीति कृत्वा । गुहबर्ही कार्तिकेयमयूरः । ८२-गण्डे कपोले । मण्डनमलङ्करणम् । आत्मनैव स्वयमेव । वैदग्ध्यं चातुर्यम् । असौ नायिका । हेमविभूषणानि स्वर्णालङ्कारान् । तनुते करोति । ताडीदलेषु तालपत्रेषु । मन्दा निरुद्यमा । कन्दुकः ❀ दरउ ❀ । शारी क्रीडाविशेषः । शिक्षारसोऽभ्यासः । अकाण्डे सहसैव । लटभाभावे सुन्दरीत्वे । भर आग्रहः । ८३-भृङ्गालीं भ्रमरपङ्क्तिम् । उदरं मध्यं च । शस्त्री छुरिका । प्रत्यागच्छति ❀ वारं वारं व्याघुट्य चरति ❀ । लङ्घनं ❀ भोजनत्यागः, अन्यत्राक्रमणम् ❀ । व्योमाङ्गणमाकाशम् । चन्द्रमाः ❀ ब्राह्मणवत् ❀ । वक्त्रेण ❀ नियोगिपुरुषेणेव ❀ । कुरङ्गकदृशो नायिकायाः । रूपोच्चये ❀ कोहलीप्रभृतिके-इव ❀ । समातन्वते कुर्वन्ति । ८४-दायादत्वं बान्धवत्वम् । मनसिजधनुः कामकार्मुकं कर्तृ । योगक्षेमौ-अलब्धलाभो लब्धरक्षणञ्च, पालनपोषणादि ।

नयनद्वन्द्वं कर्तृ । जगज्जैत्रं त्रिभुवनजयशीलम् । मलवत् - मालिन्यमयम् । ८५ - दृशोर्नेत्रयोः । सीमावाद आघाटकलहः । प्रतिकलं प्रतिक्षणम् । हृदि वक्षसि । मनसिजः कामः । साक्रन्दं सनादम् । रशनादाम काञ्चीम् । तन्वङ्ग्याः कामिन्याः । तरुणिम्नस्तारुण्यस्य । ८६ - दोला प्रेङ्खा । लोलेक्षणा चञ्चललोचना नायिका । निरीक्षणं धत्ते पश्यति । पारावतानां कपोतानाम् । कण्टककोटिभिस्तरुकण्टकाग्रैः । कुटिलया - अमुग्धया । मौग्ध्यविसर्जनाय - आर्जवत्यागाय । सुतनोर्नायिकायाः । वयस्तारुण्यम् । ८७ - लास्याभ्यासमिषेण नृत्यशिक्षाव्याजेन । गात्रं शरीरम् । दलिता दूरीकृता । लटभालङ्कारतां ललनाभूषणत्वम् । रामागुरोर्देवस्य कामस्य । ८८ - वक्त्रमाननम् । मध्यप्रदेश उदरम् । श्रोणीमण्डलं नितम्बबिम्बम् । अङ्गनाकुलगुरोर्देवस्य कामस्य । चारुदृशो नायिकायाः । चतुष्टयं वक्त्रादि । विधिर्ब्रह्मा । ८९ - कर्णरसायनं श्रोत्रामृतम् । कर्णाटपृथ्वीपतेः कुन्तलदेशेश्वरस्य विक्रमस्य । पार्श्वं समीपम् । पल्लवयितुं विस्तारयितुम् । सिञ्जा मौर्वी । श्रुती कर्णौ । ताडङ्कः कर्णभूषणम् । स्मरः कामः ।

## इति अष्टमः सर्गः



# अथ नवमः सर्गः

१–विजृम्भमाणेषु प्रसरत्सु । पञ्चेति–पञ्चबाणस्य कामस्य कोदण्डसिञ्जा धनुर्ज्या एव घना मेघास्तेषां गर्जितेषु । विलासिन्यङ्गना । मानसं चित्तं सरश्च । सा चन्द्रलदेवी । नरेश्वरस्य विक्रमाङ्कस्य । २–पदे चरणे । चारुदृशाङ्गनया । बालेति–बालप्रवालस्य नवकिसलयस्य प्रतिमल्ला सदृशी भाः कान्तिर्यस्य तस्मिन् । क्षितीन्दोर्विक्रमाङ्कस्य । उपाधिः–रक्तश्चरणः । रक्तं लोहितमनुरागयुक्तं च । ३–वित्रासितः पीडितः । समीरणः पवनः । मयूखाः किरणा एव दण्डास्तैः । स्खलितः पतितः । सुधांशोश्चन्द्रस्य । विभीषिका त्रासनम् । ४–अह्नि दिवसे । विभावरीणां रात्रीणाम् । क्षितिं पृथ्वीम् । ५–तया चन्द्रलदेव्या । आस्था विश्वासः । धन्विनां धुर्यं धनुर्धराग्रगण्यम् । विलासधन्वा कामः । ६–भाः कान्तिः । लक्ष्मीः शोभा । तया नायिकया । प्रभाते हि दीपा विच्छाया एव भवन्ति । ७–रत्नाकरवेला समुद्रतटम् । उत्करः पुञ्जः । सनाथं युक्तम् । ८–सुभगा सुन्दरी, अनुकूला च । पञ्चशरः कामः । असौ विक्रमाङ्कः । ९–निरङ्कुशमनर्गलम् । कार्श्यं कृशताम् । जागरयन्नुद्बोधयन् । धनुर्ज्यां कार्मुकमौर्वीम् । १०–धरित्रीतिलके विक्रमाङ्के । मकरध्वजस्य कामस्य । रतिः कामपत्नी सुखञ्च । ११–उर्वीपतेर्विक्रमाङ्कस्य । पार्वणेति–पर्वणि भवः पार्वणः स चासौ चन्द्रश्च तद्वद्वक्त्रं यस्याः सा । विकासदीक्षामुल्लासम् । १२–नितम्बवत्या नायिकायाः । प्रकाममत्यर्थम् । पृथ्वीपतेर्विक्रमाङ्कस्य । अवकाशं स्थानम् । १३–प्रच्छादनार्थं स्ववियोगव्यथागोपनार्थम् । क्षणो निर्व्यापारस्थितिः ॐ नियमः ॐ । १४–ताडीदलेऽवतंसतालपत्रे । कन्दर्पः कामः । उत्तंसः कर्णोत्पलम् । षट्पदे भ्रमरे । प्रत्याशया मनोरथेन । देवो विक्रमाङ्कः । १५–आकाशगर्भां गिरमाकाशवाणीम् । भित्तीः कर्म । अर्थितां याचकत्वम् । १६–सा नायिका ।

उत्तरलीकृतस्यातिचञ्चलीकृतस्य । चेतःफलके—चेतो नृपचित्तमेव फलकं तस्मिन् । मनोभूः कामः । सायकेति—सायका बाणा एव तूलिकाः कूर्चिकास्ताभिः । १७—प्रारम्भि—आरब्धा । रम्भेति—रम्भा—अप्सरसः कदली वा तद्वल्ललिता—ऊरुकान्तिर्यस्याः सा । उपायनीकृत्योपहारीकृत्य । प्रियायाश्चन्दलदेव्याः । सहेवाकविलोचनस्य सविलासनयनस्य । पृथ्वीभुजङ्गस्य विक्रमाङ्कस्य । १८—मौनग्रहे मौनस्वीकारे । परिग्रहेण परिजनेन । लीलाशुकानां केलिकीराणाम् । १९—निरीक्षमाणोऽवलोकयन् । वारपुरन्ध्र्यो वेश्याः । मौखर्यचर्या वाचालत्वम् । मेखलासु काञ्चीषु । २०—अचिन्तनीयमप्रतीकार्यम् । तुहिनद्रवाणां हिमजलानाम् । श्रीखण्डवापी चन्दनपङ्कवापी । असूत्रयदरचयत् । पत्रिषु बाणेषु । पारसीकेति—पारसीकदेशजतैलवह्निम् । एतस्य कृते विक्रमाङ्काय । मनोभूः कामः । २१—शून्ये निर्विचारचेतसि । पञ्चेषुः कामः । इषून् बाणान् । तत्र राज्ञि । चित्रमद्भुतम् । २२—एका सा नायिका । पताकां प्रसिद्धिम् । सुभगासु सुन्दरीषु । कुन्तलकामदेवो विक्रमाङ्कः । पञ्चशरः कामः । २३—अङ्गे निजावयवेषु । चक्रभ्रमेण चक्राकारभ्रान्त्या । राजीवमुखीं नायिकाम् । २४—चन्द्रातपात् शशिप्रकाशात् । ततो वाप्याः । तं चन्द्रातपम् । अस्माच्चन्द्रातपात् । तां वापीम् । स्मरतापितस्य कामपीडितस्य । त्रियामाः रजन्यः । २५—श्रोत्रामृतस्य कर्णपीयूषस्य । प्रणाली जलनिर्गममार्गः । दिव्याम्बुधारामाकाशमुक्तजलच्छटाम् । चातकस्य—कृते । हरिणेक्षणायाः नायिकायाः । क्ष्माभर्तुश्चरो विक्रमाङ्कप्रेषितो दूतः । २६—कथा वार्त्ता । धाराश्छटाः कर्म । दन्तमयूखभङ्ग्या दन्तकिरणव्याजेन । वक्त्रमास्यम् । सः चरः । कुन्तलक्ष्मातिलकं विक्रमाङ्कम् । २७-अचन्द्रजा चन्द्रान्न जायत इति लोकविलक्षणा । वृत्तिर्जीवनं पारणं वा । रागस्य प्रेम्णः । विद्याधरराजकन्या चन्दलदेवी । २८—विधेर्ब्रह्मणः । देव हे राजन् । २९—पृषत्कैर्बाणैः । तनिम्नि तानवे । लक्ष्येषु वेध्येषु । कुसुमायुधेन कामेन । बालः केशः । प्रकर्षो गौरवम् । ३०—चम्पकदाम

चम्पकपुष्पमाला तद्वद् गौरी पीता । कृशाङ्ग्या नायिकायाः । गलदिति-गलन् विनश्यन् चापस्य तस्या धनुर्निर्माणस्य मनोरथो यस्य सः । मौर्वी-लतास्थां ज्यालतारचनोपयोगित्वविश्वासम् । ३१-स्मरः कामः । सौगतो बुद्धः । रहस्यं संसारानित्यत्वादि । अस्या नायिकायाः । अवज्ञां निरादरम् । ३२-कार्मुककर्मवार्त्ता तस्या धनुर्निर्माणवृत्तान्तः । तनुं शरीरम् । अप्राणतया सत्त्वहीनतया । मृगाक्षी नायिका । शिञ्जा मौर्वी । ३३-तानवं कृशताम् । त्वद्विप्रयोगेण त्वद्विरहेण । कुरङ्गदृष्टेर्नायि-कायाः । श्वाससमीरणेन निजनिश्वासपवनेन । ३४-शीतांशुश्चन्द्रः । स्मरानलः कामवह्निः । हारदाम मुक्तामाला । ३५-वातायनं गवाक्षः । चित्रवेश्म चन्द्रशालाम् । वलभीं चन्द्रशालाम् । पदमव-स्थानम् । आस्कन्दः प्रहरणम् । ३६-आज्ञापित आदिष्टः-पिता । हरेण शङ्करेण । अर्थिभावं याचकत्वम् । भूमिभर्तुः-राज्ञः । ३७-सान्द्ररागो दृढप्रीतिः । किं-पुनः । 'अभ्यर्थनाभङ्गभयेन भीरुर्माध्यस्थमिष्टेऽप्यवल-म्बतेऽर्थे' इति कालिदासः । ३८-अवसरः समयः । असौ नायिका । विनिर्धूय तिरस्कृत्य । ३९-स विक्रमाङ्कः । तुरङ्गमैरश्वैः । जवोत्तरङ्गै-रतिजवनैः । सा नायिका । पुष्पायुधः कामः । ४०-अमान् मातुमशक्नुवन् । मुदो हर्षस्य । प्रत्युद्ययौ प्रत्युज्जगाम । सम्यगुचिताचारेण । परिस्पन्दं साफल्यम् । अर्थसार्थो वस्तुजातम् । ४१-निधानं निधिः । कुन्तलेन्दु-र्विक्रमाङ्कः । नरेन्द्रः करहाटदेशनृपतिः । पदं स्थानम् । ४२-यथोचि-तमतिथिसत्कारः । राजचक्रं नृपतिमण्डलम् । ४३-सतूर्यैस्तूर्यध्वनि-सहितैः । अभिनवो नूतनः । भुवि स्वयंवरभूमौ । कान्ता कन्यका । ४४-तरङ्गमालामूर्मिपरंपराम् । सौवर्णपद्मप्रभं कनककमलकमनीयम् । हेमासनं स्वर्णसिंहासनम् । ४५-शुभ्रे सद्मनि धवलगृहे । करिपोतकानां कलभा-नाम् । दुग्धाब्धिः क्षीरसागरः । अमरेभ ऐरावतः । ४६-नरनाथसिंहे-नरनाथो नृपतिः सिंह इव तस्मिन् । कैलासः पर्वतः । सा कन्या । कुरङ्गै-र्मृगैः । ४७-वितानमुल्लोचः । कुट्टिमो निबद्धा भूमिः । बिम्बेन शरीरेण । कामुकः परिणेता । ४८-मञ्चेषु सिंहासनेषु । कदम्बकेषु समुदायेषु ।

रूपप्रकर्षार्थितया सौन्दर्यगौरवजिज्ञासया । प्रेक्षांबभूवुरवलोकयामासुः । ४९–वितानमुल्लोचः । नरेश्वराणां नृपाणाम् । कस्यापि–परिणेतुर्जनस्य हेतोः । सौभाग्यसीम्नोऽतिपुण्यशालिनः । त्रिदशावली देवपङ्क्तिः । ५०–मुक्ताफलस्रग्भिमौक्तिकदामभिः । पतिंवरा–पतिर्व्रियतेऽस्याम् । विभ्रमवेदिका विलासभूमिः । बहुस्त्रीकोऽनेकनारीजनवल्लभः । ताराभिश्चन्द्रकान्ताभिः । ५१–भूभुजो राजानः । प्राज्यतरेणातिप्रभूतेन । धाम्ना तेजसा । उद्द्योतितोल्लसिता भा कान्तिर्येषान्ते । प्रभातदीपप्रतिमां विच्छायत्वम् । ५२–अथ पतिंवरां वर्णयति । नयनायुधस्य देवस्य कामस्य । रामा कान्ता रतिः । भाग्यान्येव हेम सुवर्णम् । कषपट्टिका कषपाषाणः । ५३–प्रगल्भा निपुणा । लीलेति–लीलाया विलासस्य लवेन न्यञ्चिता वक्रीकृता कन्धरा यस्य तेन । प्रत्यादिशन्ती तिरस्कुर्वती । दिव्याकाशे । दोषा रात्रिः । दोषाः सकलङ्कत्वादयश्च । मृगाङ्कं चन्द्रम् । ५४–विभ्रमा विलासाः । प्रतारकस्य वञ्चकस्य । संतर्जनाय भर्त्सनाय । मनोभवस्य कामस्य । ५५–प्राणेशेति–भाविस्वामिकण्ठालिङ्गनतत्परायाः । कुसुमस्रजः स्वयंवरमालायाः । साकूतेति–साकूते साभिप्राये वक्रे–ईक्षणे नेत्रे यस्य तत् । ५६–प्रतिमानिभेन प्रतिबिम्बव्याजेन । निजोत्पलाक्षी रतिः । निषेव्यमाणोपास्यमाना । ५७–निजत्विषा स्वदेहकान्त्या । ५८–अंसस्थले निजस्कन्धे । अञ्चलः प्रान्तभागः । नेत्रच्छटा कटाक्षशोभा । सनाथा युक्ता । दर्पः सौन्दर्यादिगुणगर्वः । प्रसूतया जातया । हारलता केतुदण्डेन नेत्रच्छटा च ध्वजांशुकेन सादृश्यं भजते । ५९–सहागतान्यनुगामीनि । दाक्षिण्यं परच्छन्दानुवर्तित्वम् । प्रतिपालयन्ती प्रतीक्षमाणा । कन्दर्पः काम एव मत्तद्विरदेन्द्रो मत्तगजराजः । ६०–कर्पूरवल्लीदलं कर्पूरलतापत्रम् । पुलकाङ्कुरो रोमाञ्चः । परिभावयन्ती चिन्तयन्ती । ६१–पदं स्थानमन्यत्र चरणम् । राजहंसविलासिनी राजहंसी । चङ्क्रमणक्रमः पादविक्षेपप्रकारः । रागोऽनुरागो लौहित्यं च । कुट्टिमो निबद्धा भूः । ६२–मनोभवः कामः । ज्यावलयो मौर्वी । नेत्रमेव पत्रम् । वेणीं केशपाशम् । शिलीमुखा भ्रमरा बाणाश्च । भक्ता

तूणीरः । ६३-विलोलचूर्णालकवल्लरीणां चञ्चलकुन्तललतानाम् । सङ्गे समीपे । कलिकानुकारं कोरकसादृश्यम् । श्रीखण्डलेखां चन्दनतिलकम् । अलिके भाले । भ्रूकार्मुके-भ्रुवावेव कार्मुकं धनुस्तस्मिन् । मन्मथकेतकास्त्रं कामकेतकीपुष्पबाणम् । ६४-आविर्बभूवाजगाम । पतिंवरा कन्या । क्षौमाम्बरं कौशेयम् । उत्तरीयमुपरितनं वस्त्रम् । मृगेक्षणा हरिणलोचना । दुग्धेति-दुग्धपयोधेर्मुग्धया मनोज्ञया तरंगलेखयोर्मिपरंपरयानुगता । लक्ष्मीः कमला । ६५-हेमाद्रिं सुमेरुम् । आवर्त्य भ्रामयित्वा । धात्रा ब्रह्मणा । तदीयैर्हेमाद्रेः । संगता प्राप्ता । रङ्गतले स्वयंवरसभायाम् । ६६-विलासपद्मं स्वकरस्थं कमलम् । ईषन्मुकुलायिताक्षी मनाङ्मीलितनेत्रा । दूतकर्म दौत्यम् । अवधारयन्ती निर्णयन्ती । ६७-शरासनं धनुः । विभ्रमवैजयन्तीं विलासपताकाम् । कुन्तलचक्रवर्ती विक्रमाङ्कः । ६८-अनर्घ्येति-अनर्घ्यस्यामूल्यस्य लावण्यस्य निधानभूमिर्निधिस्थानम् । लटभा सुन्दरी । पुष्पायुधः काम एव यामिकः प्राहरिकः । ६९-विलासेति विलासो विभ्रम एव द्रुमो वृक्षस्तस्य दोहदश्रीः । सुधा -अमृतम् । यौवनमेव दुग्धसिन्धुस्तस्य । माणिक्यं पद्मरागमणिः । रुचिः कान्तिः । कार्मणं वशीकरणम् । ७०-राका पूर्णिमा । मनोजन्मा काम एव नराधिपो नृपस्तस्य । त्रैलोक्येति-त्रैलोक्यस्य साम्राज्यमेव फलं यस्याः सा । ७१-नीरन्ध्रेति-नीरन्ध्रं निरन्तरं विस्फूर्जन्त्युल्लसन्ती, अनङ्गस्य गर्जिगर्जनं यत्र सा । पयोधरश्रीः स्तनशोभा, अन्यत्र मेघमाला-कर्तृपदम् । विलासा एव वैदूर्यनवाङ्कुरास्तेषाम् । ७२-दरिद्रत्वं हीनत्वम् । किमस्ति ॐ किसउं अछई ॐ । विकचोत्पलेषु विकसितनीलकमलेषु । वेद्मि जाने । मुषिता चोरिता । ७३-नेत्रमालां कटाक्षपरम्पराम् । सा दूतोक्ता । वार्ता वृत्तान्तः । ७४-सखेलं सविलासम् । आकृष्यावतार्य । आमुमोच स्वकण्ठे बबन्ध ॐ आंवलियउ ॐ । किम् ॐकसउंएकुॐ । मकरध्वजेन कामेन । ७५-तदीयेति-स्वयंवरायाः । वक्त्रमेवेन्दुः । राग एव पयोनिधिः । विचेष्टितानि व्यापाराः । ७६-तान्येवाह । उत्कृष्यमाणं श्रेष्ठम् । निजहारदाम स्वमुक्तामालाम् । दूरमत्यर्थम् । ७७-सावज्ञं सावहेलम् । देहप्रभेति-देहप्रभया स्वशरीरकान्त्या निह्नुता शोभा

यस्य तत्। हृदये वक्षस्यन्तःकरणे च। पतिंवरा कन्या। ७८-परिश्लथस्य शिथिलीभूतस्य। लीलासरोजं स्वकरस्थं कमलम्। पुराङ्गनाभिर्नगरनारीभिः। ७९-मञ्चः सिंहासनम्।ह्रस्वासिधेनुः लघुछुरिका ॐछोटी छुरीॐ। पाणियुग्मं करयुगलम्। ८०-अनुद्गतस्वेदं घर्महीनम्। उद्धूल्य कर्पूररजोलिप्तं कृत्वा। कुण्डलयोः कर्णाभरणयोः। परिवर्तनानि ॐ वामान् दक्षिणे दक्षिणान् वामे ॐ। ८१-ताम्बूलकरङ्कवाहं ताम्बूलसमुद्गकधारिणं पुरुषम् ॐ थहियाइनु ॐ। वलयः सुवर्णकटकम्। ताम्बूलदलं नागवल्लीपत्रम्। पुष्पशरासनेन कामेन। ८२-एवमेव निर्हेतुकम्। वाचि भाषणे। आकृष्य गृहीत्वा। करङ्कः ॐथलीॐ। ८३-हेमासनं स्वर्णसिंहासनम्। वस्त्रमुत्तरीयलक्षणम्। ववल्ग-आत्मानं श्लाघते स्म। कूर्चः श्मश्रु। ८४-ताम्बूलकरङ्कवाहस्ताम्बूलसमुद्गकधारिपुरुषः। उदञ्चितेति-उदञ्चितोऽशमिता भ्रूलतिकैव पताका यस्य तत्। ८५-जृम्भेति-जृम्भावशेनोत्तम्भितस्योर्ध्वं कृतस्य हस्तयुग्मस्य संघट्टलीलया स्फुटन्त्योऽङ्गुल्यो यस्य सः। विष्टरस्य सिंहासनस्य। काम एव ग्रहः पिशाचादिः। ८६-पञ्चमकाकली पञ्चमरागस्य मधुरध्वनिः। व्यलीकस्मितं मिथ्येषद्धास्यम्। पदानि वाक्यानि। गाथाकवित्वं प्राकृतभाषाकवित्वम्। ८७-वैतालिकानां वन्दिनाम्। तुमुलं कोलाहलम्। उदाजहार प्रदर्शयामास। प्रतिहाररक्षी द्वारगोप्त्री। चक्रं मण्डलम्। ८८-यो रावणः। मूर्द्धसु शिरःसु। आहतिः प्रहरणम्। श्रीकण्ठः शिवः। केयूरमङ्गदम्।भुजङ्गराजो वासुकिः। ८९-हराद्रिं कैलासम्। कण्डूलेति-कण्डूलेन कण्डूयुतेन दोर्मण्डलेन ॐ १९ बाहु ॐ भुजसमुदायेन दुर्मदः। यो रावणः। उत्तरङ्गमुत्सुकम्। ९०-तस्य रावणस्य। आस्पदं स्थानम्। शिलीमुखानां बाणानां भ्रमराणाञ्च। रामस्य दाशरथेः। कुमारि हे कन्ये। नेत्रप्रणयी दृष्टिगोचरः। ९१-सरयू नदी। मुखरे शब्दायमाने। वातायनं गवाक्षः। ९२-तया प्रतीहार्या। नीचे पुरुषे। प्रेमाणि स्नेहाः। एवमेव वर्णनां विनैव। ९३-चूतानुबन्धे रसालविकासे तद्विषयकाग्रहे वा जाते सति। मधुपाङ्गनाया भ्रमर्याः। मुग्धा मूढा कमनीया च। मधुश्रीर्वसन्तशोभा। ९४-यस्य चेदिराजस्य। आहवे युद्धे। मौर्वीरवो ज्यानादः। शौण्डीर्य

पराक्रमः । ९५–कबन्धान् रुण्डानि छिन्नशिरसो देहान् । भूपाला नृपाः । सुन्दरि हे कन्ये । चेदिराजो डाहलदेशनृपः । स्मरवैजयन्ती कामपताका । ९६–तया प्रतीहार्या । न परं नालोकयामास न केवलं न व्यलोकयदपि तु । निकारः पराभवः । ९७–उत्त्रस्तसारङ्गो भीतमृगः । सांमुख्यमनुकूलत्वम् । उदारैरुत्कृष्टैः । ९८–कन्ये पतिंवरे । कान्यकुब्जं कान्यकुब्जदेशाधिपम् । अकुब्जकीर्तिमखर्वयशसम् । ककुब्जये दिग्विजये । वारां निधयः समुद्राः । ९९–नतानना नम्रमुखी । कुचकुम्भपीठे स्वस्तनयोः । अभ्यधत्त कथयामास । अङ्केषु शरीरावयवेषु । १००–गतिभिर्गमनैः । राजहंसान्नृपवरान् पक्षिश्रेष्ठांश्च । चङ्क्रमणं पादविक्षेपः । अभ्यधाय्युक्ता । १०१–उत्कर्षरेखां गौरवचिह्नम् । दृढकीलितस्य गाढं निहितस्य । यत्पत्रिणो यस्यार्जुनस्य बाणस्य । पोत्रिणि वराहे । लीलाकिरातो विलासेन किरातवेषधारी शङ्करः । १०२–शङ्करमल्लयुद्धे हरेण सह जाते मल्लयुद्धे । योऽर्जुनः । स्वेदवारां घर्माम्भसाम् । भस्मोत्करमलाबुस्थितभस्मपुञ्जम् । तस्य शङ्करस्य । १०३–पार्थस्यार्जुनस्य । प्रभूतशौर्यो बहुलपराक्रमः । चर्मण्वती नदी । १०४–तदीये राज्ञः । प्रगल्भा निपुणा प्रतीहारी । १०५–शृङ्गाणि शिखराणि । यस्य कालिञ्जरभूधरस्य । प्रतोली रथ्या । कपिशीर्षकाण्युच्चतमा भागाः । अत्र स्थितानां लोकानाम् । द्यौः स्वर्गः । १०६–कालिञ्जरभूधरस्य कालिञ्जरनामपर्वतस्य । श्रीनीलकण्ठस्य शिवस्य । विलासधाम्नः ॐ तत्र नीलकण्ठदेवताऽस्ति ॐ । भुजेति–भुजाभ्यामावर्तितं वशीकृतं राजचक्रं येन सः । १०७–कुसुमायुधेन कामेन । अस्याः कुमार्याः । विदग्धा प्रगल्भा । १०८–आहवनिस्पृहाणां रणविमुखानाम् । येन गोपाचलक्ष्मापतिना । प्रतिक्षोणिभृतां शत्रुनृपतीनाम् । चपेटो विस्तृताङ्गुलिः पाणिः । कुञ्जरा गजाः । केसरी सिंहः । १०९–गोपाचलः ॐ गुयालएरु ॐ ( सांप्रतं ग्वालियर इत्युच्यते ) । अवदातकीर्तिर्विशुद्धयशाः । स्रग् माला । तमवलोक्य तत्कण्ठे मालां निवेशयेति भावः । ११०–अन्यार्थं विक्रमाङ्कस्य कृते । परिहारहेतुं त्यागकारणम् । नूपुरो मञ्जीरः । मौखर्यं वाचालत्वम् । १११–वसुधापतीनां नृपाणाम् । स्रा पतिंवरा । स्रग्रजसा मालापरागेण । दृशो नेत्राणि ।

११२-यद्वैरीति-यस्य मालवेन्द्रस्य वैरिभूपालविलासिनीनामरातिनृपतिकान्तानाम्। कपोलपालीषु गण्डस्थलेषु। अलकवल्लर्यः कुन्तललताः। सशैवलानि शैवालयुक्तानि। दृशोः पयांस्यश्रूणि। ११३-यस्य मालवेन्द्रस्य। भूभृतो राजानः पर्वताश्च। कटकं सैन्यमद्रेर्नितम्बश्च। यत्र मालवेन्द्रे। ११४-लीलावति हे विलासवति। मालवेन्द्रो मालवदेशनृपतिः। मन्त्री अमात्यः। लीलावनैः क्रीडोद्यानैः। ते तव। धारा नगरी। ११५-दृशा नेत्रेण। स्मृत्वा मालवेन्द्रवर्णनमालोच्य। ११६-तुक्खारा जात्यतुरङ्गमाः। क्षितेः पृथिव्याः। तनुत्वात् तलिनत्वात्। यस्य गुर्जरेन्दोः। संभूय मिलित्वा। फणीन्द्रकन्या नागलोककन्याः। भुजङ्गभर्तुः शेषस्य। ११७-गुणग्राहिणि गुणग्रहणशीले। गुर्जरेन्दुर्गुर्जरदेशनृपतिः। नीरजाक्षि हे कमललोचने। पुष्पायुधः कामः। ११८-लीलाम्बुजेन स्वकरस्थेन कमलेन। तस्य गुर्जरेन्दोः। प्रतिक्षेपं निषेधम्। असौ कन्या। प्रतिहारगोष्ठी प्रतीहारी। ११९-श्रीखण्डचर्चा चन्दनविलेपनम्। पाण्ड्यः पाण्ड्यदेशनृपतिः। प्रकाममत्यर्थम्। क्षीरोदधिर्दुग्धसागरः। चातुर्यं साम्यम्। आचामत्यङ्गीकरोति। मन्दराद्रेर्मन्थाचलस्य। १२०-अनेन पाण्ड्येन सह। मैत्रीं प्रेम। ते तव। मनोभवः कामः। तामरसायताक्षि हे कमलदीर्घलोचने। मलयानिला मलयपर्वतवायवः। १२१-तत्र पाण्ड्ये। भाजनमाधारः। श्रीर्लक्ष्मीः। भूयः पुनः। प्रवालं किसलयं विद्रुमो वा। १२२-लीलावगाहं क्रीडास्नानम्। वेला समुद्रतटम्। दिग्वारणानां दिग्गजानाम्। अवतारतां तत्स्वरूपत्वम्, जलेऽवतरणसोपानत्वं वा। 'रुद्धे गजेन सरितः सरुषावतारे' इति माघः। ये करीन्द्राः। करेणुका हस्तिन्यः-तास्वारोहणतो रतिक्रीडार्थमारोहणात्। १२३-जैत्रयात्रासु विजयोद्यमेषु। यस्य चोलस्य। दानं गजमदः। दिग्दन्तिनो दिग्गजाः। १२४-रत्नोत्करैः मणिराशिभिः। अर्थिसार्थं याचकवर्गम्। यं चोलम्। जलद्विपानां जलगजानाम्। डिण्डिमो वाद्यप्रभेदः। मन्द्रो गम्भीरः। पयोधिः कर्तृपदम्। १२५-क्षितौ पृथिव्याम्। पृतना सेना। वीचयस्तरङ्गाः। शैलानुकारैः पर्वता-

कारैः। करिभिर्गजैः। पालीं जलावरोधायोन्नततटम्। १२६–नमन्त्युद्गिरन्ति। समं सह। यस्य चोलस्य। शीकरडम्बरेण जलबिन्दुविभ्रमेण। पदाहतीति–पदाहतिभिस्त्रुट्यन्तीनामरिक्तशुक्तीनां मुक्ताफलानां क्षोदं चूर्णम्। १२७–यद्वारेति–यस्य चोलस्य वारविलासिनीषु वेश्याजनेषु। करेणुभिर्हस्तिनीभिः। दिक्पालपुर्योऽमरावतीप्रभृतिनगर्यः। गवाक्षाः वातायनानि। चन्द्रिकया मुखचन्द्रज्योत्स्नया। १२८–चोलश्चोलदेशराजा। चपलाक्षि हे चञ्चललोचने। जयोत्सवैर्विजयोद्यमैः। मुखान्यग्रभागा आननानि च। स्फूर्जदिति–स्फूर्जन्नुल्लसन् यशसः पुञ्जो येषु ते तेषां भावस्तत्ता तया। मङ्गल्यशंखान् माङ्गलिकशंखान्। १२९–राजहंसो नृपश्रेष्ठः पक्षिश्रेष्ठश्च। दोःपञ्जरो बाहुपञ्जरः। वातायनैर्गवाक्षैः। विमानं व्योमयानम्। काञ्ची चोलदेशराजधानी। १३०–तं चोलम्। अन्यत्र विक्रमाङ्के। सा पतिंवरा। उत्तालवेलोत्कटसमुद्रप्रवाहवेगः। तरङ्गिणी नदी। न उज्झति न त्यजति। १३१–चालुक्यपृथ्वीपतिर्विक्रमाङ्कः। नयनाञ्चले नेत्रप्रान्ते। निर्वापितेति–निर्वापिता शान्ता, आशा मनोरथ एव पृथुदीपवर्तयस्तासां धूमैरिव। अन्ये नृपाः। १३२–अस्यां पतिंवरायाम्। प्रियजानिः प्रिया वल्लभा जाया निजभार्या यस्य सः। कश्चित् कोऽपि राजा। विनोदात् कुतूहलात्। आगमनं स्वस्योपस्थितिम्। १३३–विडम्बितः प्रतारितः। कश्चित् नृपः। नतिं नम्रत्वम्। १३४–दृष्टिः कुरङ्गाक्ष्या नेत्रम्, कर्तृपदम्। क्षितिपालचक्रात् राजमण्डलात्। तं विक्रमाङ्कम्। विविच्य पृथक्कृत्य। क्षीरं दुग्धम्। १३५–प्रतीहारधुरन्धरा श्रेष्ठा प्रतीहारी। रुचिः कान्तिः। क्षमापाला राजानः। कलङ्कं कालुष्यम्। अस्याः पतिंवरायाः। १३६–राजीवमुखि हे कमललोचने। कमनीयं शोभनम्। अर्थं वस्तु। शेवलानि जलनीलीः। भृङ्गी भ्रमरी। १३७–अमुष्य विक्रमाङ्कस्य। सौभाग्यगुणं सुभगत्वगुणम्। १३८–अजस्रं सन्ततम्। मदवारणानां मत्तगजानाम्। दिग्द्विपेन्द्रा दिग्गजाः। वाहा अश्वाः। ककुभां दिशानाम्। १३९–एकत्र एकस्मिन् भागे। धरा पृथ्वी। भोगिभर्तुः शेषस्य। चक्रवालं मण्डलम्। १४०–भुजङ्गमाधीशः

शेषः। धरित्री पृथ्वी। मिषात्—व्याजात्। मालिका परम्परा। १४१—शिखारत्नपरंपराभिश्चूडामणिराशिभिः। प्रोताभिर्लग्नाभिः। शेषास्य उर्वरिताः शत्रवः। १४२—सोमेश्वरः सोमदेवः, ज्येष्ठभ्राता। चोलमहीपतिः—राजिगः। द्वारि द्वारे। निरस्तौ दूरीकृतौ। १४३—कल्पद्रुमाद्या कल्पवृक्ष-चिन्तामणिप्रभृतयः। परमाणुकल्पा अतितुच्छाः। समत्वं साम्यम्। भाजनमाधारः। १४४—मुञ्जस्य मालवाधीश्वरस्य। गुञ्जासमता काक-चिंचासाम्यम्। भोजमहीभुजो भोजराज्ञः। कवीन्द्रैः कविश्रेष्ठैः। १४५—वक्त्राण्याननानि। मृगेक्षणानामङ्गनानाम्। ताण्डवं नृत्यम्। अन्यतोऽन्येभ्यः। भीतिमुद्रामुकुलं भयेन सङ्कुचितम्। १४६—किंनरकण्ठि—किंनराणां किंपुरुषाणाम् कण्ठ इव कण्ठो यस्याः सा, सम्बोधनम्। दोर्बन्धो भुजाश्लेषः। विधेर्ब्रह्मणः। योगः सम्बन्धः। काममत्यर्थम्। १४७—निरासो दूरीकरणम्। निभो व्याजः। पतिंवरा कन्या। संवरण-स्रजं स्वयंवरमालाम्। १४८—कण्ठनिवेशभाजा कण्ठे निविष्टया। अलि-माला भ्रमरपङ्क्तिः। अवाद्यत—ताडितोऽभूत्। डिण्डिमो वाद्यप्रभेदः। १४९—तद्बाहुलेखे तस्या भुजौ कर्तृपदम्। कुसुमस्रजः पुष्पमालाया अभ्यधिकम्। अन्वयः सम्बन्धः। येन कारणेन। तस्यां स्रजि। देवो विक्रमाङ्कः। तदालिङ्गनं बाहुलेखाश्लेषः। १५०—कुसुमकेतोः कामस्य। चापो धनुः। विधिर्ब्रह्मा। उदचरदुदतिष्ठत्। सदृशयोगस्तुल्ययोः सम्बन्धः। १५१—मृदुलेति क्रियाविशेषणम्। परिणयः पाणिग्रहणम्। पाण्डुकीर्तिर्विशदयशाः। लक्ष्मीः शोभा। रागः प्रेम। उदारामुत्कृष्टाम्। कुन्तलेन्दुर्विक्रमाङ्कः।

## इति नवमः सर्गः

# अथ दशमः सर्गः

१-देवस्य विक्रमाङ्कस्य। तया चन्दलदेव्या। पार्थिवकन्यया नृपपुत्र्या। २-आशा मनोरथा एव प्रदीपास्तेषु। गुणो दीपदशा च। क्षोणीभुजोऽन्ये नृपाः। ३-अक्रममनाचारम्। वैलक्ष्यभाजां लज्जितानाम्। कङ्कपत्रा बाणविशेषाः। समराङ्गणेषु रणस्थलेषु। ४-यथागतेषु आगतमनतिक्रम्येति यथागतं तेषु। पथा मार्गेण। रेमे विललास। तया चन्दलदेव्या। श्रिया लक्ष्म्या। मुरारिर्विष्णुः। ५-संनताङ्गी नम्रशरीरा चन्दलदेवी। शनैरेव शनकैः। मानसं चित्तम्। स्मरशासनेन कामाज्ञया। ६-तदीये चन्दलदेव्याः। वक्त्रमाननमेवेन्दुश्चन्द्रः। संकोचभीत्या मुकुलीभावभयात्। बहिर्बभूवुः-हृदयात्। ७-सा चन्दलदेवी। तत्र विक्रमाङ्के। उपचारः प्रेमव्यवहारः। नवोढाव्रतं लज्जासङ्कोचादिकम्। अकौशलमनैपुण्यम्। ८-शस्त्राधिकारी-अस्त्रनिर्माता। मकरध्वजस्य कामस्य। सौभाग्यगुरुः सुभगत्वप्रदाता। वैशद्यसंजीवनं नैर्मल्यसंपादकः। इन्दुभासां चन्द्रकिरणानाम्। रस एव पार्थिवस्तस्य। सप्तमसर्गे ६३ श्लोकोऽपि द्रष्टव्यः। ९-उच्चित्रणे चित्रीकरणे। मान एव द्रुमः। दन्ती गजः। तस्य विक्रमाङ्कस्य। १०-स्मरः काम एव पार्थिवस्तेन। चमूनायकतां सेनापतित्वम्। चम्पकचक्रं चम्पकपुष्पमण्डलम्। हेमप्रकरैः सुवर्णसमूहैः। सप्तमसर्गे ४५ श्लोकोऽपि द्रष्टव्यः। ११-किञ्जल्कपुञ्जैः केसरसमूहैः। परिपिञ्जरासु सर्वतः पीतासु। प्रसूनप्रसरप्रसूतैः पुष्पपुञ्जजातैः।दिवा दिवसे। जाम्बूनदं सुवर्णम्। लीलाभिसारोऽभिसरणम्। सुदृशामङ्गनानाम्। ※ समानवर्णादलक्ष्या इत्यर्थः ※। १२-मधुस्रोतसि मकरन्दप्रवाहे। कर्दमाभे पङ्कतुल्ये। पदं चरणम्। आक्रन्दनिभैरार्त्तनादतुल्यैः। मधुव्रती भ्रमरी। षट्पदं भ्रमरम्। १३-रन्ध्रं प्रवेशद्वारम्। मधु मकरन्दः। अवतस्थे स्थितः। मार्गेण रन्ध्रेण। अन्ये तस्मादन्ये भ्रमराः। लब्धार्जनानाम् ※ यत उपार्जकपुंसः ※। मार्गः रीतिः। 'लुब्धैर्जनानामयमेव मार्गः' इति पाठः साधीयान्। १४-श्रीखण्डं चन्दनम्।

भुजङ्गराजाः सर्पाः। क्लान्तिं मूर्च्छाम्। दरी कन्दरा। प्रभूतैः प्रचुरैः। १५–बाधिर्ययोगमात्मनो बधिरत्वम्। पंचमः पंचमस्वरः। १६–अनङ्गबन्धुः कामसुहृत्। प्रियखण्डितानां विरहिणीनाम्। १७–चतुरश्चतुःसंख्याकान् दक्षश्च। विलङ्घयामास अतिचक्राम। उन्मज्जतोल्लसता। पंचमास्त्रेण पंचमेन शरेण पञ्चमस्वरेण च। १८–श्रममुद्यानादिप्रसाधनपरिश्रमम्। स्निग्धविलोकनेन प्रेमपूर्णदृष्ट्या। चित्रा स्वाश्चर्यमयीषु। १९–सस्पृहं सानुरागम्। तां देवीम्। कन्दर्पधनुः कामचापः। २०–सुगात्रि हे शोभनाङ्गि। कच्चित्–कामप्रवेदने। रतिः सुखम्। त्वद्वपुषः तव शरीरस्य। माद्यन्नुन्मत्तः। २१- मन्मथ एव पार्थिवस्तेन। चमूः सेना। बाले प्रिये!। इयं पुरतः स्थिता। २२–कन्दर्पेति चन्द्रलेखासम्बोधनम्। मधुव्रतानां भ्रमराणाम्। २३–लास्यं नृत्यं कर्म। लता एव पुरन्ध्र्यो नर्तक्यः। मृगाक्षि हे मृगलोचने। लीलेति–लीलावनमेव रंगपीठस्तस्मिन्। ※ रंगमण्डपे पुष्पाञ्जलिक्षेपपूर्वकं नृत्यं कुर्वन्ति नर्तक्य इति स्थितिः ※। २४–शाखी वृक्षः। विलासबाणः कामः। मृगाक्ष्योऽङ्गनाः। २५–अरोचकी यस्मै न किञ्चिदपि रोचते। पादपजातिमध्ये सकलद्रुमेषु। जाने-अहम्। गण्डूषमास्यसद्यम्। मृगाक्षि हे मृगलोचने। २६–एकत्रैकस्मिन्। मदने कामे। पुरसूदनेन देवेन हरेण। त्वमिव त्वत्सदृशान्। उद्विकासानुल्लसितान्। मदनानभिलाषान् वृक्षविशेषांश्च। २७–अङ्गेति–अङ्गान्येव वल्ली तस्याः कुसुमैः–विलासैः, अभेदः। ह्रियमाणनेत्रो लुब्धलोचनः। अस्त्रजातं शस्त्रसमूहम्। संधातुकामो लक्ष्येषु स्थिरीकर्तुमिच्छन्नपि। २८–गुणः सौरभादि ज्या च। मधुना मकरन्देन चैत्रेण च। मनस्विनां मानिनाम्। मानसं चित्तम्। शिलीमुखा भ्रमरा बाणाश्च। शरासनं धनुः। २९–पुंस्कोकिलः पिकः। ते तव पुरस्तात्। गान्धर्वसर्वस्वविशारदाया सङ्गीतशास्त्रनिपुणायाः। रागं स्वरम्। आतनोति विस्तारयति। ३०–चन्द्रमुखि सम्बोधनम्। विलासचापः कामः। अनङ्गोऽशरीरः। समक्षं पुरः। अस्या वसन्तशोभायाः। ३१-सूक्तैः सूक्तिवचनैः। कर्णावतंसं कर्णभूष-

णम् । पुनरुक्तकल्पं निरर्थकप्रायम् । दोला प्रेङ्खा । लोलेक्षणां देवीम् । ३२–दोलेति–दोलया विलोला अलका यस्य तत् । भ्रूवल्ली भ्रूलता । शरेति–शरा एव टङ्किकास्ताभिः । तद्वक्त्रं चन्द्रलेखाननम् । एतस्य विक्रमाङ्कस्य । ३३–पञ्चमः पञ्चमस्वरः । गीतम् १, विलोकितम् २, निस्वनः ३-एतत्त्रयम् । ३४–दोला प्रेङ्खा । तारतरमत्युच्चैः । चुकूज शब्दायते स्म । ज्या मौर्वी । पुष्पधनुः कामः । ३५–पृथ्वीभुजङ्गो नृपः । वधूजनस्य सपत्नीजनस्य । प्रपञ्चो विस्तारः । ३६–आयतेति–आयताक्ष्याः प्रियाया दोलया विलोलस्याननस्यमार्गसख्यमनुगमनान्मार्गमैत्रीम् । दृशोर्लोचनयोः । गव्यूतिः क्रोशयुगम् । ३७–अङ्के क्रोडे । प्रियस्य विक्रमाङ्कस्य । पुष्पावचयाय पुष्पसंग्रहाय । ३८–भ्रूसंज्ञया भ्रूसङ्केतेन । अन्तःपुरमवरोधाङ्गनाः । चक्राम चचाल । पुष्पोच्चयः पुष्पावचयः । ३९–असंख्यपुष्पः–मधुः । मनोभवस्य–अस्मै कामाय । पञ्च–पुष्पाणि । अयं मधुः । कदर्यत्वम् कृपणत्वम् । ४०–आरोहति–सति । क्षोणिपतेः कलत्रे राज्ञ्याम् । उच्चयः संग्रहः । लीलाबकुलो बकुलवृक्षः । ४१–पौष्पै रजोभिः परागैः । देव्याश्चन्द्रलेखायाः । अन्या सपत्नी । प्रतिषेधमार्गो निवारणोपायः । ४२–पल्लव एव पाणिस्तेन । पुष्पोच्चये पुष्पावचयकाले । अशोकोऽशोकवृक्षः । तच्छेदहेतोः पाणिकर्तनाय । अलिपङ्क्तिभङ्ग्या भ्रमरालिव्याजेन । व्याकृष्यत निष्कासिता । ४३–दयितेन विक्रमेण । स्वयमात्मना । अप्रगल्भा–असमर्था । स्कन्धात् प्रकाण्डात् । स्विन्नेन घर्मितेन । ४४–विधुन्वतीषु द्रुमान् कम्पयन्तीषु । लघुत्वहेतोरगुरुत्वसंपादनाय । निजोत्तमाङ्गात् स्वशिरसः । ४५–क्ष्मातलं पृथ्वीतलम् । नितम्बिनीष्वङ्गनानाम् । भाराज्जघनस्तनादीनाम् । उच्चैःशिरसः–शाखानां पुनरुन्नतत्वात् । ४६–स्वेदाम्भसा घर्मजलेन । पुष्परजोभरैः परागपुञ्जैः । सर्वत्र सकलेष्ववयवेषु । मनोभूः कामः । ४७–नाभीह्रदेषु गभीरनाभीषु । मध्यप्रदेश उदरभागः । सुदृशामङ्गनानाम् । ४८–प्रवर्तमानासु प्रवृत्तासु । तन्मधुजीविनीभिः कुसुममकरन्दाश्रिताभिः । षट्चरणावलीभिर्भ्रमरपङ्क्तिभिः । ४९–काचिदङ्गना । नयने नेत्रे–कर्म ।

पात्रत्वं प्रणयित्वम् । वैदग्ध्यवतां चतुराणाम् । ५०—मानप्रिया मानिनी । बाहुमूलानि कक्षाः । अवेक्षणमवलोकनम् । ५१—कस्याश्चिदङ्गनायाः । नयनाय प्रापणाय । देवो विक्रमाङ्कः । सा शाखा । प्रतिकामिनीनां सपत्नीनाम् । ५२—काचिदङ्गना । विहितावतंसा कृतभूषणा । प्रसूतिरुत्पत्तिस्थानम् । प्रियप्रसादो विशेष्यम् । ५३—पौष्पे रजसि परागे । प्रतिबन्धो गत्यवरोधः । अमोघबाणोऽव्यर्थशरक्षेपः । कुसुमायुधः कामः । ५४—कृष्टमंशुकमुत्तरीयं यस्याः सा । नरेन्द्रवामा राजकान्ता । कपिना वानरेण । प्रियं विक्रमम् । प्रतिसुन्दरीभ्यः सपत्नीभ्यः । ५५—श्रोणीभरस्य नितम्बभारस्य । गरिम्णा गौरवेण । कुरङ्गकाक्षी—अङ्गना । नरेश्वरस्य विक्रमाङ्कस्य । प्रतियोषितः सपत्न्यः । ५६—धम्मिल्लः संयताः कचाः । अधीरदृष्टेश्चञ्चललोचनायाश्चन्दलदेव्याः । क्ष्मानायको विक्रमाङ्कः । मन्युर्मानकोपः । विपक्षसारङ्गविलोचनानां सपत्नीनाम् । ५७—विरेजिरे शुशुभिरे । दाराः कान्ताः । प्रसूनेति—प्रसूनरेणूत्करः परागपुञ्ज एव वर्णिका रञ्जनरंगास्ताभिः । दोर्विक्रमो भुजपराक्रम एव नाटकानि तेषु । ५८—प्रसूनभाराभरणाः पुष्पपुञ्जालङ्कृताः । लटभाङ्गनाः सुन्दर्यः । शिलीमुखा भ्रमरा बाणाश्च । कृता—अस्त्रवर्षा येषु ताः । ५९—षट्चरणा भ्रमराः । क्वणन्तो गुञ्जन्तः । अपहारोऽपहरणम् । शृङ्गारिणीगोत्रगुरोः कामिनीकुलगुरोः । ६०—कुसमोत्थेति—कुसुमोत्थरेणुभिः परागैः सह करम्बितैर्मिश्रितैः स्वेदजलैः प्लुतानां व्याप्तानाम् । स्मरोष्मणा कामतापेन । हैममयं स्वर्णनिर्मितम् । आबभासे शुशुभे । ६१—काचिदङ्गना । मधुपं भ्रमरम् । विशन्तं सौरभादिलोभात् । बाल्ये शैशवे । कन्दुकः ॐ दरड ॐ । ६२—क्षिप्तो निर्धावितः । षट्चरणो भ्रमरः । हस्तावेवाम्बुजकोशः कमलसंपुटस्तम् । विधूतो निरस्तः । स्वार्थः सौरभलंपटत्वम् । ६३—हंसनादैर्हंसध्वनिभिः । क्लान्तिनिबर्हणाय श्रमापनोदाय । अरालनेत्राः कुटिलनयनाः । ६४—कुचनिर्मितं स्तनजन्यम् । लाघवमगुरुत्वम् । मध्य उदरम् । चरणाम्बुजानि कर्तृपदम् । मञ्जीरो नूपुरः । धरित्रीं पृथ्वीम् । ६५—राजकान्ताभिर्नृपाङ्गनाभिः । उर्वी पृथ्वी ।

तुलाकोटिर्नूपुरः । पुण्यैः स्वभाग्यैः । पदन्यासपदं कामिनीचरणपात-पात्रम् । ६६-प्रारेभिरे-उपचक्रमिरे । वीजनं व्यजनचालनम् । अंशुकान्तैरधोवस्त्राञ्चलैः । तदिति-तासामङ्गनानां-कर्तृपदम् । पथो मार्गस्य । ६७-विलासव्यजनं लीलातालवृन्तम् । अनुकरोतीत्यनुकारी तुल्यः । स्वेदवारि घर्मजलं कर्तृ । गण्डस्थलीषु कपोलेषु । ६८-मुखाग्रचुम्बीनि-८ सर्गे ४२ श्लोकोऽवलोक्यः । नितम्बिनीनामङ्गनानाम् । स्तनमण्डलानि कर्तृपदम् । श्रमाम्बुशान्त्यै स्वेदजलापनोदाय । श्वासानिलानां निःश्वासपवनानाम् । ६९-खमाकाशम् । चौर्यभाजोऽपहारकाः । तदादिपुंसः पद्मयोनेः, विक्रममूलपुरुषस्य ब्रह्मणः । ७०-क्रीडासरो लीलासरोवरं कर्म । तामरसं कमलम् । उद्वेलेति-उद्वेलहेलयोत्कटविलासेनाञ्चितो भूषितः पादचारः पादगतिर्यस्य सः । ताभिरङ्गनाभिः । करेणुभिर्हस्तिनीभिः । ७१-सरोभ्यस्तडागेभ्यश्चतुर्थी । फलं विपाकम् । कान्तेति-अङ्गनाजनमुखकान्तिचौराणाम् । 'तत्संसर्गी च पञ्चमः' इति वचनात् । एषां सरसाम् । विलोचनानि नेत्राणि । ७२-विपर्ययो वैपरीत्यम् । रागो रक्तिमा । उत्पलानि नीलकमलानि । पद्मानि रक्तकमलानि । ७३-विलासयुद्धेन केलिकलहेन । अभज्यन्त भग्नानि । पृथ्वीतिलके विक्रमे । ७४-भूपालपुरन्ध्र्यो राजाङ्गनाः । वीचिकरैस्तरङ्गहस्तैः । सरस्या सरोवरेण । शीकरा जलबिन्दवः । तदङ्घ्रिपानीयं तासां चरणोदकम् । ७५-किमप्यनिर्वचनीयेन हेतुना । अवज्ञातेति-अवज्ञातान्यपमानितानि सरोरुहाणि यैस्तेभ्यः । सरस्तडागः कर्तृ । तदा तदानीम् । आसामङ्गनानाम् । निसर्गकान्तेः स्वाभाविकशोभायाः । अलक्तकं यावकद्रवम् । वीचिभिस्तरङ्गैः । ७६-सरःप्रवेशे सरसि तडागे प्रवेशे कृते सति । संरब्धेति-संरब्धाः कमलसौरभ्याक्रान्ताः शिलीमुखा भ्रमरा येषु तेषु । भिन्नः पृथग्भूतो विरक्तश्च । लेशैः कणैः । ७७-पद्मेति-पद्मानां प्रभां हरतीति तादृशं यद् हिमं तस्यैकधाम्नः एकाश्रयात् । तुषारशैलाद् हिमवतः । इदं कुङ्कुमम् । साक्षेपं निन्दापुरःसरम् । पद्माकरस्तडागः । ७८-पयसि जले । प्रमादाच्चापल्यात् । देवेन विक्रमेण ।

ससंभ्रमाभिः सभयाभिः । प्रतिकामिनीभिः सपत्नीभिः । ७९—लक्ष्मीं पद्मां शोभाञ्च । उद्रसत्वं रसहीनत्वम् । धूली पद्मपरागो मार्गरजश्च । अध्वगानां पान्थानाम् । षट्पदानां भ्रमराणाम् । ८०—स्फुरदिति—स्फुरन्त्युल्लसन्ती प्रभा कान्तिर्यासां तासाम् । सरसीरुहेषु कमलेषु । भृंगप्रपामण्डपसंनिभेषु भ्रमरपानीयशालिकातुल्येषु । रेजे दीप्यते स्म । ८१—सरस्तडागः कर्तृ । नितम्बिनीनामङ्गनानाम् । उत्तुङ्गतरङ्ग-मुक्तालवीचिमयम् । ८२—चालुक्यविद्याधरसुन्दरीणां नृपाङ्गनानाम् । वक्त्रमेवेन्दुस्तस्य परंपराः समूहास्तासु । निद्रादरिद्रेषु विकसितेषु । ८३—क्षमापालपुरन्ध्रिवर्गो राजाङ्गनाः । प्रेङ्खितमुद्भूतम् । चक्रं समूहः । उदरं मध्यम् । ८४—कुम्भिकुम्भौ गजशिरःपिण्डौ । करयन्त्रधारा हस्तक्षिप्ता जलधारा कर्तृपदम् । चारुभ्रुवो नायिकायाः । पञ्चेति—पञ्चशरेण कामेन प्रमुक्तस्य निशातस्य तीक्ष्णस्य नाराचस्य बाणविशेषस्य तुलां साम्यम् । ८५—पानीयधारा जलधारा । वामभ्रुवो नायिकायाः । कुण्डलरत्नकोटौ कर्णावतंसमणीनामग्रभागेषु । ८६—नरेन्द्रलीलाकरयन्त्रवारि विक्रमक्षिप्ता पानीयधारा । कुचकुम्भपीठे स्तनद्वये । प्रतिवल्लभानां सपत्नीनाम् । उत्पल्लवा पल्लविता । मन्युः कोप एव लता वल्ली । ८७—भूतिलको विक्रमाङ्कः । लीलावगाहग्रहं लीला-स्नानासक्तिम् । निसर्गरम्ये स्वभावसुन्दरे । विचेष्टिते व्यापारे । ८८—अनञ्जनश्यामललोचनानामञ्जनलेपं विनैव नीलनेत्राणाम् । पिञ्ज-राणां पीतानाम् । अवसानं समाप्तिः । तलिनोदरीणां कृशोदरीणाम् । ८९—सरः कर्तृ । सनाथानि युक्तानि । तत् सरः । ९०—परिवर्तनेन—आर्द्रवस्त्रत्यागेनान्यवस्त्रग्रहणेन । वपुरिति—वपुषः शरीरस्य मण्डनकर्म प्रसाधनं तेन । ९१—विलासेति—कर्तृपदम् । नराधिपप्रणयिनीवर्गस्य राजाङ्गनाजनस्य । नैसर्गिकेति—नैसर्गिकच्छायायाः स्वाभाविकशोभायाः खण्डनानां दूरीकारकाणां मण्डनानामलङ्करणानां व्यपगमो निरास-स्तस्मात् । लिपिः शोभा * धातु, अवयवशुद्धिः * ।

इति दशमः सर्गः ।

# अथ एकादशः सर्गः

१–स्नानेति–स्नानशेषेण घुसृणेन कुङ्कुमेनारुणा भा यासां तासाम्। रश्मिपटली किरणकलापः। दिनभर्तुः सूर्यस्य। संघटमाना संकुचन्ती। २–पादाः किरणाः पादश्चरणश्च। अपराद्रेः पश्चिमाचलस्य। सरसीरुहबन्धुः सूर्यः। स्कन्धं ※ कटकम् ※ अंसं च। अपराद्रेः स्कन्धमारुरोहेति सम्बन्धः। ३–पयसि जले। स्निग्धं मसृणं तैलमयं च। परिरभ्यालिङ्ग्य। भास्वतः सूर्यस्य। तुषेति–तुषविमुक्तस्य त्वग्रहितस्य मसूरस्य धान्यविशेषस्य क्षोदवच्चूर्णवत् पाटलम्। धाम तेजः। ४–रत्नरुचीनां मणिकान्तीनाम्। सत्त्वं गुणो गौरवं च। ५–मृणालं बिसम्। रथाङ्गश्चक्रवाकः। विप्रयोगभयतो वियोगभयात्। कण्ठपाशमात्महननाय। इयेष वाञ्छति स्म। ६–विवेद–अन्वभवत्। वल्लभेति–वल्लभायाः स्वप्रियाया विरह एव हालहलं विषं तेन। ७–शिखा–अग्रभागः। मस्तकेषु शिखरेषु। कालः सायाह्नसमयो यमश्च। धाम तेजः। चण्डकिरणस्य सूर्यस्य। ८–वासव इन्द्रः। तुरगरत्नमुच्चैः–श्रवसम्। अमुष्माज्जलराशेः। जलराशिं समुद्रम्। परिवर्त्तः परिवर्तनम् ※ पालटउं ※। ९–भानुमान् सूर्यः। अपरेति–अपरदिक् पश्चिमाशैव वनिता तस्याः। मुखमग्रभागमाननञ्च। रागो रक्तिमा स्नेहश्च। वराकी दीना। अम्बुरुहमेव नेत्रम्। १०–वाजिनामश्वानाम्। खेदः श्रमः। कमलिनीवनितानां कामुकः सूर्यः। वारुणी पश्चिमदिक् सुरा च। अब्धिं पश्चिमसमुद्रम्। ११–प्रतिबिम्बम् ※ उच्छाहियउ ※ कर्तृ। बिम्बवत् पाटलं रक्तम्। अशीतमरीचेः सूर्यस्य। शेषेति–शेषो नागराज एव केलिशयनं तत्र स्थितस्य लक्ष्मीवल्लभस्य विष्णोर्य आभरणकौस्तुभो मणिस्तस्य लीला ताम्। १२–वाजिनामश्वानाम्। वारिवारणो जलगजः। दिनभर्ता सूर्यः। ईक्षणं नेत्रम्। मुद्रां ※ पाटउ ※। द्राक् सपदि। निज आतप एव पटस्तम्। १३–भास्वति सूर्ये। वेधसा ब्रह्मणा। मरुता वायुना। ध्वान्तसन्ततिरन्धकारपरंपरा। १४–रत्न-

राजिनिकरप्रकरेण समुद्रस्थमणिराशिसमूहेन । अम्बरादाकाशात् । पतङ्गः सूर्यः शलभश्च । जलराशौ सागरे । १५–भानुवाहनानि सूर्याश्वाः । वारिराशिः समुद्रः । कियद्भिः ❀ ये उच्छलितास्तैरित्यर्थः ❀ । द्यौराकाशम् । तारकैस्ताराभिः । १६–पद्मेति–पद्मकोटराणि कमलकोशा एव कुटीरकाः, तेषु बन्धस्य त्रासेन विद्रुतैः पलायितैर्मधुव्रतैर्भ्रमरैर्नीलम् । ध्वान्तमन्धकारः कर्तृ । अङ्कुशविहीनं स्वेच्छाप्रसरणशीलम् । व्योमसीमन्याकाशे । १७–नीलरत्नं मरकतमणिः । पीडिता–आक्रान्ता । प्लाविता जलमग्नीकृता । राजिः पंक्तिः । १८–चूर्णकुन्तलसटापरिपाट्या–अलकच्छलेन । विप्रकीर्णं ❀ विखरियउं ❀ । केशबन्धविभवैर्धम्मिल्लरचनाभिः । लटभानामङ्गनानाम् । तमिस्रं तमः । १९–सर्वनिह्नवविधौ सकलपदार्थापलापाय । स्पर्शनेन्द्रियं कर्तृ । २०–बत खेदे । उड्डमराभिरुत्कटाभिः । मनसिजः कामः । अवधूतं प्रतिहतम् । अभिसारवधूनामभिसारिकाणाम् । २१–पांस्विति–पांसुतल्पेषु धूलिशय्यासु सुरतप्रवणानां रतिकेलितत्पराणाम् । प्रतिबन्धे–सति । तिरस्करिणी जवनिका । चपलानामभिसारिकाणाम् । २२–विटङ्कः शिखरम् । निपाते–सति । विद्रुता विशीर्णाः । तपनस्य सूर्यस्य । किरणा विशेष्यम् । सृणिभङ्गीमङ्कुशलीलाम् । तिमिरमेव द्विरदस्तस्य । २३–सूत्रितेति–सूत्रितमारब्धमभिसरणं याभिस्ताः । निवारितदीपाः शामितदीपाः । पञ्चशरस्य कामस्य । २४–रासभेन गर्दभेन । शरीरं स्वम् । काप्यभिसारिका । कुसुमेषुः कामः । २५–मुख्यपदवीं स्वपदम् । प्राणनाथो वल्लभः । रतिपतेः कामस्य । २६–दिगेव वधूः । पुरन्दरसेव्या प्राची । शरस्तेजनकः 'सरहरी' इति ख्यातः । मुखमग्रभागमाननं च । गर्भेऽन्तराले कुक्षौ च । रोहिणीप्रणयिनश्चन्द्रस्य बालस्य च । २७–केतकपरागः केतकीकुसुमधूलिः । ज्योतिः कर्तृ । नाकनायकनिकेतः स्वर्गः । अटवीं वनम् । २८–भ्रूपताका भ्रूवल्ली । शीतकरेण चन्द्रेण । २९–पाटलेन–आरक्तेन । महसां पटलेन तेजःसमूहेन । बालमृगाङ्को नवोद्गतश्चन्द्रो बालकश्च । धातुर्गैरिकादिः । धूली रेणुः । धूसरमीषत्पाण्डु । ३०–पाद-

लांशुः–रक्तकिरणः । सविता सूर्यः । श्वेतभानुश्चन्द्रः । पङ्करुहिण्याः कमलिन्याः । ३१–तर्जितं निरस्तम् । इन्दुमयूखैश्चन्द्रकिरणैः । गहनं वनम् । मानिनी कोपवती स्त्री । चित्रमद्भुतमेतत् । ३२–विषमेति–विषमस्य दुर्गमस्योच्चावचस्य वा शैलस्य निकुञ्जानां प्रान्तेषु पुञ्जितम् । ध्वान्तचक्रमन्धकारमण्डलम् । दुर्गशेषं दुर्गस्थमेव । ३३–सनाथा युक्ता । वनभूमिः कर्तृपदम् । निम्नया निलीनया, नम्रीभूतया । शशिकरैश्चन्द्रकिरणैर्हस्तैश्च । उपगूढा–आलिङ्गिता । ध्वान्तमस्तक-परंपरया–अन्धकारशिरःसमूहेन । ३४–पारणोद्यता चन्द्रिकापान-तत्परा । चकोरपुरन्ध्री चकोरी । तासां लोचनानि रक्तानि भवन्ति । इन्दुरुचीनां चन्द्रकान्तीनाम् । पटलं कर्तृ । रक्तकम्बलविडम्बि शोण-कम्बलानुकारि । ३५–मानवतीनां मनस्विनीनाम् । दृग्भिर्नेत्रैः । उदयराग-मुदयकालिकरक्तिमानम् । ३६–वल्लभेन प्रियेण । रात्रिभुजङ्गश्चन्द्रः । पादाः किरणाः पादश्चरणश्च । नर्म क्रीडा । कुमुदिनीं कान्तां च । गतनिद्रां विकसितां च । ३७–रूप्येति–राजतमुकुरपृष्ठसदृशे । लाञ्छनं कलङ्कचिह्नम् । तुहिनदीधितिश्चन्द्रः । भाजि सति । ३८–द्राविततेति–द्रावितो द्रवीकृतो यः स्फटिकशैलस्तस्य यो विटङ्कस्तस्य या स्फारा–अति-बहुला निर्झरपरंपरा तया । शशिरुचा चन्द्रकान्त्या । मानेति–मानः कोप एव पङ्कस्तम् । प्रमदानां कामिनीनाम् । ३९–मांसलत्वं सान्द्रत्वम् । अतिमात्रमत्यर्थम् । अवाप्ते ॐ अतएव ॐ । निजधाम्नि स्वतेजसि । हिमदीधितिश्चन्द्रः । वार्धिः समुद्रः । ४०–दत्तेति–दत्ता जनिता दिक्त-टानां विपाटनस्य विदारणस्य शङ्का येन सः । शीतरश्मिश्चन्द्रः । पूरः प्रवाहः । मन्थशैलो मन्दरः । विशरारु विशीर्यमाणम् । क्षीरनीरधिर्दुग्ध-सागरः । ४१–केतकद्रुतिनिभं केतकीकुसुमद्रवतुल्यम् । महस्तेजः । वपुषि शरीरे । कान्तितो धवलत्वात् । गुणतः शैत्यात् । ४२–कलशी-भिर्घटैः । प्रियहीना वियोगिन्यः । ४३–अवधीरितमाना गतकोपा । मरुता वायुना । लाघवस्य शीघ्रगतेः । ४४–मन्मथबन्धौ कामसुहृदि । तारकापरिवृढे चन्द्रे । कृतभूषा अलङ्कृताः । हरिणाक्षी–

रङ्गनाः कर्म। ४५—खुरली सैनिकशिक्षणभूमिरभ्यासो वा। विभ्रमो विलास एव द्विरदो गजः। प्रमदा—अङ्गना। रभसो विलासः—विशेष्यम्। जजृम्भे—उल्लास। ४६—आलवालेति—आलवालमण्डलस्थानाम्। बन्धवस्तुल्याः। रागः प्रेम। हेमपात्रेति—स्वर्णचषकसमूहस्थाः। मधु मद्यम्। ४७—चषकः पानपात्रम्। सीधु मद्यम्। असमायुधबन्धुः काममित्रम्। राजदारा नृपाङ्गनाः। त्रासो भयम्। ४८—संवननं वशीकरणम्। घनसारपरागैः कर्पूरधूलिभिः। ४९—यामिनीप्रियतमश्चन्द्रः। मधुना मद्येन। चषकेषु पानपात्रेषु। पिधानमाच्छादनम्। ५०—सौरभं सुगन्धः। सीधुहेमकलशीषु मद्यस्वर्णघटेषु ❀ वासाय ❀। विनिर्यदिति—विनिर्यन् मद्याद् निर्गच्छन् यो धूपस्तस्य या धूमलतिका तद्वत् कमनीयाः। ५१—पाणिः करः। मदिरा मद्यं कर्तृपदम्। मदिराक्षी—अङ्गना। ५२—आननेषु कामिनीवदनेषु। निकरः समूहः। कन्दलयन्ती पल्लवयन्ती। प्रमदा—अङ्गना। ५३—प्रस्खलदिति—प्रस्खलन्ती या भणितिरुक्तिस्तस्या यो विभ्रमो विलासस्तं भजन्तीति तादृशानि। पार्थिवस्य विक्रमाङ्कस्य। नीलनीरजदृशामङ्गनानाम्। ५४—मन्मथः कामः। सा सुरा। तानि वदनानि। तच्चेतः। ५५—इतःपरं मदपानप्रलापिनीनां कामिनीनां सरसजल्पितानि वक्तुमुपक्रमते। चन्द्र सम्बोधनम्। पतसि प्रतिबिम्बवशात्। मधुभाण्डे चषके। कुन्तलनाथम् ❀ अन्यत्र बालानां स्वामी ❀। रोहिणीं नक्षत्रात्मिकाम्। अलकपल्लवहीनां तव वधात्। ५६—अस्मि—अहम्। मधुपात्रे चषके। संमुखः प्रतिबिम्बवशात्। चन्द्र सम्बोधनम्। त्रपां लज्जाम्। दिशति जनयति। कलङ्कः ❀ खांपणु ❀। ५७—मधुपात्रनिषण्णं चषकस्थम्—प्रतिबिम्बवशात्। वारुणी मद्यम्। यामिनीरमण हे चन्द्र। ५८—दोषयुगलं दूषणद्वयम्। द्विजराज हे चन्द्र, अथ च ब्राह्मणवर। पात्रीं भाजनम्। अत्रास्मिन् स्थाने। राजा विक्रमाङ्कः। तत्र तस्मिन् स्थाने। ५९—यामिनीदयित हे चन्द्र। तानवं कृशताम्। मानहीन हे निर्लज्ज। परमार्थो वस्तुतत्त्वम्। ६०—अयं त्वम्। अम्बरसीम्न आकाशात्। हरिणाङ्क हे चन्द्र। हिमरश्मि

शीतकिरणे । ६१-इन्दो हे चन्द्र । निजदारास्तारकाः । तारकाः ॐ२७ॐ । प्रतिमया प्रतिबिम्बव्याजेन । ६२-कौमुदीरमण हे चन्द्र । कापि प्रियतमा । वरुणस्य ककुभं प्रतीचीम्, स्त्रीत्वेन नायिकाप्रतीतिश्च । ६३-निर्मलं निष्कलङ्कम् । प्रियतमं विक्रमम् । रजनीश हे चन्द्र । ६४-तरलत्वं प्रतिबिम्बस्य चञ्चलत्वात् । प्रदीपेति-प्रदीपवन्नमनोन्नमनानि । वितीर्णेति-वितीर्णो दत्तः समयः सङ्केतो यस्मै सः । ६५-बहुवल्लभभावं लम्पटत्वम् । प्रियतमेन चन्द्रेण । वराकी दीना । द्यौराकाशम् । तारका नक्षत्राणि, तारकेऽक्षिकनीनिके च । ६६-अरुणिमा रक्तत्वम् । भावश्चेष्टादिः । सुभ्रुवां कामिनीनाम् । दयितेति-दयितस्य प्रियस्य प्रसादनाय सान्त्वनं सामवचस्तद् वर्जयित्वा विहाय । कार्यं फलम् । मदः क्षीबत्वम् । ६७-जल्पितानि भाषितानि । स विक्रमाङ्कः । संमर्दं हर्षम् । ६८-अनुभाव्य कारयित्वा । विभूतिं शोभाम् । पक्ष्मलदृशामङ्गनानाम् । तल्पसद्मनि केलिगृहे । ६९-आयुषेऽभिवर्धनाय । कुसुमेषोः कामस्य । यौवनमेव तरुः । रागः स्नेह एव जलधिस्तस्य । तत्र केलिगृहे । ७०-तयोर्विक्रमाङ्कचन्दलदेव्योः । कार्मुकं धनुरेव तुला । ७१-तौ कर्म । सान्द्रकौतुकं गाढकुतूहलम् । मुद्रितेक्षणपुटौ-अवरुद्धनेत्रौ कृतौ । मुहूर्तं क्षणमपि । ७२-जातगरिम्णि-अतिप्रभूते । केलिधामनि केलिगृहे । अनङ्गः कामः । ७३-अत्रान्तरेऽस्मिन्नवसरे । सरसेति-सरसं यथा स्यात्तथा जृम्भितस्योल्लसितस्य भिन्नषड्जस्य स्वरविशेषस्य भाषाविशेषेण परिपोषिता चित्रा-आश्चर्यमयी भङ्गी विलासो यस्मिन् तत् । पीयूषपेशलममृतवद्रम्यम् । प्रत्यूषमङ्गलमुषःकालगीतम् । मागधीभिर्वैतालिकवनिताभिः । ७४-तदेव मङ्गलमुपक्रमते । यामिनी रात्रिः । नरेन्द्र हे राजन् । दरिद्रति विरलीभवन्ति । वियदाकाशमेव द्रुमस्तस्मिन् । कुसुमायुधः कामः । पञ्चैः पञ्चभिः षड्भिर्वा । पुलिनराजहंसः सैकतगतः पक्षिविशेषः । ७५-भिन्नषड्जः स्वरविशेषः । लीलाशुकानां केलिकीराणाम् । क्रोडे मध्ये । दन्तेति-दन्तकरण्डो गजदन्तनिर्मिता मञ्जूषा तद्वत् पाण्डुरा तनुर्यस्य तस्य । विधोश्चन्द्रस्य । प्रथमसर्गे ३८ श्लोकोऽपि द्रष्टव्यः ।

पूर्वाशा – प्राची दिक्। मुखमग्रभाग आननं च। चण्डांशुः सूर्यः। देवि हे चन्दलदेवि। लोचने कर्म। ७६ – ये दीपाङ्कुराः। वाह्यभ्यं प्रियत्वं सहायकत्वम्। कुरङ्गीदृशामङ्गनानाम्। वह्नीति – वह्नेः प्रतिमल्लानां सदृशानां भल्लानां पदवीं साम्यम्। पञ्चेषुणा कामेन। लङ्घितास्तेभ्यो-ऽप्यत्युत्कटा इत्यर्थः। ताम्रचूडतरुणीचूडा कुक्कुटीशिखा। ७७ – प्रत्यर्थी शत्रुः। अग्रणीर्नेता। ज्योत्स्ना चन्द्रिका। तारकनायकश्चन्द्रः। पृष्ठेति – पृष्ठे परागो यस्य तादृशो यः पाण्डुरो जरंश्च कूष्माण्डस्तस्य पिण्डवदा-कृतिर्यस्य सः। जरत् ॐ गरढउं ॐ। ७८ – खण्डोऽपरिपूर्णकलत्वात्। य इन्दुः। कृशाङ्गि सम्बोधनम्। भङ्गीं शोभाम्। श्यामा रात्रिरेव वधूः श्यामा यौवनमध्यस्था च। ७९ – परिजनस्त्रियः प्रभाते नयनार्थमागताः परिजनाङ्गनाः। खण्डिताभिः – निद्राकषायमुकुलीकृतताम्रनेत्रो नारीनख-व्रणविशेषविचित्रिताङ्गः। यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता मुनिभिः पुराणैः। विभूषा अलङ्करणानि। बाष्पोत्पी-डोऽश्रुप्रवाहः। एणेक्षणाभिः खण्डिताङ्गनाभिः। ८० – ये चन्द्रकिरणाः। मानेति – मान एव द्विरदस्तस्याङ्कुशाः। रागिणां कामिनाम्। सोत्प्रासेन सगर्वेण। लंभिताः प्रापिताः। पादाः किरणाः। घटमानेति – घटमानानां संगच्छतां कोकमिथुनानां चक्रवाकयुगलानां याः क्रीडास्तासां रहःसाक्षिणः। क्षोणीकान्त हे राजन्। तलिनाः कृशाः। ८१ – अर्थः काव्यपदार्थः। तन्वते विस्तारयन्ति। पाकमुद्रापरिचयं विविधगुणविशिष्टत्वम्। अकाण्डे सहसैव। सुकवितिलक हे कविवर। वेला समयः। सारस्वती सरस्वत्या इयम्। ८२ – केलिप्राङ्गणकुट्टिमेषु लीलाङ्गणभूमिषु। पृथ्वीभृतां शत्रुनृपतीनाम्। यदिति – यत्पदेन कुञ्जराणां परामर्शः। दानदुर्दिनं मदजलवृष्टिः। श्रियो राज्यलक्ष्म्यः। उन्मीलदिति – उन्मीलत्क्रमः शनैः शनैर्वर्द्धमानो यः शृङ्खलाकलकलः, क्रमः ॐ पादः ॐ, तेन प्रेङ्खोला चञ्चला खेला क्रीडा येषां तैः। शयनम् ॐ सेजाहल ॐ। त्वत्कुञ्जराग्रेसराः तव गजराजाः। ८३ – ये मानग्रहग्रन्थयः। प्रणतिः पादपतनम्। निशीथिनीपतिकरैश्चन्द्रकिरणैर्विशेष्यम्। वीथी मार्गः।

प्लुतः स्वरविशेषः । ८४ – तिमिरभारमन्धकारसमूहम् । भैरवो भयानकः । शिखरी पर्वतः । खरांशुः सूर्यः । ८५ – मन्मथशासने रतिकेलिषु । स्थितवतां यूनाम् । व्यापारयन्तो जनयन्तः । कृतेति – कृतश्चाकृतश्च कृताकृते तयोरीक्षणस्यावलोकनस्य विधौ व्यापारे । स्फुटिताब्जसौरभमुषो विकसितकमलसुगन्धहारिणः । प्रत्यूषवेलानिलाः प्राभातिकवायवः । ८६ – लङ्घितोभयतटा प्लावितकूलयुगला । व्योमस्रवन्त्याकाशगङ्गा । आन्ध्रेति – आन्ध्रपुरन्ध्रीनामान्ध्रदेशाङ्गनानां नेत्रेषु वसतिर्यस्य तस्य । देवस्य कामस्य । कार्मणं वशीकरणम् । ८७ - गण्डफलकेषु कपोलेषु । खण्डितानां नायिकाविशेषाणाम्, ११ सर्गे ७९ श्लोकोऽवलोक्यः । चन्द्रमणयश्चन्द्रकान्तशिलाः । ईक्षणपुटेषु नेत्रेषु । ८८ – शक्रमतङ्गज ऐरावतः । आधोरणो हस्तिपकः । अरुणेन सूर्यसारथिना । पूर्वक्ष्माधरमुदयाचलम् । तिग्मद्युतेः सूर्यस्य । ८९ – विहितव्यलीकाः कृतापराधाः । पादान् किरणान्, चरणांश्च । तरणेः सूर्यस्य । शिरोभिः शृङ्गैर्मस्तकैश्च । कराः किरणाः, करो हस्तश्च । ९० – श्वेतमयूखश्चन्द्र एव शाणः शाणोपलः । त्यक्तनयासु नीतिरहितासु । पल्लवपतनमत्र षष्ठ उपायो रसान्तरं वा । ९१ – लोकस्य मर्त्यलोकस्थजनस्य । येष्वश्वेषु । स्यन्दनो रथः । परिम्लायति दूरीभवति । उदाहरन्ति सूचयन्ति । हरयोऽश्वाः । मन्दुरा वाजिशाला । प्रतिभटैः समानैः । प्रत्यूषहेषारवैः प्राभातिकनिस्वनैः । ९२ – रक्षांसि राक्षसाः । गोत्रं रामान्वयः । बन्धं सेतुना । पाथोधेः समुद्रस्य । यमुना तापी च द्वे नद्यौ । वलभी शिरोगृहम् । डिम्भः शिशुः । धाम्ना तेजसा । ९३ – मन्युः क्रोधः । कर्णं गते श्रुते । क्षुतादिनिभमात्रं छिक्कादिव्याजमात्रम् । ९४ – शिखी वह्निः । प्लुष्टस्य दग्धस्य । चेतोभुवः कामस्य । महसा तेजसा । अस्तक्ष्माधरमस्तके पश्चिमाचलशृङ्गे । क्षौद्रं मधु माक्षिकादि । ९५ – असौ विक्रमः । मागधीनां वन्दिनीनाम् । उपधानमुपबर्हः । देव्याश्चन्द्रलेखायाः ।

इति एकादशः सर्गः ।



# अथ द्वादशः सर्गः ।

१–तत्र करहाटराजधान्याम् । पक्ष्मलाक्ष्या चन्दलदेव्या । देवो विक्रमः । कल्याणं चालुक्यराजधानी ❀कल्याणकटकपुरम्❀ । २–कुन्तलपार्थिवस्य विक्रमस्य । विचेष्टितानि व्यापाराः । ३–कोटिरग्रभागः । भिन्नं विद्धम् । उदञ्चितमूर्ध्वं धारितम् । पदं चरणम् । आराधनायानुरञ्जनाय । ४–कीर्णाश्रु–कीर्णमाप्लुतमश्रु नेत्रजलं यस्मिन् तत् । ५–गवाक्षरन्ध्रैर्वातायनच्छिद्रैः । कोदण्डं धनुः । उदाजहार प्रकटीचकार । ६–वराङ्गना कामिनी । रागप्रवाहे स्नेहरसपूरे । करालम्बं हस्तावलम्बनम् । ७–नृपो विक्रमः । असि त्वं मन्मथः । विकत्थना श्लाघा । उन्ममाथ पीडयामास । ८–आतपवारणं छत्रम् । नेत्रं वस्त्रम् । श्रमवारिलेशा घर्मजलबिन्दवः । ९–स्तम्बेरमो गजः । प्रतिपत्तिः संभावना । कन्दर्पः काम एव मत्तद्विपस्तम् । १०–लीलेति–लीलया नमन्तो कन्धरा ग्रीवा यस्यास्तया । मनोभूः कामः । ११–काञ्ची मेखला । किङ्किणी क्षुद्रघण्टिका । वाचालेत्युच्चैरिति च क्रियाविशेषणे । वैदग्ध्येति–वैदग्ध्यं चातुर्यं तस्य गर्वेणोद्धुरोन्नता कन्धरा ग्रीवा यस्याः सा । १२–ताडीदलेन कर्णावतंसतालपत्रेण । वराङ्गनानां कामिनीभ्यः । पत्रं युद्धाह्वानम् । १३–गतेषु ❀रुषा बद्धत्वात् कोपोत्पादः❀ । प्रतस्थे चचाल । १४–दोर्लेखया दक्षिणभुजेन । कुञ्चितया वक्रया । मार्गणा बाणाः । अकल्पयद्रचयामास । चापं धनुः । १५–जवाद् वेगात् । व्रजन्ती ❀स्तैन्यकारिस्त्रीवत्❀ । मराला हंसाः । ❀अपहृतवस्तुस्वामिवत् । अनुगम्यमाना ❀परिचयात्❀ । अन्यायो ❀गतिचौर्यम्❀ । मुमोच नृपावलोकनेन गत्यवरोधात् । १६–देवीं चन्दलदेवीम् । वैजयन्ती पताका । कोपनया भामिन्या । अर्धप्रहितोऽर्धं प्रेषितः । १७–अवकीर्णैः क्षिप्तैः । पदयावकाङ्कैः पादालक्तकचिह्नैः । मृगायताक्ष्यङ्गना । १८–लीलेति–लीलया वलन् वक्रीभवन् कण्ठो यस्मिन् कर्मणि तद्यथा तथा । पुष्पेति–पुष्पायुधः काम एव भिल्लः किरातस्तस्य भल्लेन भिन्ना विद्धा । कुरङ्गी मृगी । १९–अनु-

वेलं प्रतिक्षणम् । उद्वेलेति – उद्वेलो निर्मर्यादो यो लावण्यरसस्तेनोत्तरङ्गा । अपाङ्गो नेत्रप्रान्तभाग एव रङ्गो नाट्यभूमिस्तत्र । वराङ्गना कामिनी । २० – जृम्भेति – जृम्भया समास्फोटो यासु तादृश्यः कराङ्गुल्यो यस्मिन् कर्मणि तद्यथा तथा । अखर्वेति – अखर्वे लम्बे दोर्वण्यौ बाहुलते यस्यास्तया । अतर्ज्यत भर्त्सितः । २१ – शोणाश्मवातायनसीम्नि पद्मरागमयगवाक्षे । मरीचयः किरणाः । इद्धार्चिषि प्रदीप्ते । आचचक्षे कथयामास । क्षीरं दुग्धम् । २२ – नियुक्ता प्रेरिता । कटाक्षस्रजम् – कटाक्ष एव स्रक् तोरणमालिका ताम् । २३–अथ पुराङ्गनानां विलासवचनानि वर्णयति । हारत्रुटिं मौक्तिकदामभङ्गम् । उत्तरीयमुपरितनं वस्त्रम् । अवधीरणेन तिरस्कारेण । अधरवाससोऽधोवस्त्रस्य । २४ – भूषणवर्जितानलङ्कृता । चित्रमद्भुतमेतत् । कञ्चुकश्चोलकः । २५ – स्खलनच्छलेन पतनव्याजेन । मुग्धे सुन्दरि ! मूढे ! वा । मन्मथस्य कान्तां रतिम् । २६ – नीलसरोरुहाक्षि हे उत्पलनयने । द्रुतैर्जवनैः । कशा–अश्वादेस्ताडनी । तुरंगी वडवा । २७ – आलोकनविघ्नहेतोरवलोकनावरोधाय । वातायनं गवाक्षः । परासामन्याङ्गनानाम् । २८ – चण्डि हे कोपने । अनङ्गेति – अनङ्गस्य कामस्य जयास्त्राणां मित्रैः सदृशैः । अर्धचन्द्रैर्नखव्रणैः । २९–वैदग्ध्यगर्वश्चातुर्यमदः । राजचन्द्रं विक्रमाङ्कम् । नामाङ्कितां निजनामचिह्निताम् । वर्णमालामक्षरावलिम् । ३० – ताण्डवं नृत्यम् । विलासकोदण्डः कामः । शुश्रुविरे श्रुतानि । ३१ – श्वश्रूं पतिजननीम् । विनिवारयन्तीम् गमनाय निषेधयन्तीम् । अनङ्कुशत्वात् स्वेच्छाचारित्वात् । पण्याङ्गनात्वं वेश्यावृत्तिम् । ३२–शुद्धान्तकरेणुकास्वन्तःपुरहस्तिनीषु । श्रोणीभरे नितम्बभारे । ३३–दृशां दृष्टिव्यापराणां, बहुत्वादत्र बहुवचनम् । कर्णावतंसे श्रोत्रभूषणे । निजाञ्चले नेत्रप्रान्ते । गतागतं गमनागमनम् । ३४ – वीथीं पदवीम् । राजहंसो नृपश्रेष्ठः पक्षिविशेषश्च । वागुरा मृगबन्धनी । हर्म्यं प्रासादः । ३५ – आर्द्रया दृशा स्निग्धावलोकनेन । अन्वग्रहीदनुजग्राह । ग्रीष्मानुरूपां ग्रीष्मकालयोग्याम् । ३६ – लावण्येति – लावण्यमेव लीलातरुर्विलासवृक्षस्तस्य कुड्मलानामाभेवाभा यासां तादृश्यो या मुक्तास्तासां विभूषा यस्य सः । सशी-

करासारो जलबिन्दुप्रवाहसहितः। ३७-श्रमवारिलेशा घर्मजलबिन्दवः। सावर्ण्यं सादृश्यम्। अर्णोनिधिना समुद्रेण। ताम्रपर्णी नदी। ३८-श्रीखण्डम् चन्दनम्। महोष्मा-अत्युष्णत्वम्। अनङ्गतीव्रातपं कामजं प्रबलदाहम्। ३९-गात्रेण शरीरेण। चित्रमद्भुतमेतत्। मृगेक्षणानां कामिनीनाम्। ४०-विलेपनेन चन्दनेन प्रणयीकृतान्यालिङ्गितानि। लावण्येति-लावण्यमेव रत्नाकरः समुद्रस्तस्य वेलया। ४१-अंसद्वये स्कन्धयुगले। श्रीखण्डलीलातिलके चन्दनविलासविशेषके-कर्म। रूप्यपात्रे द्वे राजते भाजने। ४२-दोर्भ्यां बाहुभ्याम्। अंसयोः स्कन्धयोः। चित्रकं तिलकम्। तुषाराचलेन्द्रो हिमालयः। स्फटिकाचलेन्द्रः स्फटिकमणिपर्वतः। ४३-स्थासकश्चर्चा। दोष्णौ बाहू एव मन्दरो मन्थाचलः। संगरो युद्धमेवाब्धिः। ४४-चारुलेखा तिलकम्। वक्त्रमाननम्। सूक्तिदेवी सरस्वती। देवार्चनम् ॐ देहुरासरु ॐ। स्फाटिकलिङ्गं स्फटिकमणिमयं शिवलिङ्गम् ॐ योगेश्वरु ॐ। भङ्गी विलासः। ४५-तुषाराचलो हिमालयः। अर्कमयूखाः सूर्यकिरणाः। इन्दुभासा चन्द्रकान्त्या। ४६-अनङ्गः काम एव विद्याधरः। विलासिना कामिना विक्रमेण। कबरी केशपाशः। प्रियायाश्चन्द्लदेव्याः। ४७-श्रीखण्डं चन्दनम्। तुलाकोटिर्नूपुरः। मुखेन्दोः सरस्वत्या आश्रयादाननेन्दोः। ४८-कराब्जे एकस्मिन् हस्तकमले। चक्राभं चक्राकारम्। अम्भोरुहिणी कमलिनी। करान्तरेऽपरहस्ते। पुण्डरीकं सिताम्भोजम्। शौरेर्विष्णोः। ४९-राजीवविलोचनस्य कमलनयनस्य। हृदि वक्षसि। उक्तिदेवी सरस्वती। विमानं व्योमयानम्। ५०-अथ धारागृहाणि वर्णयति। प्रदर्शयन्ति कर्म, धारागृहविशेषणम्। तुषारवर्षं हिमवर्षणम्। शीकरडम्बरेण जलबिन्दुव्याजेन। उद्वहन्ति धारागृहाणि। ५१-परिस्फुरत्केतकपत्रभङ्गोल्लसत्केतकीकुसुमदलव्याजेन। दन्तुराण्युन्नतानतानि। अदृश्यसूर्याण्यसूर्यंपश्यानि। घना मेघाः। ५२-गवाक्षेति-गवाक्षजालानां वातायनरन्ध्राणामन्तरेभ्यो मध्यभागेभ्यो निर्यन्तीनां निर्गच्छन्तीनां नीरन्ध्रधाराणां निकरस्य छलेन। निदाघो ग्रीष्मकालः। विसूत्रणं जननम्। व्यापारयन्ति धारागृहाणि। पृषत्का बाणाः।

५३–करैः किरणैः । खरांशोः सूर्यस्य । हिमर्तुः शीतकालः । धात्रा ब्रह्मणा । ५४–धारागृहाणि कर्म । क्लमप्रमार्जनेन क्लान्तिनिरासेन । समं सह । मध्यमलोकपालो विक्रमः । ५५–चोलान्तको विक्रमः । नितम्बिनीनां कामिनीनाम् । मनोजन्मेति–मनोजन्मा काम एव नराधिपस्तस्य । ५६–वराङ्गना कामिनी । निदाघं ग्रीष्मम् । विलेपनं चन्दनम् । पण्डितो निपुणो रतः । ५७–अनालेपनेन चन्दनेन विनैव स्वभावतः शीतम् । विपाटलो विशेषेणारक्तः । पाटलया पाटला (पाडली) पुष्पेण । बभूव त्रितयम् । स्मितमल्लिका विकसितमल्लिका (वेल्लि)–पुष्पम् । ५८–अथ दीर्घिकां वर्णयति । प्रतारिता वञ्चिताः । कान्तिजलैर्लावण्यरसैः । यत्पाथसि यासां जले । दुग्धमुग्धे क्षीरसदृशे । ५९–रणद्विरेफेषु गुञ्जन्मधुकरेषु । यत्र यासु दीर्घिकासु । ६०–जानेऽहं मन्ये । प्रमदा–अङ्गना । लक्ष्मी रक्तिमशोभा । ६१–श्रोणीतटं नितम्बप्रदेशः । तरङ्गा ऊर्मय एव दोलाः । सारसः पक्षिविशेषः । दीर्घिका वाप्यः । ६२–सरोजिनीपत्रं कमलिनीदलं कर्तृ । अमुष्य विक्रमस्य । स्मरेति–स्मरस्य कामस्य कङ्कपत्रं बाणविशेषस्तस्य मैत्रीजुषस्तद्युक्तस्य । खेटकः फलकः (हि०ढाल) । ६३–मीनाङ्कः कामः । नरेन्द्रचन्द्रो विक्रमः । असूत्रयज्जनयामास । वाडिशसूत्रं मत्स्यवेधनोपकरणसूत्रम् । ६४–राजहंसो नृपश्रेष्ठः पक्षिविशेषश्च । धारालता जलधारा एव पञ्जरः । उपायनीभूत उपहारीकृतः मन्मथः काम एव पार्थिवस्तस्य । ६५–करयन्त्रवारां करोत्क्षिप्तजलानाम् । शिक्षाशरव्यमभ्यासलक्ष्यम्, सर्वतो नितान्तं वेधनात् । ५६–अङ्गरागः कुङ्कुमम् । लटभाङ्गनानां सुन्दरीणाम् । रागं प्रेम । माञ्जिष्ठेत्यतिगाढम् । ६७–देवो विक्रमः । कराम्भोरुहं हस्तकमलम् । विपुलेक्षणाया अङ्गनायाः । कुमुद्वतीकामिनि चन्द्रे । रश्मिः किरणः । अर्कः सूर्यः । ६८–नरेन्द्रमुक्तां विक्रमकरक्षिप्ताम् । कम्बुकण्ठ्यङ्गना । स्मरासिधारां कामखड्गधाराम् । ६९–चकार स विक्रमः । पत्रभङ्गः पत्रवल्लीरचना । कलङ्कितानि कलुषितानि । लीलासरसीपयांसि विलाससरोजलानि विशेष्यं कर्म । ७०–अवरोधोन्तःपुराङ्गनाः ।

पाटलतामारक्तत्वम् । स्मरकुम्भी काम एव गजः । संभिन्नं मिश्रितम् । आबभासे शुशुभे । ७१—कर्पूररजो घनसारधूलिः कर्तृ । दीर्घिका वापी। गौरीपतिः शिवः । हुताशो नेत्रवह्निः । ७२—कृष्णागुरु कालागुरु सुगन्धद्रव्यविशेषः । आर्द्रभावो जलार्द्रत्वम् । आर्द्रत्वं प्रेमातिशयम् । अयुग्मबाणः कामः । ७३—असंनिधानाद्दूरस्थत्वात् । कुसुमाकरस्य वसन्तस्य । पुष्पायुधः कामः । निषङ्गस्तूणीरः । मल्लिकाः पुष्पाणि । धम्मिल्लः संयताः कचाः । ७४—नेत्राणि चक्षूंषि कर्तृपदम् । धात्रीतिलको राजा । शाणोपलस्तेजनपाषाणः । मैत्री सादृश्यम् । कलयांबभूवुर्दधुः । ७५—अवगाहो जलस्नानम् । लक्ष्यः स्फुटः । तदङ्गेषु राजाङ्गनानामङ्गेषु । नखाङ्कमार्गो नखव्रणपद्धतिः । रत्नाकरः समुद्रः । मुद्रां शोभाम् । ७६—व्यधित—अरचयत् । तदनु तदनन्तरम् । देव्याश्चन्दलदेव्याः । पत्रवल्लीं पत्रभङ्गरचनाम् । विपुलपुलकलेखादन्तुरः सञ्जातरोमाञ्चसञ्चयः । प्रतियुवतिभिः सपत्नीभिः । बाष्पमश्रु । ७७—रचयति सति । उत्कन्धराया उन्नतग्रीवायाः । अवनिमृगाङ्के विक्रमे । उपचितेति—उपचिताया वृद्धायाश्चिन्तायास्तापेन ताम्यद्भिर्म्लानैः कपोलैर्लपितानि करसरोजान्येव स्रस्तराणि यासां ताभिः । पराभिरङ्गनाभिः । ७८—मधुसमयो वसन्तकालः । इत्येवंविधैः । सूत्रयन् विस्तारयन् । पुष्पकेतोः कामस्य । प्रेयसी प्रिया । जरठं कठिनमतिपृथुम् ।

## इति द्वादशः सर्गः ।

---

# अथ त्रयोदशः सर्गः

१–प्रताप उष्णत्वं कोशदण्डजं तेजश्च । दावभस्मभिर्वनवह्नि-धूलिभिः । निदाघो ग्रीष्मकालः । न्यवर्त्तत विरतोऽभूत् । २–तैक्ष्ण्यं जनसंतापम् । गणितानि ॐ ६० ॐ । स निदाघः । प्रताप उष्णत्वं प्रभावश्च । प्रणयित्वं पात्रत्वम् । भूमयो भाजनानि । ३–दवेति–दवानलैररण्यवह्निभिः प्लुष्टानां दग्धानां वनान्तानां भस्मभिः । क्षमाधराः पर्वताः । अङ्को मध्यभाग उत्सङ्गश्च । बालवृक्षकाः क्षुपास्तनयाश्च । तपस्वितां तापसत्वम् । ४–कार्श्यमल्पजलत्वं कृशत्वं च । तरङ्गिणीनां नदीनाम् । नितम्बतस्तटप्रदेशात्कटिपश्चाद्भागाच्च । कलहंसः कादम्बः पक्षिविशेषः । मेखला रशनाः । ५–रसं जलम् । वाजिषु रवितुरगेषु । प्रपेदिरे प्रापुः । ६–अन्या नद्यः । तनिमानं जलसंकोचम् । अलम्भि लब्धः । परिरम्भणमालिङ्गनम् । ७–उत्तरभूमिनिम्नगा गङ्गाद्या नद्यः । वाहिनी नदी । सरित्पतेः सागरस्य । ८–प्रबुद्धकार्श्या जलसंकोचाद्वि रहाच्च । परितापेति–परितापेन ग्रीष्मोष्मणा कामसंतापेन च संकुचद्भिः शुष्यद्भिः सपङ्कैर्जलादर्शनात् कर्दमसहितैश्चन्दनादिलेपयुक्तैश्च पङ्केरुहिणी-दलैः कमलिनीपत्रैरङ्किताः । अब्धिः समुद्रोऽन्यत्र प्रियः । निम्नगा नद्यः । ९–दृशं निजदृष्टिम् । प्रपा पानीयशालिका । कुम्भधिया कलशभ्रमेण । पान्थः पथिकः । १०–तदीयेति–तासां प्रपापालिकानाम् इमे तदीयास्तेषां बिम्बाधराणां पानाय लम्पटा इच्छुकाः । सपाटला-मोदं पाटलापुष्पगन्धि । ११–घनोष्मसङ्गिनो अत्युष्णतायुक्तस्य । व्यरंसिषुर्विरता बभूवुः । श्वाससमीरणा निःश्वासवायवः । दावा-नलो वनवह्निः । अनिला वायवः कर्तृपदम् । १२–गतायुषि विनष्टे । महोष्मा–अत्युष्णत्वम् । चञ्चत्पुलकैरुल्लसद्रोमाञ्चैः । विलासिभिरे–कशेषः । प्रियाङ्कपाली प्रियस्य प्रियायाश्च अङ्कपाल्याश्लेषः । १३–घर्म-बिन्दवः श्रमजलकणाः । विलासिभिरेकशेषः । करम्बितान्योन्यभुजैः श्लिष्टपरस्परबाहुभिः । १४–स्रस्तर आस्तरणम् । संमर्दोऽतिशयः । घनां

प्रचुराम् । हरिणायतेक्षणा अङ्गनाः । १५—महीपतिर्विक्रमः । पयोदखण्डं मेघशकलं कर्म । अर्कः सूर्यः । सकुण्डलं कर्णाभरणसहितम् । वारिमुचामनेहसो वर्षाकालस्य । १६—तोयं जलम् । वारिदिदृक्षया जलदर्शनेच्छया । नभःस्रवन्त्या आकाशगङ्गायाः । १७—अवाप्तोपचयं लब्धवृद्धिकम् । अङ्क उत्सङ्ग एव पर्यङ्कः । आस्पदमवस्थानम् । प्रियां चन्दलदेवीम् । क्ष्मातलमीनलाञ्छनः क्षितितलकामो विक्रमः । १८—नभस्तलेति—नभस्तलमेवारण्यं तस्य तमालमालिका तमालवृक्षपङ्क्तिः । महीभृतां पर्वतानाम् । मूर्धजा केशाः । तडिदिति—तडिदेव प्रदीपस्तस्याञ्जनपुञ्जस्तेन संनिभा तुल्या । सुभ्रु सम्बोधनम् । १९—घनोपरोधान्मेघावरणात् । तरलाक्षि सम्बोधनम् । उष्णदीधितेः सूर्यस्य । क्षणेति—क्षणप्रभा विद्युदेव दीपस्तस्मात् समुत्थस्योत्पन्नस्य कज्जलस्य ग्रहे ग्रहणे उत्कथोत्कण्ठितया वर्षया नायिकया चार्पितस्य कर्परस्योपमा यस्य तत् । २०—मृगाक्षि सम्बोधनम् । नभश्चर्यो विद्याधरीप्रभृतिकाः । कृष्णागुरु कालागुरु सुगन्धिद्रव्यम् । करम्बितो मिश्रितः । षट्पदमेचकैर्भ्रमरवत् श्यामैः । २१—अनेन पयोमुचा । अनेकवर्णाञ्चितं बहुविधवर्णविशिष्टम् । इन्द्रकार्मुकं शक्रधनुः । २२—दिव्याकाशे । पन्नगाः सर्पाः । मयूखाः किरणाः । शिखिनां मयूराणाम् । शातक्रतवं शरासनमिन्द्रधनुः । २३—नितम्बाः कटकानि कटिपश्चाद्भागाश्च । वसुन्धराभृतां पर्वतानाम् । दुकूलानि वस्त्राणि । वीथीषु मार्गेषु । वेश्मानि गृहाणि । अच्छभल्ला ऋक्षाः । प्रतिमल्लतां सादृश्यम् । २४—काण्डपटा जवनिकाः । पयोमुचो मेघा विशेष्यम् । तडिदेव वधूः । लास्यं नृत्यम् । नभस्याकाशे । जलार्द्रा जलेनार्द्रं व्यजनम् । ४ सर्गे २४ श्लोकोऽपि द्रष्टव्यः । २५—अदभ्रमत्यल्पम् । अभ्रा मेघा एवोपलपट्टिकास्तेजनशिलास्तेषु । शितीक्रियन्ते तीक्ष्णतां नीयन्ते । पत्रिणः शराः । तडिल्लता विद्युत् । निकषो घर्षणम् । पावकस्फुलिङ्गा वह्निकणाः । ललिताङ्गि सम्बोधनम् । २६—अमी एते घनाः । क्ष्माधरा मैनाकप्रभृतयः पर्वताः । क्षेमं कुशलम् । शिखण्डिनो मयूराः । विधुद्रयन्त्युत्थापयन्ति । सानूनि शिखराणि । २७—द्विषन्ति—

ईर्ष्यन्ति। राजीवमुखि हे कमलानने। वासवचाप इन्द्रधनुः। शिलीमुखा बाणाः। २८–जिगीषवो राजानः। अवैमि–आ ज्ञातमित्यर्थः। शरासनं धनुः। मान्मथं मन्मथस्येदम्। मानिनि सम्बोधनम्। २९–पाटवं तैक्ष्ण्यम्। रसो जलम्। कर्षणैः करणम्। परैरुत्कृष्टैः। उदञ्चदिति–उदञ्चन्नुच्चण्डस्तडिदेव करो यस्य सः। त्विषामधीशं सूर्यम्। ३०–निदाघबन्धोर्ग्रीष्ममित्रस्य। मृगेक्षणे सम्बोधनम्। ताराारमणं चन्द्रम्। बलाहको मेघः। ३१–लीलाकवलं स्वोदरस्थम्। बलाका बकभेदः। मुखे निजानने। तदस्थिमालां निदाघास्थिपङ्क्तिम्। ३२–भङ्गिर्विलासः। गुरुमुपाध्यायपदम्। सुभ्रु सम्बोधनम्। मानसं सरः कर्म। ३३–व्रजन्ति पलायन्ते। सुरचापचुम्बिनः इन्द्रधनुःसक्तात्। गुलिकाधनुः (हि. गुलेल)। ३४–अपह्नुता गोपिताः। शिखण्डिनां मयूराणाम्। कृच्छ्रादतिकष्टात्। कणा जलबिन्दवः। ३५–कोटिरग्रभागः। पारिताः सामर्थ्यविषयीकृताः। शितिकण्ठशावकैर्बालमयूरैः। सुभ्रु सम्बोधनम्। अभ्रं मेघः। ३६–भूभृत्कटकेषु पर्वतनितम्बेषु नृपसैन्येषु च। तडिदेव प्रदीपास्तैः। वारिदागमो वर्षाकालः। तात्पर्यम्? ३७–अय इति–अयो लौहं तद्वत् श्यामलेषु शष्पमण्डलेषु बालतृणसमूहेषु स्थिता इन्द्रगोपानां शोणवर्णकीटविशेषाणां (हि. बीर बहूटी) प्रचया यासु तासु। च्युतं जलधाराभिराकाशात्पतितं यत् शक्रधनुरिन्द्रकार्मुकं तस्य भ्रमात्। उद्भ्रान्तेति–उद्भ्रान्तं तडिदेव विलोचनं यस्य सः। ३८–अमी–एते धारानिचयाः। वियदेव नीलसरोजमण्डलम्। प्रतिमल्लः सदृशः। नाराचा बाणविशेषाः। पयोमुचो मेघस्य मेघाद्वा। ३९–अनङ्गशस्त्राणि कर्म। नताङ्गि सम्बोधनम्। अयस्कारो लोहकारः ॐ तेरवउं ॐ। अङ्गारः ॐ कोइला ॐ। तडिदेव शिखी वह्निः। ४०–विसूत्रितं शोषितम्। तव पद्मिन्याः। धारेति–धारा जलधारा एव लगुडास्तैः। तडिति क्रियाविशेषणम्। ४१–कृतक्षणं यापितावसरं कृतोत्सवं वा। तरङ्गिणीनाथं समुद्रम्। मार्गं पूर्वमार्गं सत्पन्थानं। च महापगा महानद्यः। नीचेषु गंभीरेषु निम्नप्रकृतिकेषु च। ४२–पयोदमाला मेघपङ्क्तिः। अद्रिसानुषु गिरिशिखरेषु। ४३–कथया क्षुद्रनदीर-

तत्वादिवार्तया । स्तनद्भिर्गर्जद्भिः । कलुषाः सपङ्काः सखेदाश्च । ४४–तरङ्गिणीनाथः समुद्रः । अन्तरे मध्ये । विमुद्रयन्ति जनयन्ति । समुद्रवल्लभा नद्यः । ४५–भिन्ना भृता, कियज्जलं पतितमिति भावः । अधीरलोचने सम्बोधनम् । शलाका मानदण्डान् । ४६–शीकरेति– शीकरा जलबिन्दव एव मौक्तिकानि तेषामुत्करम् । नदाः शोणाद्याः । प्राक्स्रोतसो नद्यः, प्रत्यक्स्रोतसो नदाः, नर्मदां विनेत्याहुरिति मल्लिनाथः । ४७–स्खलत्पदं क्रियाविशेषणम् । कार्तस्वरं सुवर्णम् । तडिल्लता विद्युत् । ४८–नताङ्गि सम्बोधनम् । कमलाकरस्तडागः । तरङ्गा एव दण्डास्तैस्ताड्यत इति सम्बन्धः । अर्थित्वं जलयाचकत्वम् । ४९–कलान्तरेण वृद्धया ( हि. ब्याज ) । अम्भसां निधेः समुद्रात् समुद्रस्य वा । ५०–पयांसि जलानि कर्म । वृद्ध्या कलान्तरेण । पयोमुचां मेघेभ्यः । प्रस्थः सानुर्मानपात्रविशेषश्च । शोधितं कृतमानं च । ५१–रसो जलं शृङ्गारश्च । उपबृंहणं वर्धनम् । तरङ्गिणीर्नदीः कर्म । बालमृगाक्षि सम्बोधनम् । ५२–तडिदूष्मणा विद्युत्तेजसा । कपालरङ्गः कचकृष्णत्वसाधको वर्णः । मृगाक्षि सम्बोधनम् । उद्गतानि श्यामलानि शष्पाण्येव कुन्तला यस्याः सा । ५३–अथ वियोगिनीनां मेघोपलम्भमुपक्रमते । तथाविधा सर्वजनव्यापिनी । तरङ्गिणीभर्तुः समुद्रस्य । अकीर्तिरगस्त्यमुनिना पीत इति । कुम्भभुवेऽगस्त्याय । तदङ्गनानां क्षुद्रनदीनाम् । ५४–पयोदवृन्दं मेघपङ्क्तिः कर्तृपदम् । तडिदेव लता । अम्भसां जलानाम् । नभ आकाशम् । ५५–लक्ष्यतां प्रयान्त्यवलोक्यन्ते । वाजिनो रवितुरगान् । अर्कसारथिररुणः । ५६–क्षणप्रभा विद्युत् । तव पयोदस्य । पयोद हे मेघ । यत् न उद्यते इति च्छेदः ५७–अङ्क उत्सङ्गः । अमन्थरं वेगवन्तं, सततं तद्रतम् । ५८–त्वय्यम्बुदे । विष्णुपदमाकाशं नारायणचरणं च । नवाम्बुद हे मेघ । स्वकार्यतात्पर्यं प्रियानयनरूपम् । मुञ्चसि पूरयसि । ५९–ते तव घनस्य । नोलिमा कृष्णत्वम् । अभ्यन्तरं हृदयम् । घन हे मेघ । अयुग्मपत्रिणः कामस्य । ६०–अदक्षिणः प्रतिकूलः । प्रियकाङ्क्षिणीषु वियोगिनीषु । ६१–मकराकरात् ( भयङ्करजलजन्तुसंकुलात् ) समुद्रात् । विजृम्भितं विलासः ।

पान्थचकोरचक्षुषां पथिकाङ्गनानाम्। ६२ – अनूरुसारथेः सूर्यस्य। वल्गा मुखरज्जुः। ६३ – सुरद्विपस्यैरावतस्य। पाथोद हे मेघ। दिव्याकाशे। अभ्रमूपतिरैरावतः। ६४ – तुषो धान्यवल्कलम्। विधूय तिरस्कृत्य। जीमूत हे मेघ। ६५ – कलावति सम्बोधनं, हे चन्दलदेवि। पदैर्वाक्यैः। इत्यमुना प्रकारेण। प्रोषितवल्लभाजनः पथिकाङ्गनालोकः। ६६ – अथ समागतप्रियाणामङ्गनानां मेघस्तुतिकुलकमुपक्रमते। क्षणद्युतिर्विद्युत्। क्षणम् – अपि। अन्यथा त्वद् वियुक्ता। घन हे मेघ। ६७ – ते तव मेघस्य। मधुर्वसन्तः। मुखमग्रभागमाननं च। ६८ – प्राणसमो वल्लभः। ते तव मेघस्य। सपर्या पूजा। अस्याः – एतदनन्तरं त्वया आनीतः स्यादित्यध्याहार्यम्। घन हे मेघ। आशुकविः समस्यापूरकः। ६९ – वियोगिनामेकशेषः। जीमूत हे मेघ। क्षणप्रभां विद्युतम्। ७० – वेणी प्रोषितभर्तृकाधार्यकेशरचनाविशेषः। प्रेयसि प्रोषिते पुरन्ध्र्य एकवेणीधरा भवन्ति। अङ्कपाल्याश्लेषः। अम्भोद हे मेघ। ७१ – स्मरातुराणां कामपीडितानाम्। दुर्दिनमन्धकारम्। कुरङ्गचक्षुषामङ्गनानाम्। काण्डपटो जवनिका। मेघ हे जलद। ७२ – विभाववर्गे चन्द्रचन्दनाद्युद्दीपनविभावसमूहे। जलद हे मेघ। तावकीं त्वत्सम्बन्धिनीम्। तदीयया चन्द्रिकासम्बन्धिन्या। एणनाभितः कस्तूर्याः। ७३ – चन्दनानिलैर्मलयपवनैः। पञ्चमः स्वरविशेषः। एकाङ्गभटो रक्षको वीरः। त्वया मेघेन। ७४ – पयोद हे मेघ। अजातभित्तिषु भित्तिष्वविद्यमानासु। ७५ – इति अमुना प्रकारेण। पयोमुचो मेघस्य। काञ्चिदिति पयोमुचश्चाटुकारितां भजन्तीति सम्बन्धः। ७६ – अथाभिसारिकाणां सरिदुपालम्भकुलकमुपक्रमते। तानवं कृशत्वम्। सखि हे वयस्ये। ७७ – मुहूर्तं क्षणमात्रम्। आमीलितमूर्तिः गोपितजलडम्बरा। अम्बरे आकाशे। फाल उड्डयनम्। ७८ – ऊर्मिस्तरङ्गः। ते तव नद्याः। परा अङ्गनाः। नावा नौकया। ७९ – ऊर्मिभिस्तरङ्गैः। मुधा व्यर्थमेव। अनाकर्णितकेनोपेक्षापूर्वकम्। तव नद्याः। ८० – तरङ्गा ऊर्मय एव दोलाताम्। विशीर्यते विनश्यति। ८१ – सहस्रशः सहस्रवारम्। कृष्णनिशासु चन्द्रिकारहितरात्रिषु। पदं चरणम्। समृद्धिर्जलाधिक्यम्, धनागमश्च।

घनात्ययो ग्रीष्मकालः । ८२ – परिस्खलदिति – परिस्खलन् वीचयस्तरङ्गा एव दुकूलपल्लवो वस्त्राञ्चलो यस्याः सा । बलाद् वेगात् । अन्यास्वभिसारिकासु । ८३ – नितम्बस्तटप्रदेशः कटिपश्चाद्भागश्च । जलमेवांशुकं वस्त्रम् । कुटिले सम्बोधनम् । कुलापगा मूलनद्यः । ८४ – एकया जारेण विना । पुमान् स्वभर्ता । गोत्रस्थितिरभिसारिकाकुलमर्यादा । ८५ – तरङ्गिणीं नदीम् । अनङ्गेति – अनङ्ग एव शृङ्गारसमुद्रस्तस्य वाहिनी नदी तत्सम्बोधनम् । ८६ – धोरणी परम्परा । मदनस्य हस्ते न्यस्तः ( स्वीयः ) हस्तः याभिस्ताः । अङ्कपाल्याश्लेषः । रभसो वेगस्त्वरा वा । ८७ – अमर्त्यभर्तुः कोदण्डमिन्द्रधनुः । घनो बहुलः । ८८ – विद्युदिति – विद्युदेव पङ्कजखण्डः कमलसमूहस्तस्य पङ्कपटल्युत्पत्तिस्थानम् । शाद्वलं हरिततृणम् । केदारः क्षेत्रमालवालं वा । कलमाः शालयः । प्रतिभूः सदृशी । धारा जलधारा एव लतास्तासाम् । सूरेन्दू सूर्यचन्द्रौ । वैजयन्ती पताका । सम्बोधनमिदम् । अम्भोधरो विशेष्यम् । ८९ – शिखिनो मयूराः । क्रोडो मध्यम् । कूजा केका । धारा जलधाराः । पल्लवौघः किसलयसमूहः । वैडूर्यरत्नं मरकतमणिः । गगनतलमेवादर्शो दर्पणः । निचोलः आवरणं ❀ खोल ❀ । सहचरति सादृश्यं धत्ते । कालमेघः कृष्णमेघो विशेष्यम् । ९० – निखिलभुवनलक्ष्मीवल्लभो देवो विक्रमाङ्कदेवः । वल्लभायाश्चन्दलदेव्याः पुरतः ।

## इति त्रयोदशः सर्गः ।



# अथ चतुर्दशः सर्गः

१ – वार्द्धकं वृद्धत्वम् । वारिदागमे वर्षाकाले । मूर्धजैः केशैः । आप्तपुरुषो विश्वस्तश्चरः । व्यजिज्ञपन्निवेदयाञ्चकार । २ – अवश्यंभवि भवतु मा वा । ३ – नीतिवर्तिनीं नयमार्गम् । मन्त्रः षाड्गुण्यरूपः । तत् कार्यम् । ४ – वेङ्गिनाथं चोलराजं राजिगम् । संयति युद्धे । भ्रातुर्जयसिंहस्य । वनवासमण्डले प्रदेशविशेषाधिपत्ये । ६ सर्गे ९९ श्लोकोऽवलोक्यः । ५ – अपहाय परित्यज्य । कोशं धनसंचयम् । उद्विहारहरिणा लोकशून्याः । भुवः कर्म । ६ – अथ सिंहदेवगजान् वर्णयति । संगरो युद्धम् । ये गजाः । करैः शुण्डादण्डैः । विष्टरप्रणयिनीमासनस्थाम् । ७ – अमुद्रतामुन्मेषम् । दानशीकरा मदजलबिन्दवः । ८ – कान्ता दन्ता एव बिसकाण्डानि तेषां निर्गमो यस्मात्तस्मिन् । दानं मदजलम् । दिवसनाथः सूर्यः । पुण्डरीकं सिताम्भोजम् । ९ – दशनैर्दन्तैः । क्षितिधराः पर्वताः । प्रत्यनीकभटाः शत्रुवीराः । १० – तस्य तस्मै सिंहदेवाय । गन्धसिन्धुरा गन्धगजाः । किमपि त्वद्राज्यापहरणादि । ११ – आटविकचक्रमटवीधनुर्धरमण्डलम् । अक्रमव्यापृतोऽन्यायरतः । शार्वरेषु रात्रिजातेषु । तमस्स्वन्धकारेषु । १२ – द्राविडं चोलराजं राजेन्द्रम् । उपायनैरुपहारैः । उपक्रमैर्व्यापारैः । बलं सैन्यम् । १३ – भूरिभिरनल्पैः । अवधार्यतां निश्चीयताम् । कृष्णवेणिः कृष्णा नदी । १४ – उदीर्योक्त्वा । विशारदेऽतिदक्षे । शारदमृगाङ्कः शरत्कालिकचन्द्रः १५ – प्रतार्यसे वञ्चनाविषयो भवसि । वत्स हे अनुज । आशयो हृदयम् । १६ – अग्रजं सोमदेवम् । शल्यं शङ्कुः । वैशसं दुःखम् । परमन्यत् । १७ – पर्यतप्यत संतप्तोऽभूत् । धरापतिर्विक्रमः । कटाक्षिता दृष्टा जनाः । तादृशां विक्रमवदुदारचेतसाम् । अनुशयाय पश्चात्तापाय । १८ – मन्त्रविन्नीतिनिपुणः । चारो गुप्तचर एव चक्षुस्तेन । तदाप्तपुरुषोक्तम् । तथा सत्यम् । स्वगतं स्वचेतसि । इति वक्ष्यमाणप्रकारेण । १९ – वत्स हे अनुज । दुर्नयः कुनीतिः । श्रिया लक्ष्म्या । नारदं मुनिम् । सा श्रीः । २० – मण्डलानि देशाः । दन्तिनो गजाः । अधिकाः

मत्तः। २१ – आः खेदे। प्रतिक्रिया प्रतीकारोपायः। अनुचितादुराचारात्। २२ – तत्र सिंहदेवे। सान्त्वनशतानि साम्नां शतम्। अक्रमादुराचारात्। २३ – विशारदा निपुणा। शरत् शरत्कालः कर्तृपदम्। जगत् कर्म। २४ – वैद्युते तडिज्जाते। शिखिनि वह्नौ। निवहः समूहः। बाष्पमश्रु। अम्बुधरा मेघा एव धूमसंचयास्तैः। २५ – शान्तेति – शान्तो यो वैद्युतस्तडिज्जातः कृशानुर्वह्निस्तस्माज्जन्म येषां तेषाम्। रजोभिधूलिभिः। कतिपये द्वित्राः। २६ – इन्द्रनीलं मरकतमणिः। कूर्चिका तूलिका। नीलिमा कृष्णत्वम्। नभस्तलं कर्तृ। जातमुत्पन्नं शाद्वलं हरिततृणं यस्मिन् तत्। २७ – अवान्तरापगाः क्षुद्रनद्यः। संमदाद्धर्षात्। महातरङ्गिणीचक्रवालं महानदीमण्डलम्। प्रसन्नतां विशदत्वं निर्मलचित्तत्वं च। २८ – तडितां विद्युताम्। अंशुभिः किरणैः। उष्णदीधितिः सूर्यः। २९ – शालयः कलमाः। करैर्हस्तैः। कलमगोपिकाजनः शालिगोप्यः। नूतनेति – नूतनोद्गतैस्तत्रैव क्षेत्रे सद्यः समुत्पन्नैः सरोजैः स्थलकमलैः संगतान् युक्तान् तत्सदृशान् वा। तात्पर्यम्? ३० – तडिदेव प्रदीपास्तैः। आचितं व्याप्तम्। वृत्तकर्परनिभं वर्तुलकपालतुल्यम्। नभस्तलं कर्तृ। ३१ – एत्यागत्य। लगितान्याकाशे लग्नानि। उडूनि नक्षत्राणि कर्तृपदम्। ३२ – निचोलक आवरणम् ❀ खोल ❀। व्योमाकाशमेव दर्पणतलं तस्मिन्। शरदेव वधूः। तत्क्षणमुन्मिषितानि कैरवाण्येवेक्षणानि नेत्राणि यस्याः सा। ३३ – आतपः सूर्यप्रकाशः। तपनक्षपाकरौ सूर्यचन्द्रौ। ३४ – सान्द्रचन्दनविलेपनादप्यधिकम्। अमृतद्युतेश्चन्द्रस्य। ३५ – पुण्ड्रक इक्षुभेदः। कृत इति – कृत ईक्षणयोर्नेत्रयोरुत्सवो याभिस्ताः। सुधाभरादमृतबाहुल्यात्। ३६ – शक्रकार्मुकमिन्द्रधनुः। कलापिभिर्मयूरैः। यत्र कार्मुके। यद् यस्माद्धेतोः। ते कलापिनः। ३७ – क्षुण्णमौक्तिकपरागपाण्डुरश्चूर्णितमुक्ताधूलिधवलः। दिव्याकाशे। क्षीरनीरधिर्दुग्धसागरश्चन्द्रजनकः। इन्दुं स्वपुत्रत्वात्। ३८ – जाड्यं शैत्यं कर्तृ। पदं स्थानम्। कमलिनीषु निजकान्तासु। व्यातनोद् विस्तारयामास। ३९ – मानसं सरः। भार्गवस्य परशुरामस्य। लक्ष्यं शरव्यम्। 'हंसद्वारं

भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम्' इति मेघदूते। ४० – तत्र शरदि। कुङ्कुमेति शरदि कुङ्कुमं निष्पद्यत इति स्थितिः। ४१ – अथ विरहिणीनां चन्द्रं प्रत्युक्तीर्वर्णयति। शरव्यतां लक्ष्यत्वम्। कुरङ्गं लाञ्छनात्मकं मृगम्। द्रुतो द्रवीभूतः। तडिदूष्मणा विद्युत्तापेन। तुषारकर हे चन्द्र। ४२ – मेघा एव कर्दमः। कथय हे चन्द्र त्वम्। वियोगिनामेकशेषः। ४३ – प्रमाद्यसि अहो चन्द्र! प्रकृतिभङ्गुराः स्वभावनश्वराः। राहुर्ग्रहः। आमलकं धात्रीफलं तद्वत्। ४४ – हृदयं मध्यभागोऽन्तःकरणं च। प्रसन्नतां नैर्मल्यं हृष्टत्वम्। वल्लभ प्रिय! हे चन्द्र। ४५ – अनङ्गशराः कामबाणाः। प्राणनाथः प्रियः। क्षपामुखे प्रदोषे। यामिनीदयितं चन्द्रम्। एणलोचना अङ्गनाः। ४६ – इन्दुदीधितिषु चन्द्रकिरणेषु। शारदीषु शरत्कालजातासु ❀ रात्रिषु ❀। करदीपिकासु करस्थदीपमालिकासु। अनुजस्य सिंहदेवस्य। ४७ - तस्यानुजस्य। मानसे चित्ते। प्रसादितो धवलीकृतो मृगाङ्कोऽतिमलिनश्चन्द्रो यया तया। असौ विक्रमः। शरदा शरत्कालेन। ४८ – कुन्तलेन्दुर्विक्रमः। तत्र सिंहदेवे। यशोऽर्थिनां कीर्तिलिप्सूनाम्। ४९ – प्राहिणोत् प्रेषयामास। तत्समीपं सिंहदेवसंनिधौ। विशां पतिर्विक्रमः। अनय एव वायुस्तेन लंघित आक्रान्तः। स सिंहदेवः। ५० – वैशसस्य दुःखस्य। एष विक्रमाङ्कः। अवलेपो मदः। कृष्णवेणिः कृष्णा नदी। स सिंहदेवः। ५१ – एनं विक्रमम्। तच्चमूं सिंहदेवसैन्यम्। मण्डलेश्वराः सामन्तभूपतयः। भविष्यति भाविनि सति। ५२ – स सिंहदेवः। द्विपघटा गजसमूहान्। कटस्थली गण्डप्रदेशः। दानं गजमदः। वाजिनोऽश्वान्। ज्येष्ठो भ्राता विक्रमः। ५३ – तच्चमूपरिकरेण सिंहदेवसैन्यसमूहेन। कृष्णवेणिः कृष्णानदी। तानवं जलरिक्ततां च। सिन्धुः समुद्रः। कलुषतां मालिन्यम्। ५४ – बन्धनं कारावासः। चेष्टितं व्यापारः। ५५ – चक्षमेऽमृष्यत्। सत्त्वं बलमन्यत्र जलजन्तुः। ईश्वराः प्रभवः। ५६ – सविधे संनिधौ। स सिंहदेवः। अनङ्कुशः स्वेच्छाचारी। अश्रिया विपदा। जडधियो मूर्खाः। ५७ – तत्र सिंहदेवे। संस्तवं परिचयम्। वसुमतीपतिर्विक्रमः। ५८ – दिग्गजेति – दिग्गजानां ये श्रोत्रशंखाः कर्णलग्नाः कम्बव-

स्तेषां कुहरेषु छिद्रेषु प्रसर्पिणा । अयत्नतः प्रयासं विनैव । तस्य विक्रमस्य । ५९—क्षितीन्द्रो विक्रमः । पटहो वाद्यविशेषः । दिक्करीति-दिक्करिणां दिग्गजानां श्रवणपाटने कर्णविदारणे । कराः शुण्डादण्डाः । स स्वनः । ६०—भूपतेर्विक्रमस्य । दन्तिनां सैन्यगजानाम् । अम्बुदेति—अम्बुदानां मेघानां निनादवन्मेदुरः सान्द्रः । नभ आकाशं कर्म । ६१—पन्नगेश्वरः शेषः । तद्बलेति—तद्बलैर्विक्रमसैन्यैः क्षुण्णाभिः, रेणुभिस्तलिना स्तोका । ६२—स्थलपथीकृतेषु स्थलमार्गतामापादितेषु । नोऽश्वानाम् । जवविधौ वेगव्यापारे । अस्य विक्रमस्य । क्ष्मारजः क्षितिधूलिं कर्म । ६३—तस्य विक्रमस्य । वारणवरा गजश्रेष्ठाः । समेत्यैकत्रीभूय । ६४—पस्पृशुः स्पृष्टवन्तः । दिननाथवाजिनां रवितुरगाणाम् । भोगिभर्तुः शेषस्य । मतङ्गजस्थाने गजावस्थाने । ६५—हस्तशीकरा करोत्क्षिप्तजलबिन्दवः । तस्य विक्रमस्य । रेणुहारितपथस्य धूलिसमूहेन जातदिग्भ्रमस्य । भास्वतः सूर्यस्य । ६६—द्विपघटा गजपङ्क्तिः । ६७—रेजिरे शुशुभिरे । करटिनो गजाः । सारिर्हस्तिपर्याणम् ( हि. अम्बारी ) । ६८-वाहनैस्तुरगैः । अरुणः सूर्यसारथिः । कुम्भिनो गजाः । चीनपिष्टं सिन्दूरम् । रेणुविसरो धूलिनिकरः । ६९—भूपतिर्विक्रमः । सान्त्वनाय साम्ने । अकरणं दुष्कर्म । कुलपांसनाः कुलकण्टकाः । ७०—अन्तिकीभवति सांनिध्यमागच्छति । निम्नगा कृष्णा नदी । परिपंथिनः प्रतिपक्षगजाः । ७१—श्रीचालुक्यधुरन्धरो विक्रमः । स्रोतस्विनी नदी । गाहनं विलोडनम् । प्रतिपथेति—प्रतिपथं व्यावर्तितेनाम्भोभरेण भ्राम्यद्भिर्वीराणां करंकैरस्थिपञ्जरैः संकटे तटे यस्याः सा । कृष्णवेणीसरित् कृष्णानदी । ७२—अवनितिलको विक्रमः । इमं लघुभ्रातरम् । स सिंहदेवः पुनः । अनङ्कुशा स्वेच्छाचारिणी ।

इति चतुर्दशः सर्गः ।

—❀❀❀—

# अथ पंचदशः सर्गः

१–भुजेति–भुजविक्रम एव दन्ती गजस्तस्य डिण्डिमः। समरोत्साहो युद्धोत्साह एव शिखण्डी मयूरस्तस्य वारिदो मेघः। कुन्तलभर्तुर्विक्रमस्य। दुन्दुभिर्विशेष्यम्। २–वीरसुन्दर्यः पतिवरणार्थं समागता देवाङ्गनाः। चतुष्कमण्डलानि चतुष्कोणात्मकावस्थानानि ॐ चउकपूरिया इत्यर्थः ॐ। नरनाथो विक्रमः। ३–रणेति–रणदुन्दुभिरेव मेघास्तेषां निःस्वनैः। सुभटश्रेणय एव विदूरभूमयः। असिवल्लयः खड्गलता एव नवरत्नाङ्कुराः। ४–रागः प्रेम क्रोधश्च। कबरीषु केशपाशेषु। कुरङ्गचक्षुषामङ्गनानाम्। ५–अधिरोपितेति–अधिरोपिता गजेषु स्थापिता ये सारिपञ्जरा हस्तिपर्याणरथान्यासनानि तेषु स्थित्या दर्पोद्धुराणि योधमण्डलानि भटसमूहा येषु ते। बहिः शिबिरात्। संनाहः कवचः। ६–प्रमदा प्रिया। नागरखण्डस्ताम्बूलवल्लीदलम्। ७–रिपुराजशिरःसु शत्रुनृपतिमूर्धसु। शेखराः शिरोमुकुटानि। आलिः पंक्तिः। कृतलोहबन्धना लोहबन्धयुक्ताः। ६ सर्गे ४६ श्लोकोऽवलोक्यः। ८–कुञ्जरा गजाः। अश्वीयमश्ववृन्दम्। भटा योद्धारः। बलं सैन्यम्। लिपिं साम्यम्। ९–करशीकरा शुण्डादण्डोत्क्षिप्ता जलबिन्दवः। प्रहितैः प्रेषितैः। क्षितिपस्य विक्रमस्य। १०–अथ विक्रमाङ्कदेवं वर्णयति। अम्बुरुहां कमलानाम्। परिरम्भ आलिङ्गनम्। स्फुरणप्रवणाय स्पन्दनतत्पराय। नृपो विक्रमः। ११–पुलकाङ्कुरो रोमाञ्चः। रागः प्रेम। अविजानतीमुपेक्षमाणाम्। सुभटश्रियं वीरलक्ष्मीम्। १२–घटयन् विस्तारयन्। प्रतिराजेति–प्रतिराजानः शत्रुनृपतय एव पङ्कजानि तेषां ग्लपनार्थम्। तुहिनच्छटां हिमवृष्टिम्। १३–वलयोदरे कटकमध्यभागौ। हरिणा विष्णुना। विपक्षाः शत्रवः। १४–वपुषा स्वशरीरेण। स्फटिकक्ष्माभृता कैलासेन। कङ्कटतां कवचत्वम्। १५–धृतेति–धृतानि मङ्गलाय मौक्तिकान्यक्षताश्च येन सः। क्षणदानाथश्चन्द्रः। वारणो गजः। चतुष्कवेश्मनो वज्रनिर्मितचतुष्कोणगृहाद्दूष्यात्। १६–तूर्यं वाद्ययन्त्रविशेषः।

अर्यमा सूर्यः। १७–क्षितिपेन विक्रमेण। सुरेन्द्रदन्तिन ऐरावतस्य। १८–आहवे युद्धे। विकल्पः सन्देहः। जयकुञ्जरो विजयगजः। स्थितिम् ॐ अवस्थानम् ॐ ?। करास्फालनतः शुण्डादण्डताडनात्। १९–नलिनी-दलानि कमलिनीपत्राणि। मदवारि दानजलम्। सरसीं तडागम्। २०–मदपानैर्दानजलास्वादनैः। करविभ्रमैः शुण्डादण्डक्षेपैः। अभूत् स गजः। रिपुवारणाः शत्रुगजाः। २१–अवतारत आविर्भावात्। तरसा वेगेन। पार्थिवो विक्रमः। २२–समराङ्गणसंगतिं भजन् युद्धभूमिसंगतः। परिरम्भणमालिङ्गनम्। विलाससद्मनि केलिगृहे। २३–तीव्रविक्रमः प्रबल-पराक्रमः। भूपतिर्विक्रमः। शत्रुसैन्यं कर्म। २४–अथ सिंहदेवगजान् वर्णयति। मदेति–मदवारिभिर्दानजलैः समुत्थानां शैवलानां द्युतिरिव द्युतिर्येषां तेषां रोलम्बानां भ्रमराणां कलापाज्जन्म येषां तेषाम्। दशनां-शुचन्द्रिकां दन्तकिरणकौमुदीम्। तिमिराणामन्धकाराणाम्। ये गजाः। २५–ये गजाः। पदविन्यसनं पादक्षेपम्। २६–सरसी तडागः। स्वैर-विहारः स्वच्छन्दविहरणम्। अरविन्दमण्डलात् पद्मसमूहात्। येगजाः। श्रियं लक्ष्मीम्। २७–अद्रिषु विघट्टनान्याघातास्तेषु। ये गजाः। निर्झरै-र्जलप्रवाहैः। अतिप्रभूततामतिप्राचुर्यम्। मदं दानम्। २८–श्रुतिभूषणशङ्ख-शुक्तिभिः कर्णेष्वलङ्करणत्वेनार्पितैः शंखैः शुक्तिभिश्च। शशिमुग्धाभिश्चन्द्र-वद्रमणीयाभिः। ये गजाः। मदनिर्झरिणी दाननदी। कलहंसीभिः काद-म्बाङ्गनाभिः। २९–इदं पदम्। प्राज्यभुजस्य प्रबलबाहोः। भूभुजो नृपस्य। त्रिपदीनिभेन पादत्रयावस्थानव्याजेन। ये गजाः। ३०–कृतसंनहनाः सुस-ज्जिताः। मधुव्रता भ्रमराः। यामिकतां प्राहरिकताम्। श्रियो राज्यलक्ष्म्याः। ३१–अथ सिंहदेवसैन्याश्वान् वर्णयति। ३१–जलराशिः सागरः। जवो वेगः। भूः पृथ्वी। कविकां खलीनम्। दशनैर्दन्तैः। येऽश्वाः। ३२–अवलम्ब-विडम्बनामाश्रयगतिदैन्यं निराश्रयगत्यभावं वा। तरणेर्हयाः सूर्याश्वाः। नोऽस्माकमश्वानाम्। क्षपयन्ति स्म–अचूर्णयन्। येऽश्वाः। ३३–नववैदूर्यनिभे नूतनमरकतमणितुल्ये। येऽश्वाः। वियद्भ्रमादाकाशभ्रान्त्या। ३४–वद-नेषु स्वेषामश्वानां मुखेषु स्थितस्य फेनमण्डलस्य छलतो व्याजात्। दुग्ध

पयोधिनोच्चैःश्रवःपित्रा क्षीरसागरेण। येऽश्वाः। निजसुनुतुरङ्गः – उच्चैःश्रवाः। ३५ – वैरिकुट्टिमाः शत्रुनृपतिगृहबद्धभूमयः। स्फुटितैरुत्थितैः। कदर्थिताः पीडिताः। अङ्घ्रिभिः पादैः। येऽश्वाः। ३६ – मेघडम्बरा घनघटाः ❀ छत्रं च ❀। सुरचापैरिन्द्रकार्मुकैः। यत् सैन्यम्। उदञ्चयति स्म – अजनयत्। साध्वसं भयम्। ३७ – अथ सिंहदेवपदातीन् वर्णयति। हृदयानि वक्षःस्थलानि। छलतो व्याजात्। यैर्भटैः। निर्गहनैर्निर्भयैः। ३८ – सहेति – सहजोष्मणा स्वाभाविकतेजसा विशोषेण जर्जरमत्यर्थं शुष्कम्। हृदुरःस्थलेषु। येषां भटानाम्। समनीकाः शत्रुभटाः ❀ संग्रामाः ❀। अस्थ्नां कीकसानाम्। ३९ – ये भटाः। तीर्णेति – तीर्णा महाहवा महासंग्रामा एवार्णवा यैस्ते। प्रणयित्वं संगतिम्। डिण्डीरकलापः फेनमण्डलम्। ४० – प्रतिपक्षाः शत्रवः। यदिति – येषां भटानामङ्गविस्तरेऽवयवसमूहे। वीररसो जलं च। ४१ – तिमिरैरन्धकारैः। दवो वनवह्निः। घर्मवासरैर्ग्रीष्मदिवसैः। यद्बलम्। ४२ – परिभाव्य विलोक्य। भैरवं भयङ्करम्। बलं सिंहदेवसैन्यम्। संभ्रमं भयम्। परं केवलम्। ४३ – विजय एवामृतम्। रस उत्साहस्थायिभावात्मको रसो जलं च। ततस्तदनन्तरम्। समुपाक्रम्यत – आरब्धमभूत्। ४४ – बलद्वये सैन्ययुगले। बलान्निजशक्तेः। परिदोलनोद्यते कम्पयति सति। समर एव द्रुमस्तस्मात्। शिरःकदम्बकैर्मूर्धसमूहैः। ४५ – वल्गत आत्मानं श्लाघमानस्य। समं युगपत्। दृशि नेत्रे। ४६ – असिना खड्गेन। लोलतां श्लथत्वम्। भङ्गशङ्कितश्छेदबलात्। मुदं हर्षम्। तत्र मूर्धनि। पृषत्को बाणः। ४७ – विघट्टनादाघातात्। शकुन्तयो गृध्राद्याः पक्षिणः। अर्थितां लिप्साम्। परमार्थेति – सत्यमांसपिण्डेष्वपि। ४८ – अगाधतामतलस्पर्शत्वम्। रुधिरस्रोतसि शोणितप्रवाहे। आहवो युद्धम्। ४९ – गुणवादपरायणाः स्तुतितत्पराः। ईक्षितमवलोकनम्। परुषत्वं कठोरत्वम्। करवालेषु खड्गेषु। ऊष्मा तेजः। ५० – मानिनां भटानाम्। अवमाननास्पदमवज्ञास्थानम्। अमीषु शिरःसु। पदातयः पादचारिणो भटाः। ५१ – शरलूनेन बाणभिन्नेन। अवनौ पृथिव्याम्। विद्विषि रिपौ। प्रहितं लग्नम्। लोचनं निज-

दृष्टिपातम्। ५२–असिघट्टनतः खड्गानां संघर्षणात्। पिशाचयोषितां प्रेताङ्गनानाम्। प्रियतामुपयोगित्वेनादरणीयताम्। आमिषं मांसम्। ५३–द्विपकुम्भा गजशिरःपिण्डाः। छलतो व्याजात्। व्योमनिभा आकाशतुल्या। असिमण्डली खड्गसमूहः। जय एव तिग्मांशुः सूर्यस्तम्। ५४–हृदयानि वक्षःस्थलानि। करिकुम्भा गजशिरःपिण्डाः। चलेति–चटुलश्रोत्रतालवृन्तपवनतरङ्गाः। ५५–नमन्नग्रभागं नमयन्। लम्पटो लालसः। अधिरोपयन् स्वशिरसि प्रतिष्ठापयन्। ५६–एतदन्तरेऽत्रान्तराले। कुन्तलचक्रवर्तिनो विक्रमस्य। प्रतिपक्षाः शत्रवः। विलक्षं लक्ष्यहीनम्। ५७–महोद्धुरोऽत्युत्कटः। पटुर्दक्षः। पराङ्मुखः सन्। प्रतिपक्षेति–प्रतिपक्षः शत्रुसैन्यमेव प्रलयानिलस्तेनाहतः। ५८–पुलकप्रणयं रोमाञ्चसंगतिम्। चालुक्यनृपो विक्रमः। उद्दाम उत्कटः। ५९–दलयन् खण्डयन् कवलयन्। कन्दलीं विशेष्यम्। रणेति–रण एव लीलासरसी क्रीडातडागस्तस्या मृणालिकाम्। करीति–करिण एव मेघास्तेषां घटाः। पाटयन् विनाशयन्। राजहंसो राजश्रेष्ठः पक्षिविशेषश्च। ६०–कुञ्जरकुम्भा गजशिरःपिण्डाः। मुकुलानुकारिभिः कलिकासमानैः। रिपुवीरेति–रिपुवीराणां शत्रुभटानां यश एव क्षमारुहो वृक्षस्तम्। ६१–रिपुवारणकुम्भमण्डलीं शत्रुगजकुम्भसमूहम्। निर्गहनो निःशङ्कः। स्मेरमुखः स्मयमानः। ६२–अरिनाराचं शत्रुक्षिप्तशरविशेषम्। इभस्य स्वगजस्य। चरणेन स्वपादेन। पृष्ठतः * संलग्नमेव *। सुरपुष्पप्रकरैर्देववर्षितप्रसूनपुञ्जैः। ६३–करटी गजः। ध्वजः केतुः। प्रतिवीरप्रहितां शत्रुभटक्षिप्ताम्। जयकीलकमालिकां विजयस्तम्भसमूहम्। क्षितिपालो विक्रमः। ६४–असिना खड्गेन। विशिखैर्बाणैः। तोमराः शर्वलाः शस्त्रविशेषाः ( हि. गंडासा )। कुञ्जरो गजः। करान् हस्तान्। दीक्षितः परायणः। ६५–तुरङ्गवाहिन्यश्वसेना। तुरगावलिरश्वसमूहः। अंशुमालिनः सूर्यस्य। कलयामास निश्चिकाय। ६६–असिधेनुश्छुरिका। आधोरणा हस्त्यारोहाः। पृथिवीन्दुर्विक्रमः। युगपत् समकालमेव। ६७–शैलविटङ्काः पर्वतशिखराणि। विशिखैर्बाणैः। द्विषतां करिणः शत्रुगजाः। दिग्द्विरदानैरावतादीन्। ६८–प्रतिवीराः शत्रुभटाः।

मार्गणा बाणाः। कङ्कटाः कवचाः। शिखिभिर्वह्निभिः। अकल्पयदरचयत्। समरेति-समर एवाम्भोनिधिस्तस्य वाडवान् वडवाग्नीन्। ६९-रणसीमनि समराङ्गणे। विषादिनो दीनाः। तपस्वितां तापसत्वं वराकत्वं च। ७०-करिपादेति-करिपादैर्विपाटिता उद्भटप्रतिभूपालानामुत्कटशत्रुनृपतीनां कपालकर्पराः शिरोस्थिशकलानि येन सः। भुवनेति-भुवनत्रयमेव भाण्डं पात्रं तस्य पूरणे क्षमा समर्था कीर्तिर्यस्य सः। ७१-कठोरं पाटवं दक्षत्वं यस्य सः। प्रतिभूभृत्कटके शत्रुनृपतिसैन्ये। शरेति-शरवर्षैर्बाणवर्षणैः कृतमभिभाषणमुत्तरप्रदानं येन सः। ७२-क्षणेति-क्षणमात्रेण विसूत्रिता विनाशिता अखिलाः प्रतिपक्षाः शत्रवो येन तस्य। वपुषि शरीरे। त्रिदिवौकसां देवानाम्। शिलीमुखा बाणाः, न तु शत्रुशराः। ७३-पताकिनी सेना। समनीकमूर्धनि समराग्रभागे। वर्णनास्पदं प्रशंसनीयम्। ७४-चकिता भीता। कबन्धानां शिरोविहीनकलेवराणाम्। ताण्डवैर्नृत्यैः। समरप्राङ्गणान्येव रङ्गभूमयो नाट्यशालास्तासु। विजयश्रीर्जयलक्ष्मीः कर्तृपदम्। ७५-कवचे कङ्कटे। कृतस्थितीन् लग्नान्। व्याप्तिविबन्धकारिणो विस्तारावरोधकान्। कमलप्रतिमेन पद्मतुल्येन। विशिखान् बाणान्। ७६-शिरस्त्रं शीर्षण्यं शिरोरक्षणकवचः। नाराचा बाणविशेषाः। सङ्गरश्रियं युद्धलक्ष्मीम्। ऊर्ध्वेति-ऊर्ध्वमग्रे, आनता कन्धरा ग्रीवा यस्य तत्। शिरः स्वमूर्धानम्। ७७-रिपुशोणितबिन्दुमुद्रितौ शत्रुक्षतजबिन्दुचिह्नितौ। क्षपितेति-क्षपितानां हतानां प्रतिपक्षाणां शत्रूणां शेखरेभ्यः शिरोभूषणेभ्यश्च्युतै रत्नाङ्कुरैर्दन्तुरावुन्नतौ। ७८-रणसीमनि समराङ्गणे। ये हस्त्यारोहाः। विशिखैर्बाणैः। कीलिता बाणैः कुम्भतटेषु प्रत्युप्ताः। कुम्भतटीविटङ्कतो गजशिरस्तटशिखरात्। ७९-अथ निहतवीरविलासिनीविलापं प्रपञ्चयति। नाथ हे वल्लभ। विमुक्तकैतवं प्रपञ्चितकपटं यथास्यात्तथा। मिषो व्याजः। दृशौ नेत्रे। सुभट सम्बोधनम्। स्वामिचमूपराभवं भर्तृसैन्यपराजयम्। ८०-सुरधाम्नि स्वर्गे। इह रणाङ्गणे। निलिम्पपांसुला देवस्वैरिण्यः। एतदुपाधिनानेन छलेन (एतद्धेतुजन्येनाधीरणेन ?)।

कामिन् सम्बोधनम्। अमुनावधीरणेनैतेन निरादरेण। ८१–विदितम्–आः! मया ज्ञातमिति भावः। विगाहसेऽङ्गीकरोषि। सुभट सम्बोधनम्। सुरवारपुरन्ध्री देववाराङ्गना। इह श्वाससमीरे। सौरभं सुगन्धः। ८२–भाग्यविपर्ययाद्दौर्भाग्यात्। अपर्यन्तमनन्तम्। अहह खेदे। अभिसरन्ति निर्गच्छन्ति। संपदो राज्यश्रियः। अनङ्कुशाः स्वेच्छाचारिण्यः। ८३–सुराङ्गनागृहं देवलोकम्। सौभाग्यविपर्ययाद्दौर्भाग्यात्। स्मरातुर हे कामपीडित। प्रभुसंमानं स्वामिप्रदत्तमादरम्। ८४–वीरविलासिनीजनो निहतशत्रुवीराङ्गनाः। आक्रन्दो रोदनं तज्जन्यः कोलाहलो वा। दुर्दिनं नेत्राम्बुधारासारः। अरिपृष्ठग्रहणात् पलायमानस्य शत्रोः पृष्ठतः प्रधावनात्। न्यवर्तत विरतोऽभूत्। ८५–तदनु तदनन्तरम्। समराम्बुधेर्युद्धसागरस्य। सरलितधनुः शिथिलितचापः। कृपणोऽनुकंप्यः। कीर्त्यापि राज्यश्रिया तु त्यक्तपूर्व एव। प्रकृतिमहतां महानुभावानाम्। दुर्वृत्तेषु दुराचारिषु। चटुलाः क्षणस्थायिन्यः। क्रुधः कोपाः। ८६–करितुरगसमृद्धां हस्त्यश्वसैन्यसमेताम्। करेणुर्हस्तिनी। हेमासनं स्वर्णसारिपञ्जरः। प्रवरेति–प्रवरा उल्लसन्त्यो जयपताका विजयध्वजा यस्यां सा। राजधानीं कल्याणम्। ८७–कुलकण्टकं चालुक्यकुलकलङ्कं तं सिंहदेवम्। अटवी वनम्। अवन्ध्यैः सफलप्रयत्नैः। कारुण्योद्गतेति–कारुण्येन दययोद्गतैर्बाष्पैरश्रुभिर्गद्गदानि पदानि वचनानि यस्य सः। चालुक्यान्वयशेखरो विक्रमः। शिखरेति–शिखरेषु प्रासादाद्यग्रभागेषु प्रेङ्खोलाश्चञ्चला ये मुक्ताफलानां प्रालम्बा ऋजुलम्बमानमुक्तामालास्तेषां द्युतिपुञ्जैर्दर्शिता यशसां गुच्छा यया ताम्।

## इति पञ्चदशः सर्गः



# अथ षोडशः सर्गः

१ – कुङ्कुमेति – कुङ्कुमस्य काश्मीरजस्य स्मितं विकासं संकोचयतीति। क्रौञ्ची क्रौञ्चपक्षिणी। मदनदेशकः कामदायी। वियदिति – वियत आकाशस्य यल्लावण्यं सौन्दर्यं तस्य तस्करो विनाशकः। २ – शरदिति – शरत्कालातपेन क्लान्तस्य म्लानस्य कान्तावक्त्रेन्दोर्नायिकावदनचन्द्रस्य वल्लभ आनन्ददायी। हेमन्तः – ऋतुः। सामन्तोऽधीननृपः। स्मरः काम एव भूपतिस्तस्य। ३ – शरत् शरत्कालः। सौभाग्यं नैर्मल्यम्। क्षपापतेश्चन्द्रस्य। कान्ता अङ्गनाः। ४ – विभावर्यो रजन्यः। तपने सूर्ये, दिवसपतित्वात्। मन्दतेजसि गलितप्रतापे। कृतक्षणा गृहीतनियमा विहितोत्सवा वा। ५ – दोलयन्तश्चञ्चलयन्तः। कस्तूरीपत्रबन्धुषु कस्तूरिकापत्रवल्लीरचनायुतासु। अलकान् – चूर्णकुन्तलान्। अलकास्त्रीणां कुबेरपुरीनारीणाम्। ६ – रतिकोपे केलिकलहे। आयामवत्यो दीर्घाः। मुदे हर्षाय। ७ – प्रौढत्वं दीर्घत्वं प्रागल्भ्यं च। सङ्कोचोऽल्पत्वमधृष्णुत्वं च। त्रियामाभिः रात्रिभिः। ८ – नभ एव क्षेत्रं केदारस्तस्मिन्। तरलकान्तयश्चञ्चलत्विषः। त्विषं शोभाम्। तुषारो हिमम्। ९ – सशङ्केन भीतेन। कन्दर्पः कामः। ऊष्मा प्रतापः। मदिराक्षीणामङ्गनानाम्। १० – कुचोत्सङ्गाः स्तनतटाः। मन्मथतेजसः कामप्रतापस्य। ११ – यामिनीभिः – रजनीभिः। अनङ्गसङ्गतैः सकामैः। कौतुकं कर्म। १२ – तुषाराद्रिर्हिमाचलस्तस्य वायोः कारणात् स्फुटनं चर्मणः विदीर्णता तस्य शङ्कया भयेन। कुङ्कुमालेपः काश्मीरजलेपनमेव निचुला निचोलका आवरणानि तेषु। १३ – पुण्ड्रेक्षुरिक्षुभेदः। क्षेत्राणि केदाराः। मांसलं घनम्। कुङ्कुमचर्चा कुङ्कुमालेपनम्। हन्त हर्षे। जीवितमेतत्त्रितयम्। १४ – मद्वैरिणो मम तुषारस्य वैरिणः शत्रोः। कठोरांशोः सूर्यस्य। पद्मिनी सूर्यप्रिया। १५ – समक्षं पुरतः। पर्यभूयत पराभवमवाप। तेजस्विनः सप्रतापाः। कालवशं ऋतुपरिवर्तनस्य भाग्यचक्रस्य च वशम्। १६ – स्पर्शसौभाग्यं स्पर्शसुभगत्वम्। सामान्ययोषितां साधारणाङ्गनानाम्।

तुहिनागमो हिमकालः। १७—चुलुक्यान्वयचक्रवर्ती विक्रमः। मृगेन्द्रगामी सिंहगतिः। मृगयामाखेटम्। १८—वारबाणेन कञ्चुकेन। नीरदमेचकेन मेघश्यामेन। आमुक्तेति—आमुक्तः परिहितो नीलोत्पलानां कङ्कटः कवचो येन तस्य। चूत आम्रः। चूताङ्कुरकार्मुकस्य देवस्य कामस्य। * कामो हि नीलोत्पलैः कङ्कटं करोति *। १९—कञ्चुकस्य वारबाणस्य। नीलभासः श्यामकान्तेः। विद्याधरो देवयोनिविशेषः। अम्बरमाकाशम्। २०—अन्तःपुरसुन्दर्योऽवरोधाङ्गनाः। कलत्रं भार्या। सपरिच्छदा सपरिजना। २१—मौक्तिकानि कर्म। स्फटिको मणिविशेषः। कुड्मलानि मुकुलानि। यश एव द्रुमस्तस्य। २२—प्रपञ्चं विस्तारम्। खण्डेन समूहेन। लक्ष्मीति—लक्ष्म्या आदिधाम्नाम्। राजहंसः पक्षिविशेषः। २३—द्वयोर्वामदक्षिणयोः। फेनविपाण्डुराभ्यां डिण्डीरवद्धवलाभ्याम्। पृथिवीतलेन्द्रो विक्रमः। प्रसाधितेति—प्रसाधितान्यलंकृतान्यशेषाणि दिगन्तराणि येन तस्य। दोर्युगस्य बाहुयुगलस्य। २४—व्योमाङ्गणस्थेनाकाशगतेन। वाजी अश्वः। झम्पासूत्पतनेषु। समुद्यतस्तत्परः। उष्णांशुतुरङ्गमाणां सूर्याश्वानाम्। २५—डिण्डीरविपाण्डुरेण फेनवद्धवलेन। घर्मेण सूर्यतेजसा। सहस्ररश्मेः सूर्यस्य। जहासोपहसति स्म। २६—तेजोविशेषादद्भुतगुणविशिष्टत्वात्। मनसां जनमानसानाम्। वाजी—अश्वः। राजीवमुखस्य कमलाननस्य। पङ्गुभावं गमनासमर्थत्वम्। २७—पर्याणमश्वपृष्ठस्थमुपवेशनासनम्। माणिक्यं पद्मरागमणिः। हरिप्रभस्येन्द्रतुल्यस्य। हरिरश्वः। खुराः शफानि। अरिभूपालाः शत्रुनृपाः। पांसुर्धूलिः। २८—जनस्य प्रेक्षकलोकस्य। चित्रोल्लिखितेति—चित्रे उल्लिखितस्याश्ववारस्याश्वारोहिण इव दृढमासनं यस्य तस्मिन्। तत्र विक्रमे। भ्रमिर्भ्रमणम्। श्रमादिव—वस्तुतस्त्वपूर्वसंदर्शनकौतुकात्। २९—संचारिणी जङ्गमा। विभ्रमा विलासा एव पल्लवास्तेषाम्। अन्तःपुरं—विशेष्यम्। रसनायकस्य कामस्य। ३०—तस्य वाराङ्गना विक्रमस्य वेश्याजनः। भ्रूकार्मुकेति—भ्रुवावेव कार्मुकं धनुस्तत्रारूढाः कृतसन्धानाः कटाक्षा एव बाणा यासां ताः। सेनाः कर्म।

अनङ्गः काम एव नराधिपस्तस्य। ३१–पापर्द्धिर्मृगयैव लीलासरसी क्रीडा-सरस्तस्या मराला हंसाः। कृतान्तो यमः। हिंसाया मूर्तिमत्या हिंसाया (घातस्य) कटाक्षाः। चित्रवर्णा बहुरङ्गविशिष्टाः। श्वानः विशेष्यम्। ३२–लङ्घनमतिक्रमणम्। हयेनाश्वेन। देवो विक्रमः। व्यालोलाश्चञ्चला मत्ता हरिणा येषु तानि। वनान्तराणि वनमध्यभागान्। ३३–सार्द्धं सह। परिग्रहेण परिवारजनेन। नीरन्ध्रेति–नीरन्ध्राणां सान्द्राणां नीलानां निचुलानां स्थलवेतसानां याः प्रचुराश्छदालयः पत्रपङ्क्तयस्ताभिः प्रच्छादिता अर्कस्य सूर्यस्य किरणा यासु तासु। ३४–विक्रमनिधेः पराक्रमसागरस्य विक्रमस्य पुरस्तात्। शैलानुकारिकरिणां पर्वताकृतिदन्तिनाम्। स्निह्यदिति–स्निह्यन्तीभिर्वराहगृहिणीभिः परिचुम्ब्यमानानि मुस्तासुगन्धीनि मुखानि येषां तादृशा बालका लघुवराहा यस्मिन् तच्चक्रवालम्। आविरासीत् प्रकटी-बभूव। ३५–पृष्ठस्थितानन्यशूकरान्। करिपीवरदेहं गजवत् पुष्टशरीरम्। एकं वराहम्। कक्षान्तरे बाहुमूलमध्ये। क्षपयाञ्चकार जघान। ३६–अवनौ पृथिव्याम्। मार्गणेन बाणेन। सशल्याः शङ्कुसहिताः। चेरुर्विचरन्ति स्म। शरधोरणिर्बाणपरंपरा। परेऽन्ये। ३७–कथा–पुरा किल विष्णुर्वराहत्वेनावतीर्य वसुधां दधारेति पौराणिकी कथात्रानुसन्धेया। चालुक्यभूपालशरो विक्रमक्षिप्तो बाणः। नष्टधृतिर्लुप्तधैर्यः। वसुधा क्षितिः। ३८–क्रोडो वराहः। नाराचेन बाणविशेषेण कीलितः प्रत्युप्तः। आलानं गजस्तम्भः। ३९–कनकशृङ्खलया कण्ठबद्धया स्वर्णशृङ्खलया। गहने वने। तया शृङ्खलया। विटपिनां वृक्षाणां कण्टका एव कीलकास्तेषु। उत्पफालोत्पतति स्म। ४०–व्यावृत्य प्रत्यागत्य। बाणविषये शरगोचरे। देहविरहान्मृत्योः। सर्वाङ्गसंज्वरकरः सकलावयवसंतापकः। प्रियविप्रयोगः पत्युर्विरहः। ४१–उड्डीयोत्लुत्य। निबिडीकृतचापदण्डे आकृष्टकार्मुके। चालुक्यभूभुजि विक्रमे। कुरङ्गा मृगाः। निर्बाधं भयरहितम्। ४२–स्वयमात्मनैव। पृषत्कधोरणीषु बाणपरम्परासु। शरगोचरं बाणविषयम्। दिव्यपयः आकाशजलम्। ४३–शिखण्डिनो मयूराः। पथिकप्रमदासु पान्थाङ्गनासु। कलेति–कलकेकाभिर्मयूरवाणीभिर्विकलः शून्यः। पयोदकालो वर्षासमयः। ४४–काकुत्स्थतो

रामचन्द्रात्। लघुत्वं हीनत्वम्। दशाननो रावणः। रघुराजपुत्रो रामचन्द्रः। पञ्चाननं सिंहम्। चुलुक्यवीरो विक्रमः। ४५–शरधेस्तूणीराद् विकृष्टै-र्निष्कासितैः। कङ्कपत्रैर्बाणविशेषैः। निकटं समीपगतमपि। रोहितां मृग-विशेषाणां या गर्भिण्यस्तासां चक्रवालम्। स्मरणसरणिं स्मृतिपथम्। आगादाजगाम। भूमिभर्तुर्विक्रमस्य। ४६–उत्सन्ना विनष्टाः केसरिणः सिंहा यतो यत्र वा तत्। कदर्थिताः पीडिता रङ्कुसार्था मृगविशेषसमूहा यत्र तत्। शिशिरश्रिया शीततुंशोभया। ४७–सुभ्रुवां कामिनीनाम्। घुसृणं कुङ्कुमम्। ऊष्मा तेजः। यामिकः प्राहरिकः। श्यामासु रात्रिषु। शैशिरीषु शिशिरर्तुसम्बन्धिनीषु। ४८–राङ्कवपटेषु मृगरोमजकम्बलेषु। हसन्तिकासु ॐ अंगारशकटीषु ॐ लीलेति–लीलया हसन् विलसन् मलयजेन्धनस्य चन्दन-काष्ठस्य पावको यासु तासु। धूमशिखासु धूपधूमपरंपरासु। ४९–अङ्गारहा-सिषु हसन्तिकाज्वलदग्निषु। उदराणि मध्यभागाः। तल्पेषु शय्यासु। प्रण-यिन्यः कामिन्यः। तुषारगर्वो हिममदः। ५०–गात्रेष्ववयवेषु। सौष्ठवकृता लाघवजनकेन। श्यामाभिः–रात्रिभिः। उल्लिखितेति–उल्लिखितो वर्द्धितः मन्मथस्य कामक्रीडाया विस्तरो याभिस्ताभिः। सुदृशां कामिनीनाम्। सर्व-र्तुगोत्रतिलकम् सकलर्तुपूत्तमम्। ५१–गौरी हरप्रिया। उदरं मध्यभागः। कण्ठक्षोदः शैत्याधिक्यात् कण्ठेषु क्षोभः। श्रीकण्ठस्य हरस्य हारोरगैर्भूषाभु-जङ्गैः। स्फारोन्मीलितेति–स्फारमत्यर्थमुन्मीलितो विस्तारं नीतः शारदागृहस्य काश्मीरसरस्वती–मन्दिरस्य बृहद्द्वाराग्रेषु स्थितानां घण्टानां रवो यैस्ते। श्लाघां प्रशंसापात्रत्वम्। कैलासशैलानिलाः कैलासगिरेः प्रवृत्ताः पवनाः। ५२–स्तोकमल्पमेव। वितस्ता नदी। पयोष्णी नदी। चञ्चन्तो दोलायमानाः। चन्द्रभागा नदी। यमुना नदी। मैत्री सम्पर्कः। धुन्वानाः कम्पयन्तः। सिद्धसिन्धोर्गङ्गायाः। तस्य विक्रमस्य। तुहिनगिरिर्हिमाद्रिः। समीराः वायवः कर्तृपदम्। ५३–सार्धं सह। दारैरङ्गनाभिः। लीलागारप्रमोदं विलासगृहा-नन्दम्। तादृक्षाणां पुण्यवतामित्यर्थः। विलासदरिद्रता क्रीडादारिद्र्यम्।

इति षोडशः सर्गः।

## अथ सप्तदशः सर्गः

१–तलं पृष्ठम्। अस्तकण्टकं शत्रुरहितम्। स विक्रमः। अर्थिनां याचकानाम्। आर्तिः पीडा। तडिद्विद्युत्। श्रियो राज्यलक्ष्म्याः। २–शेखरतां शिरोमणित्वम्। मानुषीं ॐ परचक्रकृताम् ॐ। दैवीं मारिप्रभृतिकाम्। चिच्छिदे नाशयति स्म। ३–पयोभिर्जलैः। अस्मान् पयोमुचः। पयोधयः समुद्राः। अस्य विक्रमस्य। तदिति–तस्य विक्रमस्य सेवनवाञ्छया। ४–क्षितौ पृथिव्याम्। किमन्यत् ॐ अनेरउं कसउं ॐ। अन्यायनिबर्हणोऽनीतिध्वंसकः। इक्ष्वाकुपतेः–रामचन्द्रस्य। ५–अत्यर्थमतिमात्रम्। ववुर्वान्ति स्म। फलानि कर्तृपदम्। भिया पापभीत्या। ६–अवज्ञातेति–अवज्ञातमुपेक्षितं कपाटमुद्रणं द्वारावरोधो यैस्तैः। क्षपासु रात्रिषु। कराः किरणाः। क्षपापतेश्चन्द्रस्य। ७–दिशः कर्म। तूर्यं वाद्ययन्त्रविशेषः। ध्वजांशुकेति–ध्वजांशुकैः पताकावस्त्रैः प्रावृत आच्छादितो भास्करो यत्र तत्। ८–निर्विनोदो निरुत्सवः। समापितेति–समापिता नाशिता अशेषा मदान्धा भूपा याभ्यां तयोः। भुजयोः स्वबाह्वोः। ९–समास्तुल्याः। सूनवस्तनयाः। अनन्यसाधारणपुण्यशालिनामसामान्यपुण्यवताम्। मनोरथा एव द्रुमाः। १०–वातायनं गवाक्षः। प्रमोदं ददुरानन्दयन्ति स्म। नन्दनाः पुत्राः। कृतास्पदा अवस्थिताः। विमानं व्योमयानम्। ११–अहं सुवर्णम्। नृपो विक्रमः। कर्णेषु भूषणत्वेन। अर्थिनां याचकानाम्। आख्यातुं वक्तुम्। कृतास्पदमवस्थितम्। १२–नरेन्द्रचामीकरं विक्रमप्रदत्तं सुवर्णम्। प्लोषभिया दाहभयेन। दुर्गतिर्दारिद्र्यम्। १३–शिरःस्थेति–शिरःस्थो मेरोः शिखरगतो यो देवालयः सुरगृहं स्वर्गस्तस्य पातभीततः पतनभयात्। प्रगल्भते पारयति। मां काञ्चनभूधरम्। अयं विक्रमः। काञ्चनभूधरो मेरुः। तत्र विक्रमे। १४–इह विक्रमसंनिधौ। कनकाद्रिर्मेरुः। नरेन्द्रहेम विक्रमप्रदत्तं सुवर्णम्। श्रुतिलग्नं कर्णेषु भूषणत्वेनावस्थितम्। १५–निवासो मन्दिरम्। कमलाविलासिनो विष्णोः। कलिच्छिदे तुर्ययुगध्वंसाय। क्ष्मावलयोदरात् क्षितिमण्डलमध्यात्। १६–उष्णदीधितेः सूर्यस्य। यं निवासम्। शार्ङ्ग-

भृतो विष्णोः। तुरङ्गमाला सूर्याश्वपङ्क्तिः। १७– स कमलापतिः। कण्ठीरवतां नृसिंहत्वम्। विपाटनार्थं विदारणाया दनुजेन्द्रो हिरण्यकशिपुः। कमलापतेर्विष्णोः। कलिकाल एव कुञ्जरो हस्ती। १८– नारायणनाभिपङ्कजं विष्णुनाभिसमुद्गतं कमलम्। मधुव्रतोत्करैर्भ्रमरसमूहैः। दिवानिशमहोरात्रम्। ते मधुव्रताः। निभेन व्याजेन। १९ – यदीयशृङ्गेषु यस्य निवासस्य मूर्धसु। काञ्चनकुम्भमण्डली सुवर्णकलशसमूहः। तृषा पिपासया। खरांशोः सूर्यस्य। २०–पुरन्ध्रिनृत्येषु लासिकालास्येषु। विनिर्यन्तोऽशवः किरणा यैस्तैः। ईक्षणैर्नेत्रैः। यत्र निवासे। रत्नोत्करशालभञ्जिका मणिनिर्मिताः पुत्तलिकाः। २१– वितानमुल्लोचः। डम्बर आटोपः। यत्प्राङ्गणसीम्नि यस्य निवासस्याङ्गणे। लासिका नर्तक्यः। पदं तद्भावः। व्योम्न्याकाशे। २२– कारणमानुषो हेतुविशेषेण गृहीतमनुजावतारः। एतस्य निवासस्य। अनुपमा श्रीः शोभा यस्य तेन। तुलां साम्यम्। गतश्रीः – गता श्रीः कमला यस्य सः। अम्भसां निधिः सागरः। २३ – नभःस्रवन्त्या आकाशगङ्गायाः। अच्युतपादपद्मतो नारायणचरणकमलात्। विपाण्डुभिर्धवलैः। यस्तडागः। २४–अस्य भर्तुर्विक्रमस्य। कुम्भसंभवोऽगस्त्यमुनिराचान्तसमुद्रः। यस्तडागः। तटेति–तटेषु त्रुटतामाघट्टितानां विटङ्कोर्मीणामुन्नततरङ्गाणां रवेण शब्देन। २५ – आदृतेति–आदृतः प्रेम्णाश्रितः क्षारपयोधेः संगमो यया सा। भागीरथि हे जाह्नवि। तरङ्गा एव हस्तास्तैः। नभसः सुरापगामाकाशगङ्गाम्। २६ – अवाप्तबन्धेन रामकृतसेतुबन्धनेन। लघुत्वमात्मनो हीनत्वम्। सुरराजकुञ्जर ऐरावतः। यस्मात्तडागात्। अभ्रमोः स्वप्रियायाः। २७– यत्पाथसि यस्य तडागस्य जले। अम्बुदैर्मेघैः। अवापिते प्रापिते सति। पुराणमुक्तामणिभिः प्राचीनमौक्तिकैः। एणचक्षुषां कामिनीनाम्। २८ – पाथोधिं सागरम्। असंख्येति–असंख्यानां निम्नगानां नदीनां मुखार्पणेनाग्रभागसम्बन्धेन चुम्बनेन चोच्छिष्टम्। 'नदीमुखेनेव समुद्रमाविशत्' इति कालिदासः। अरोचकाद् वैरस्यात्। तपात्यये वर्षायाम्। जह्रुरपहरन्ति स्म। आपगा नद्यः। २९ – ब्रह्मपुरी ब्राह्मणानां निवासभूमिः। पुरं विक्रमपुरनामधेयम्। विरिञ्चिर्ब्रह्मा। ३० – एकं वातायनम्। चुम्बति प्रविशति सति।

सौधविटङ्काः प्रासादशिखराणि । ३१–यदीयेति–यत्पदेन पुरपरामर्शः । सोपानमारोहणमार्गः । नितम्बिनीनां कामिनीनाम् । मयूखदण्डैर्दण्डायमानैः किरणैः । तपनीयं स्वर्णम् । ३२–यदग्रेति यस्य पुरस्य । वातायनं गवाक्षः । शृङ्गसद्मानि चन्द्रशालाः । अत्र सद्मसु । चित्रस्थितकुञ्जरक्रुधा आलेख्योल्लिखितगजविषयककोपेन । शक्रगजस्यैरावतस्य । ३३–यत्र पुरे । कुट्टिमो निबद्धा भूमिः । निरन्तरासु नितान्तं विस्तृतासु । निरालम्बगतिश्रमं निराश्रयगमनजातां श्रान्तिम् । ३४–यत्र पुरे । प्रतिबिम्बवर्त्मना प्रतिच्छायव्याजेन । चारुदृशां कामिनीनाम् । निशाकरश्चन्द्रः । कपोलयोर्लावण्यमेव जलं तस्मिन् । निमज्जति–समानकान्तिकत्वाल्लुप्यति । ३५–हरिर्विष्णुः । श्रीः पद्मा । मम स्मरस्य । अजस्रं निरन्तरम् । यत्र पुरे । अङ्कुशोऽवरोधनसाधनम् । ३६–प्रपिपर्व पर्वणि पर्वणि, विषुवत्प्रभृतिषु । तदन्तिकाद् विक्रमसंनिधेः । कलिः कलियुगम् । ३७–तुङ्गेषूच्चेषु । भूपतेर्विक्रमस्य । परं केवलम् । ३८–प्रवणे तत्परे । सुवर्णशैलो मेरुः । पारदो रसेन्द्रः । पारदस्पृष्टं सुवर्णं रजतधवलं भवतीति स्थितिः । ३९–द्विजेति–द्विजानां ब्राह्मणानां कृते कल्पशाखी कल्पतरुस्तेन । अमुना विक्रमेण । हेमतुलाधिरोहणे स्वर्णतुलापुरुषदानार्थम् । तस्य गिरेर्विन्ध्याचलस्य । अगस्त्यो विन्ध्यगुरुः कुम्भसंभवः । उन्नमने पुनरुत्थाने । ४०–प्रयच्छतः प्रददतः । यस्मात् विक्रमात् । कनकक्ष्माधरो मेरुः । कालिकया संगतिं कलङ्कयोगम् । स्वहेम्नि निजसुवर्णे । संक्रान्तिनिभात्प्रतिबिम्बव्याजात् । ४१–प्रदानलीलारसिको दानपरः । भूभुजां शत्रुनृपतीनाम् । हेमभिः स्वर्णैः । आशावदनानि दिशां मुखानि । ४२–मूर्द्धनि कृतस्थितिरग्रे स्थितः । चक्रवर्तिनां नृपाणाम् । विश्वचक्रं विश्वमण्डलम् । ऋद्धिरुन्नतिः । वेधसो ब्रह्मणः । ४३–विपक्षदुर्भिक्षकदर्थितः द्विषदभावदुःखितः । शौर्येति–शौर्येण कण्डूलौ कण्डूयुतौ भुजौ यस्य सः । चोलं चोलदेशनृपम् । काञ्चीं चोलदेशराजधानीम् । समनीकं युद्धम् । ४४–श्रियो लक्ष्म्याः । वार्धिः समुद्रः । कलिः कलहः । मुनेर्नारदस्य । क्रयापणं वीरवरणस्थानम् । निर्जरपण्ययोषितां देववाराङ्गनानाम् । तौ विक्रमचोलनृपौ । रणं विशेष्यम् । ४५–करवालयष्टयः खड्गलताः । कोशेति-

कोशः खड्गपिधानमेव बिलं रन्ध्रं तस्योदरान्मध्यात्। ततस्तदनन्तरम्। कृतान्तो यमस्तस्य पाशोरगाणां पाशसर्पाणां संनिभास्तुल्याः। ४६–मत्सरतोऽन्योन्यासहिष्णुत्वात्। प्रभूतं प्रचुरम्। बलद्वये सैन्ययुगले। ४७–हृदि स्ववक्षसि। दशनं करिदन्तम्। निकृत्य छित्वा। रन्ध्रे हृदयच्छिद्रे। कीलकं दन्तात्मकम्। प्रतिक्रियामवरोधनोपायम्। ४८–अंसे स्कन्धे। क्षुरप्रो बाणभेदः। तत् शिरः। एष सुभटः। बन्दिनं श्लाघाकारिणम्। ४९–सकङ्कटः कवचसहितः। उर इति–उरस्तटे वक्षःस्थले त्रुटद्भिराघट्टितैः पृषत्कैर्बाणैर्निष्ठ्यूतो निर्गतो हुताशनो वह्निर्यस्य सः। नो विवेद नानुभूतवान्। कृपाणं खड्गम्। ५०–रदाङ्कुरप्रोतं दशनभिन्नम्। पुलकोत्कराञ्चितं रोमाञ्चतरङ्गितम्। यश एव सुधारसस्तम्। ५१–विपक्षशस्त्रक्षपणैः शत्रुशस्त्रकृतच्छेदनैः। चण्डद्युतिमण्डलोदरे सूर्यमण्डलमध्ये। रणेऽभिमुखो हतः सूर्यमण्डलं भित्त्वा प्रविशतीति स्थितिः। ५२–शोणितपङ्कपातिनी रुधिरकर्दमे प्रतिबिम्बिता। दिनेश्वरस्य सूर्यस्य। मालिका पङ्क्तिः। आपानेति–आपानस्य रुधिरपानस्य कुतूहलेनागतानां क्षपाचरस्त्रीणां निशाचरीणां चषकानां पानपात्राणामुपमेयतां सादृश्यम्। ५३–लघु द्रुतम्। प्रतिपक्षं शत्रुम्। प्रविष्टेति–प्रविष्टानामङ्गेषु प्रोतानां नाराचानां बाणभेदानां चयस्यातिभारतः। प्रभूतवैलक्ष्यवता नितान्तं लज्जितेन। ५४–श्रुतिहस्तखण्डनात् कर्णयोः शुण्डादण्डस्य च छेदनात्। निग्रहणोचितं निकारयोग्यम्। कृशानुवर्णे वह्निसदृशे। रुधिरापगाभरे रक्तनदीप्रवाहे। ५५–रदद्वयेन दन्तयुगलेन। पाटनात् स्फुटितेन मध्यभागाद् विदीर्णेन। अमर्त्यभावं देवत्वम्। भटपेटके योधसमूहे। अमर्त्यदन्तित्वमैरावतत्वम्। ५६–विषाणिनां दन्तिनाम्। खुरप्रा बाणभेदाः। रदाङ्कुरा दन्ताः। सुरप्रसूनावलिर्देवक्षिप्तपुष्पवृष्टिः। वञ्चिताः परिहृताः। ५७–अथ पतिवरणार्थमागतानामप्सरसामुक्तीर्वर्णयति। शिरीषं पुष्पविशेषः। भुजावाल्मनो बाहू। संवरणस्रजो भर्तृवरणमालायाः। पदे स्थाने। मेनके सम्बोधनम्। द्युमालिकाः स्वर्गोद्यानपालिकाः। ५८–भर्तृदुर्भिक्षमसंख्यवीराणां हतत्वात्। मेनके सम्बोधनम्। प्रगल्भतां चातुर्यम्। ५९–अमी भटाः। विमानेषु व्योमयानेषु। मुधा वृथा। संज्ञां चेतनाम्। कृतफालं कृतोत्पतनं यथास्या-

त्तथा । प्रधनाङ्गणे रणप्राङ्गणे । ६० –विभिन्नमर्यादमन्यायपूर्णम् । अमुष्य भटस्य । प्रथमातिथेः सद्यः समागतस्य । ६१ – माला संवरणस्रक् । तदन्तरं मालार्पणपूर्वपश्चाद्भावः । भटाग्रणीर्भटश्रेष्ठः । वाचा स्वोक्त्या । ६२ – अन्तर्हितया गुप्तया । प्रतारितो वञ्चितः । स्मरान्धः कामपीडितत्वेन निर्विवेकी । तरसा वेगेन । उपसृत्य प्राप्य । ६३– नारदान्मुनेः । परोऽन्यः । विशारदो निपुणः । वृत्तिषु व्यवहारेषु । नोऽप्सरसाम् । कामुकदुर्गतिच्छिद्रं कान्तदारिद्र्याभावम् । ६४ – अप्सरसां स्वर्वेश्यानाम् । पञ्चशरस्य कामस्य । प्रवीरेति–प्रवीराणां भटानां कण्ठग्रहे आलिङ्गने रान्तेन समुत्पन्नेन कौतुकेन प्रधावितानाम् । कथा अन्योन्यालापः । ६५ – अत्रान्तरेऽस्मिन् क्षणे । कुञ्जरो हस्ती । ज्या मौर्वी । ज्यानादेति क्रियाविशेषणम् । शिक्षाशरव्यवदभ्यासार्थं विद्धानां लक्ष्याणामिव । अरातिचमूः शत्रुसेना । नाराचा बाणविशेषाः । ६६ – आरोहकान् हस्तिपकान् । अश्ववारान् सादिनः । प्रोतान् विद्धान् । इदं सर्वत्र सम्बध्यते । पदातिनिवहान् पादचारिसैनिकसमूहान् । नामाङ्कितैः स्वनामचिह्नितैः । चोलस्य चोलराज्ञः । ६७ – उत्सहते स्म युद्धसंनद्धोऽभूत् । द्वयी एव, नत्वस्य पराजयः । आविरभूत् प्रकटीबभूव । आशु द्रुतम् । चोलश्चोलदेशाधिपः । अपसारं पलायनम् । ६८ – शिथिलितचापः सरलितधनुः । काञ्ची नगरी चोलदेशराजधानी । निजनगरं कल्याणम् । कुन्तलक्ष्माभुजङ्गो विक्रमः ।

इति सप्तदशः सर्गः ।



# अथ अष्टादशः सर्गः

१–काश्मीरेषु काश्मीरदेशेषु। प्रवरपुरं काश्मीरनृपतिप्रवरसेननिर्मितकाश्मीरराजधानी। गौरी पार्वती। इन्दुमौलेः शिवस्य। यस्य पुरस्य। वितस्ता नदी। कलियुगमेव गजस्तस्याधोरणो हस्तिपकः। अङ्कुशत्वं सृणिभावम्। २–द्राक्षा मृद्वीका। करैः किरणैर्हस्तैश्च। कमलिनीकामुकः सूर्यः। यत्र पुरे। अंशुमालां किरणपङ्क्तिम्। ३–अर्धेन्दुमौलेः शैलं कैलासम्। ज्योत्स्नां कान्तिम्। दशास्यो रावणः। यस्मात् पुरात्। निवासान्निवासस्थानभूतात्। पुष्पकेण विमानेन। ४–मणिगृहभुवां रत्नप्रासादभूमीनाम्। व्याख्या शास्त्रव्याख्यानम्। अभिख्या शोभा। व्याख्येति–व्याख्यानपरायणे सति। सूरिचक्रे विद्वत्समूहे। पुष्पैः किं न वर्षन्ति नूनमेव पुष्पवर्षां कुर्युः। सुरगुरोर्बृहस्पतेः। वैलक्ष्यदीक्षां लज्जागमम्। ५–यस्याः शारदायाः। गौरीगुरुर्गिरिर्हिमालयः ❀ पण्डितश्च ❀। शिरांसि शिखराणि मस्तकानि च, सगौरवो भवतीति भावः। गङ्गा जाह्नवी। मधुमती नदी। सैकतं तटम्। शारदा सरस्वती। यत् पुरम्। ६–सारस्वतकुलभुवः सरस्वत्या आदिधाम्नः। तस्य पुरस्य। स्त्रीणामप्यास्तां पुंसाम्। जन्मभाषा मातृभाषा। प्रत्यावासं गृहे गृहे। ७–मन्येऽहं शङ्के। मन्थाचलो मन्दरस्तेन विदलितात् विलोडितात्। दुग्धसिन्धोः क्षीरसागरात्। भृत्वा पूरयित्वा। अमृतलहरी पीयूषतरङ्गसंततिः। वचांसि कर्म। प्रेमाकूतं प्रेमभावनाम्। शीकरैरमृतकणैः। द्राक्षाखण्डेषु मृद्वीकासमूहेषु। अमृतकिरणश्चन्द्रः। ८–दुर्लक्ष्यत्वमदृश्यत्वम्। कलियुगदृशां तुर्ययुगकृतावलोकनानाम्। ब्रह्मधाम्ना ब्राह्मणानां तेजसा। यत्र पुरे। विश्वासधाम्नि विश्वासपात्रे। त्रिनयनगुरोरद्रेर्हिमालयस्य। वाग्देवी सरस्वती। तपांसि कर्म। ९–तीरेति–तीरद्वन्द्वप्रणयिनां तटद्वयस्थितानां भवनव्रातानां प्रासादसमूहानां वातायनेषु तिष्ठन्तीति तादृशानि यानि स्वैरक्रीडोच्छलितानि स्वच्छन्दकेलिसमुन्मत्तानि मिथुनानि कामिद्वन्द्वानि तैश्छिन्नैर्हारैरवकीर्णा। यस्य पुरस्य। उत्सङ्गेऽङ्के। नीलकण्ठः शिवः। नीलकण्ठप्रसूता कुलसरिद्वितस्ता। गङ्गानु-

कारं मन्दाकिनीसादृश्यम् । १० – व्यसनमासक्तिः । कुङ्कुमं काश्मीरजम् । यत्र पुरे । स्तनपरिसरात् कुचप्रदेशात् । कान्तमन्यत्र रतं वल्लभम् । अङ्के मध्ये, उत्सङ्गे च । ईर्ष्यामर्षादीर्ष्याजन्यकोपात् । वीचयस्तरङ्गा एव हस्तास्तैः । वितस्ता नदी । आसां कामिनीनाम् । प्रतिकलं प्रतिक्षणम् । अलयो भ्रमराः । ११ – यस्मिन् पुरे । भट्टारकमठो मठविशेषः । पुरं मन्दिरम्, शिरोगृहं वा । सीमन्तिन्यः कामिन्यः । या श्रीः । श्रुतिकुवलयस्य कर्णोत्पलस्य । अपलापो निह्नवः । परिमलः सुगन्धः । १२ – यस्मिन् पुरे । सह्याः सोढुं योग्याः । अशिथिलेति – अशिथिलं यथास्यात्तथा प्रेङ्खिताश्चञ्चलीकृता भ्रुव एव लतास्तासाम् । मुकुलाः कुड्मलाः, विशेषणम् । कामिनीदृष्टयोऽङ्गनाकटाक्षाः, विशेष्यम् । त्रासो भयम् । हरिणप्रेयसी मृगी । पुष्पचापः कामः । १३ – यस्य पुरस्य । यस्मिन् संनिवेशे । रामाः कामिन्यः । कुसुमधनुषं कामम् । दृग्भिः स्वदृष्टिपातैः । उन्मार्गेति – उन्मार्गस्य मर्यादाविहीनस्य भर्गस्य रुद्रस्य क्रोधज्वालेव किसलयचयः पल्लवसमूहस्तस्मिन् । दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः । इत्यन्यत्र । १४ – अङ्कात् ( स्वस्य स्फटिकशिखरिणः ) उत्सङ्गात् । स्फटिकशिखरी कैलासः । वेद्मि अहं जाने । गौरीपतिवृषः शिववाहनवृषभः । यद्गेहानां यस्य पुरस्य गृहाणाम् । स्फाटिकेषु स्फटिकमणिमयेषु । १५ – धनपतिपुर्यलका । लङ्का रावणनगरी । सातङ्का भीता । त्रिदशनगर्यमरावती । मेरुर्हेमाद्रिः । यत् पुरम् । प्रद्युम्नक्षितिधरनिभात् सारिकापर्वतव्याजात् । उत्तमाङ्गं शिरः । १६ – येभ्यः काश्मीरेभ्यः । कुङ्कुमं काश्मीरजम् । छायोत्कर्षात् शोभाधिक्यात् । यस्मिन् पुरे । काश्मीरा देशः । उरगाधीशस्तक्षकः, शेषः ( ? ) । अस्मिन्नेव सर्गे ७० श्लोकोऽवलोक्यः । १७ – लीलेति – लीलया वल्गन्त उल्लसन्तः सरसा मसृणाश्च रम्याश्च भ्रूविलासा येषु तानि । कन्दर्पस्त्री रतिः । यदि शिक्षते तदा युगशतैरेवेति भावः । रामाः कामिन्यः । श्यामारमणश्चन्द्रः । यस्मिन् पुरे । हर्षोत्ताला आनन्दोन्मत्ताः । सरणिषु राजमार्गेषु । रणत्काञ्चयः क्वणन्मेखलाः । १८ – देवोद्यानेषु नन्दनवनेषु । तिलकतां भूषणत्वम् । अवाप्तैर्नरैः । यदीया यस्य पुरस्य इमे । श्री-

खण्डेति-श्रीखण्डाम्भसा चन्दनजलेन स्नपितानां मुरलप्रेयसीनां मुरलदेशाङ्गनानां गण्डैरिव पाण्डुभिद्राक्षाखण्डैः स्तबकिता लतामण्डपा येषु ते । १९ –अन्योन्येति–अन्योन्यं ग्रथिताभिर्लहरीभिस्तरङ्गैर्दोर्लताबन्धस्य भुजाश्लेषस्य बन्धुः सदृशः। यस्य पुरस्य । क्षपितकलुषो विगतपापः । पुण्यनद्योर्वितस्तासिन्धुनद्योः । यस्य संगमस्य । हलधरोऽनन्तनृपामात्यः । अग्रहारा ब्राह्मणनिवासभूमयः । २० – यस्मिन् पुरे । विषमधनुः कामः । कार्मणं वशीकरणसाधनम् । मनसिजः कामः । निबिडतरप्रेमबन्धेऽतिघनप्रेमपाशे । २१ –यद्भूषायां यस्य पुरस्यालङ्करणाय । विहितवपुषो निर्मापितस्य । स्फूर्तिरौन्नत्यं गौरवं वा । पदं स्थानम् । विद्यामठस्याध्ययनशालायाः । यस्मिन् मठे । मेखला रशनाः कर्तृपदम् । त्र्यक्षम् रुद्रम् । २२ – वैतस्तानां वितस्तानदीसम्बन्धिनाम् । चर्यामर्यादाया आचारविधेः । कृतयुगभुवः सत्ययुगकालिकस्य । प्रेङ्खिता ऊर्द्ध्वमुत्क्षिप्ताः । यत्तरङ्गैर्यस्य संगमस्योर्मिभिः। त्रिदशसुदृशां देवाङ्गनानाम् । देहभाजो मानवाः । २३ – तत् प्रसिद्धम् । पर्यन्तेति–पर्यन्ते प्रान्तभागे स्थितो गुणनिकाया नृत्यस्य मण्डपो यत्र तत् । यत्र पुरे । व्योमाङ्गणतिलकतामाकाशभूषणत्वम् । क्षेमगौरीश्वरस्य धाम काश्मीरनृपतिक्षेमगुप्तनिर्मापितं शिवमन्दिरम् । ꣸ खेमेसरदेउ ꣸ । रामाः कामिन्यः । रामानुकरणविधौ रम्याभिनयव्यापारे । ꣸ रामो रामचन्द्रः ꣸ । नाट्यप्रयोगे नाटकाभिनयक्रियायां, विशेष्यम् । योगस्थानां योगीन्द्राणाम् । आसूत्रयन्ति जनयन्ति । २४ – संग्रामोर्वीपरिवृढः काश्मीरनृपतिः संग्रामराजः । मठः संग्राममठः । यस्मिन् पुरे । सुधामभृतलेपम् । चन्द्रसीमाप्रदेशः प्रदेशविशेषः । अनन्तक्षितिपतिः काश्मीरनृपतिरनन्तः । वितस्तोपकण्ठे वितस्तानदीतटप्रान्ते । हरः शिवः । हारतां भूषणत्वम् । अग्रहारा ब्राह्मणानां निवासाः । २५ – गर्जदिति–गर्जन्त्यो वातायनानां विततयो यासु ताः । शास्त्रगोष्ठीवरिष्ठैः शास्त्रव्याख्याननिपुणैर्विद्वद्भिः । काष्ठीलद्विजवसतयः 'काष्ठील' इतिनामधेया ब्राह्मणानां निवासभूमयः । काष्ठीलेति- ꣸ जातिविशेषः ꣸ । वस्तुतस्तु वितस्तावामतटस्थः प्रदेशविशेषः । यत्र पुरे । कलेर्दर्शनादेव त्रासमिति–आत्मदर्शनेन कलियुगं भाययन्तीति भावः।

हुतभुजोऽग्नयः। २६ – यत्र पुरे। अनन्तक्षितिपगृहिण्याः सुभटायाः (तया निर्मापितं) शंकरागारं गौरीश्वरमन्दिरम्। तुङ्गिम्ना औन्नत्येन। गङ्ग-धाम–अन्नागारम्। रुतं शब्दम्। शनकैरनायासमेव। पौरकन्या नगर-बालिकाः। २७ – क्षेत्रेषु केदारेषु वनेषु च। वल्कलमन्यत्र वसनभूता तरु-त्वक्। जैत्रं जयशीलम्। तत्रत्यस्य काश्मीरस्थस्य। प्रथमवयसस्तारुण्य-वतः। यद् यस्माद्धेतोः। काश्मीरं कुङ्कुमम्। कनकसुहृदां स्वर्णसदृशानाम्। २८ – यत्र पुरे। प्रवरगिरिजावल्लभस्य गेहं काश्मीरनृपतिप्रवरसेननिर्मा-पितं शिवमन्दिरम्। आशां मनोरथम्। सुरपतिपुरममरावती। यद् गेहम्। द्यां स्वर्गम्। सार्धं सह। स्वर्गद्वारप्रतिमं स्वर्गस्य द्वारतुल्यम्। २९ – यस्मिन् पुरे। स्मेराक्षीणां नर्तकीनाम्। मसृणेति–मसृणै रम्यैः करणासङ्गैर्नाट्यभेद-प्रयोगैर्दत्तोऽङ्गहारोऽङ्गविक्षेपो यस्मिन् तत्। * करणानि १०८, अङ्गहाराः ३२ *। रम्भा चित्रलेखोर्वशी च स्ववेश्याः। स्तम्भं जडताम्। ३० – यस्मिन् पुरे। उर्वीपतिगृहततेः सौधपरंपरायाः। जानेऽहं शङ्के। यस्यां गृहततौ। स्वर्गरामा देवाङ्गनाः। लक्ष्यीभवन्ति वेध्यत्वमायान्ति। ३१ – यत्र पुरे। मसृणघुसृणं सुखदं कुङ्कुमम्। राङ्कवाणां पट्टिका मृगरोमजकम्बलानि। नौपृष्ठस्था नौकान्तःस्थाः। वितस्ता नदी। स्नानावासाः स्नानगृहाणि। दिशन्त्यर्पयन्ति। ३२ – वक्त्रन्यस्तैः कुम्भमुखार्पितैः। तुहिनशकलैर्हिमखण्डैः। दन्तुरा उन्नताः। काश्मीरीणां काश्मीरदेशाङ्गनानाम्। गात्ररेखा अङ्गानि। भीष्मेति–भीष्मस्य भयङ्करस्य ग्रीष्मस्य यः क्लमः क्लान्तिस्तस्य विरतये दूरीकरणाय। सर्वसाधारणत्वं सकलसुलभत्वम्। आयान्ति–एतानि वस्तूनि। ३३ – सत्यत्यागप्रमुखाः सत्यवादित्वौदार्यप्रभृतयः। तस्मिन् पुरे। आसीत् पूर्वं बभूव। अवनीति – अवनिः पृथ्वी, एव वनिता कामिनी तस्या वल्लभः। अनन्तदेवोऽनन्तनामधेयो नृपः। वैरीति – वैरिस्तम्बेरमाः शत्रुगजा एव घनघटा मेघपङ्क्तयस्तासां गर्जितानाम्। अगम्येऽगोचरे। धारापयसि कृपाणधाराजले। यदसेर्यस्य नृपस्य खड्गस्य। कीर्तिरेव हंसी। ३४ – शक-परिवृढः शकनृपतिः। सीमन्तिन्योऽङ्गनाः। येनानन्तेन। दरद् दरदेश-नृपतिः। कृपाणः स्वखड्गः। धौतः प्रक्षालितः। क्षोणीवलयः क्षितिमण्डलम्।

जह्नुकन्या गङ्गा । ३५ – कीर्त्या स्वयशसा । तिलकमलङ्करणम् । अलकागोपुराणां धनदपुरीद्वाराणाम् । क्रौञ्चस्याद्रेः क्रौञ्चाख्यपर्वतस्य । भृगुपतिः परशुरामः । १४ सर्गे ३९ श्लोकोऽप्यवलोक्यः । येनानन्तेन । अपि नाम 'व्रीडालवशबलिताः' इति पाठोऽनुचितः स्यात् ? पीवरे परिपुष्टे । रुषा अमर्षेण । सूत्रिताः पातिताः । ३६ – सिद्धैर्देवयोनिविशेषैः । सप्तर्षयो वसिष्ठप्रमुखाः । तिलास्तर्पणाद्यर्थं क्षिप्ताः । मानसस्य सरोवरस्य । यत्कान्ताभिर्यस्यानन्तस्यान्तःपुराङ्गनाभिः । त्रिनयनवधूः पार्वती । ३७ – योऽनन्तः । पूर्वपुंसां पूर्वजानाम् । रघुपति :–रामचन्द्रः । क्रीडोद्धृतो लीलयोत्क्षिप्तो हरगिरिः कैलासो येन सः । ते पूर्वजाः । लङ्काभर्तुः–रावणस्य । अर्धचन्द्रैर्बाणविशेषैः । ३८ – चम्पासीम्नि चम्पानामधेयदेशप्रान्तेषु । क्षितिपतिर्लोहराधिपः क्षितिराजः । दार्वाभिसारो देशविशेषः । त्रैगर्त्तीषु त्रिगर्त्तदेशसम्बन्धिनीषु । भर्तुलक्ष्मोणिर्देशविशेषभूमिः । नूनं 'शीतभीतेव' इत्युचितः पाठः । यस्यानन्तस्य । सुकृतवसतेः पुण्यधाम्नः । भूरुत्पतिस्थानानि कर्म । प्रतापः कोशदण्डजं तेजः प्रकृष्टतापश्च । ३९ – मध्ये वितस्तान्तर्वर्तिद्वीपे । दुर्गानुकारं दुर्गसदृशम् । वैतस्तेन वितस्तासम्बन्धिना । परिखा दुर्गादिपरितः खातम् । विजयक्षेत्रं विजयक्षेत्रेश्वरनामधेयः प्रदेशविशेषः । अग्रहारा ब्राह्मणनिवासाः । प्राकारत्वं वप्रभावम् । कलिभयभिदे कलियुगभयापनोदनाय । येनानन्तेन । ४०– देवी महिषी । तस्यानन्तस्य । चन्द्रिका ज्योत्स्ना । इन्दुश्चन्द्रः, जालन्धराधिप इन्दुचन्द्रश्च । सुभटेति सूर्यमतीत्यपरनामधेया । आदिभार्या पट्टमहिषी । मन्येऽहं वेद्मि । कुण्ठा–असमर्था । वैकुण्ठोरःस्थलेति–वैकुण्ठस्य विष्णोरुरःस्थलमेव जलधरो मेघस्तस्योत्सङ्गस्तस्य तत्र वा सौदामिनी विद्युत् । श्रीर्लक्ष्मीः । ४१– तस्याः सुभटायाः । परिच्छेदमुद्रामियत्ताम् । क्षान्तिः क्षमा । दाक्षिण्यं परच्छन्दानुवर्तित्वम् । भर्तुरनन्तस्य । क्षोणीति–क्षोणीपतिशतानां परःशतशत्रुनृपतीनां यानि शिखारत्नानि तेषां शाणः कषणपाषाणः । ४२ – कायस्थैरधिकरणादीनां लेखकैः । कुटिललिपिभिरछद्मपूर्णलेखनपटुभिः । विटैर्धूर्त्तैः । गायनैर्वन्दिभिः । देवागाराणि देवमन्दिराणि, द्विजगृहाणि गुरुगृहाणि च । यत्संगृहीता यया सुभटया संगृहीता । चपलता

चापल्यम् । ४३–श्रीकाश्मीरक्षितिभुजि–अनन्ते । यद्गुणानां यस्याः सुभटाया गुणानां दाक्षिण्यादीनाम् । क्लमः क्लान्तिः । अन्तःपुराणि सपत्न्यः । नभस्याकाशे । बिसिनीपत्रमित्रे कमलिनीदलतुल्ये । लुलोठ स्वसंतापशान्त्यर्थम् । श्च्योतदिति–श्च्योतत् क्षरद् धारायाः कृपाणधारायाः सलिलं यस्मात्तत्, कृपाणम् । धाम स्वनिवासस्थानम् । लक्ष्मीः कृपाणं धाम अकरोदिति सम्बन्धः । ४४ – कीर्तीति–कीर्तिज्योत्स्नया स्वयशश्चन्द्रिकया स्नपिता भुवनस्य श्रीर्यया सा । अधिष्ठानमध्ये वितस्तापुलिनवर्तिनि प्रदेशविशेषे । ※ अहीठाणमाहि ※ । स्वीयनामाङ्कितं सुभटामठम् । सा सुभटा । आस्पदे आश्रये । दैशिकानां विदेशवासिनाम् । अक्ष्णोर्नेत्रयोः । सुधावर्तितामभृतशल कात्वम् । नर्तितश्रीर्नृत्यशोभा । ४५ – भाण्डागाराण्यन्नाद्यागाराणि । सा सुभटा । अवनेः पृथिव्याः । यामेति – यामस्तम्बेरमाणां प्रहरहस्तिनां ※ प्रहरहाथि ※ सहचराः सदृशाः स्फूर्जन्तः – आशागजेन्द्रा ऐरावताद्या यस्यां तादृशी क्षोणी पृथ्व्येव कोशस्तस्य प्रणयिनि तत्र विद्यमाने । ४६ – त्रिभुवनगुरोः कामारातेर्धाम गौरीश्वरमन्दिरम् । सा सुभटा । वितस्ता नदी । काञ्चीनिवहो मेखलामण्डलम् । उपान्ते समीपे । भवः शिवः । मनोभूः कामः । ४७ – यस्यानन्तस्य । क्षितिपतिर्नाम्ना क्षितिराज इति । भोजक्ष्माभृद्धाराधिपः । लोहराखण्डलो लोहरदुर्गाधिपतिः । शङ्केऽहं जाने । यन्मुखे यस्य क्षितिपतेराननने । सूक्तिदेवी सरस्वती । ४८ – यस्य क्षितिपतेः । परिणतिः प्रागल्भ्यम् । तर्कमार्गे न्यायशास्त्रे । गिरां गोचरे वाग्विषये । कोविदानां विदुषाम् । श्रीर्लक्ष्मीः । ४९ – गण्डेति – गण्डाभोगेषु कपोलेषु उड्डमरा अत्युत्कटं प्रवृत्ता विलुठन्त्यश्च या बाष्पधारा नयनाश्रुप्रवाहास्तासां शतेन । व्यातन्वानो जनयन् । तटीः कर्म । सुन्दरीणां प्रतिपक्षाङ्गनानाम् । यस्य क्षितिपतेर्बाहुरिति सम्बन्धः । राजपुरी काश्मीरसमीपस्थो देशविशेषः । बाहुस्थलेति – बाहुस्थलं देशविशेष एव कमलिनी तस्या राजहंसस्य नृपश्रेष्ठस्य पक्षिविशेषस्य च अम्बुवाहो जलधरः । ५० – श्रोणीबिम्बे नितम्बबिम्बे । पार्श्वद्वन्द्वे वामदक्षिणभागयोः । रत्नेति – रत्नच्छायानां मणिकान्तीनां छुरणे रुषणैः

सुभगं यत् स्वर्णपत्रं कर्णभूषणं तदवमानयति तिरस्करोतीति तादृशः। श्रवसि कर्णे। वैष्णवीं विष्णुसम्बन्धिनीम्। यः क्षितिपतिः। ५१—करः शुण्डादण्डः। दोर्दण्डौ बाहू। तस्यां सुभटायाम्। कलशनृपतिर्नाम्ना कलश इति। तस्यानन्तस्य। तनूजः पुत्रः। संख्योत्सङ्गाद् रणप्राङ्गणात्। भूभुजां शत्रुनृपतीनाम्। श्री राज्यलक्ष्मीः। यस्य कलशस्य। द्विपेति—द्विपमदो गजदानजलमेव मषी तस्याः पङ्केन लिप्ते। ५२—दर्पेति—दर्पण गर्वेणाध्माताः पूरिता ये प्रतिभटनृपव्राताः शत्रुनृपतिसमूहास्तेषां सेना-शिरांसि, कर्म। सान्द्रोल्लसदिति—सान्द्रमुल्लसन्त्योऽसिलताः खड्गा एव शैवलास्तैः श्यामलानि। हेमाम्भोजेति—हेमाम्भोजप्रतिमं सुवर्णकमलतुल्यं यद्वदनं तस्यालोकनात्। कीर्तिरेव हंसोऽवतंसो यस्याः सा। ५३—दिग्यात्रासु दिग्विजयोद्यमेषु। स्फटिकवद्विशदा निर्मला छाया यस्य तत्। अच्छोदं तन्नामकं सरः। इन्द्रायुधः कादम्बरीनायकचन्द्रापीडतुरगः। कादम्बरी बाणभट्टप्रणीतकथानायिका। असौ कलशः। चन्द्रापीडः कादम्बरीनायकः। ५४—येन कलशेन। उदीच्यामुत्तरस्याम्। गिरीन्द्रः कैलासः। चण्डीपतिः शिवः। वृषो वाहनवृषभः। शङ्केऽहं वेद्मि। लङ्कापतिः रावणः। यस्य गिरीन्द्रस्य। तलभुवि अधःप्रदेशे। गणाः प्रमथाद्याः। ५५—कनककपिशाः स्वर्णवर्णाः। धनपतिपुरादलकायाः। मानसं सरः। यः कलशः। दत्ताश्लेषमालिङ्गनपुरस्सरम्। हरमुकुटतः शिवशिरःशेखरात्। स्रस्तया निर्गतया। नाकनद्या गङ्गया। हेमाब्जानां सुवर्णकमलानाम्। वसतिमिति—यक्षकन्याभ्यो हेमाब्जानि ददाविति तात्पर्यम्। मानसात् सरसः। ५६—यस्य कलशस्य। उदारामुत्कृष्टाम्। श्रीर्लक्ष्मीः। वाग्देवता सरस्वती। एका श्रीः। अभिनवेति—अभिनवाम्भाद्वन्नूतनजलधरव-न्नीलमातपत्रं यस्याः सा। श्वेतेति—श्वेतच्छत्रायिता धवलातपत्रतुल्या सितयशश्चन्द्रिका यस्याः सा। अन्या वाग्देवता। ५७—लङ्घनमतिक्रमणम्। बालुकाब्धिः काश्मीरेभ्य उत्तरस्यां दिश्यवस्थिता, बालुकार्णव इति ख्याता मरुभूमिः। यः कलशः। स्त्रीराज्यं देशविशेषम्। जयापीडः काश्मीर-नृपतिः। तत्र ※ स्त्रीराज्यजये ※। श्लाघामात्मगौरवम्। सव्रीडः सलज्जः।

ताडके विनाशके । ताडका निशाचरी । ५८-यत्खड्गस्य यस्य कलशस्यासेः । कालजिह्वासनाभेः यमरसनासदृशस्य । त्रासोल्लासेन भयवृद्ध्या त्रुटिता भग्ना मदनस्योन्मादमुद्रा येषां ते । पटलं समूहः । क्षोणीलेखासु क्षितितलेषु । शाद्वलं हरिततृणम् । सकलेषु नीलवस्तुषु वैरस्यं वहन्ति स्मेति भावः । ५९-देव्या राजमहिष्याः । कुचपरिसरे स्तनतटे । हर्षदेवः कलशतनयः । सेवेति-सेवया नतस्य धनपतेः कुबेरस्य प्राभृतैकावलीमुपायनत्वेन प्रदत्तमेकावृतं हारम् । यः कलशः । अस्य धनपतेः । रघुपतिः-रामचन्द्रः । पुष्पके रावणापहृते कुबेरविमाने * रावणविमानम् * । ६०-खड्गे चन्द्रहासे । खेदमागात् खिन्नो बभूव । यः पौलस्त्यः । शाणार्थी तेजनपाषाणेच्छुः । हरशिखरिणा कैलासेन । यो रामभद्रः । पौलस्त्यं रावणम् । यस्य कलशस्य । मुद्रितो न्यूनः । रामभद्रो दाशरथिः । ६१-मन्थक्षोणीधरो मन्दरगिरिः । अम्भोधिर्नदीवल्लभः क्षीरसागरः । क्ष्माभृन्मूलानि पर्वताधोभागान् । दलयति-एकेन मन्दरेण तद्वल्लभोऽब्धिर्विदलित इति सकलानपि पर्वतान् विदीर्णयति । व्यायतैर्विस्तृतैः । चक्रं मण्डलम् । स्थलं स्थलरूपाम् । यः कलशः । क्षितिरेव कुमुदिनी । चन्द्रभागां नदीम् । ६२-तपनदुहितुः सूर्यतनयायाः । शेषःल्लोललीलामुर्वरिततरङ्गशोभाम् । पटली समूहः । कालिन्दीं यमुनाम् । यस्य कलशस्य । पृथ्वीति-पृथ्व्या लीलया लुलिता-इतस्ततो लुठिता या कबरी तद्वन्मेचकाम् । आचचाम पानेन क्षपयामास । ६३-उर्वीधरः शेषो हिमालयो वा तस्य सहचरैः सदृशैः । तत् क्षेत्रम् । कौरवं क्षेत्रं महाभारतयुद्धभूमिः । यत्र क्षेत्रे । क्षत्रेति-क्षत्राणां क्षत्रियाणां क्षतजपटले रुधिरपङ्के । पार्थोऽर्जुनः । कर्णोऽङ्गराजो राधेयः, श्रोत्रं च । कुरुपतिर्दुर्योधनस्तस्य यश एव दन्तपत्रं ताटङ्कः । ६४-यस्य कलशस्य । प्रेयानतिशयेन प्रियः । श्रीहर्षः शीलादित्यो हर्षवर्द्धनः । * पण्डितचक्रवर्ती राजविशेषः * । हर्षदेवो नाम्ना हर्ष इति । तीक्ष्णः-इति विधेयम् । कनकवलये सुवर्णकटके । क्ष्माभृतो राजानः । कुण्ठधारः-अनुवाद्यम् । कृपाणः स्वखड्गः । ६५-यस्य हर्षदेवस्य । पदपरिणतिः-रचनापरिपाकः, प्रतिष्ठातिशयो वा । चर्या योगमार्गस्थितिः ।

वादिनां प्रतिपक्षविदुषाम्। मौनमुद्रा मौनकारिणी। यस्य कवित्वस्य। सिकता बालुका तद्वत् कर्कशा, विधेयम्। ६६—येन हर्षदेवेन। उत्कण्ठा-व्यसनगुरुणा—औत्सुक्यासक्तिदायिना। दत्तपाताः—दत्ततापाः? स्वस्मिन् स्वीये। मूर्च्छाक्रमपरवशा अचेतनाः। तासां तरुणीनाम्। गण्डस्थलभुवि कपोलप्रदेशे। श्रोत्रयोर्दन्तपत्रं कर्णभूषणम्। ६७—दुर्गं 'लोहर' इति ख्यातम्। क्षितिपतिः क्षितिराजः। अस्मिन्नेव सर्गे ४७ श्लोकोऽवलोक्यः। यस्य हर्षदेवस्य। पुलकोत्कर्षमानन्दातिरेकम्। उत्कर्षदेवः—नाम। म्लेच्छेति—म्लेच्छा ये क्षोणीपतयो नृपास्तेषां हरयोऽश्वास्तेषां खुरक्षोद-मुद्राभिर्दरिद्रा रहिता। ६८—तस्य कलशस्य। पुष्पोपहारवति पूजनायार्पितैः पुष्पैः सहिते। व्यधिकरणरूपकम्। नूतनेति—बाल्ये एव। वाग्देवता सरस्वती। व्यधित—अकरोत्। ६९—परिणतलिपेरभ्यस्तहस्तस्य। स्रष्टुर्ब्रह्मणः। आश्चर्यलेखं विस्मयप्रदसौन्दर्यविशिष्टम्। वपुषि शरीरे। भूपालसूनोर्विजय-मल्लस्य। यत्र लावण्ये। स्फूर्जदिति—स्फूर्जत उल्लसतो लटभललनालोकस्य सुन्दरीजनस्य लोभैकपात्रे लालसाश्रये। ज्या मौर्वी। मुखरः सशब्दः। पुष्पचापः कामः। ७०—सांप्रतं कविः स्वजीवनवृत्तान्तं निबध्नाति। सार्द्ध-गव्यूतिमात्रीं क्रोशत्रयपरिमिताम्। उत्तुङ्गानि चैत्यान्यायतनानि यस्मिन् तत्। अहिभर्तुः सर्पराजस्य। अस्मिन्नेव सर्गे १६ श्लोकोऽवलोक्यः। धर्मेति—धर्मध्वंसायोद्यतस्य कलेस्तुर्ययुगस्य शिरसश्छेदाय चक्रत्वम्। ७१—यस्य जयवनस्य। खोनमुषः' इति नामधेयम्। अयमेव ग्रामो महाकवि-बिल्हणजन्मभूमिः। उपकण्ठसीम्नि प्रान्तप्रदेशे। आलानं गजबन्धन-स्तम्भः। यूपा यज्ञस्तम्भाः। यत्र ग्रामे। कलिः कलियुगमेव द्विपस्तेन। ७२—तस्य खोनमुषस्य। प्रथमवसतेरादिधाम्नः। श्रीकण्ठेति—श्रीकण्ठस्य शिवस्य श्वशुरशिखरिणो हिमालयस्य क्रोडलीलाललाम्नः—उत्सङ्गविलास-भूषणस्य। कुङ्कुमं काश्मीरजम्। यस्य खोनमुषस्य। द्राक्षां मृद्वीकाम्। सरयूर्नदी। पुण्ड्रक इक्षुभेदः। ७३—कीर्तिप्रणयि यशोभाजनम्। उर्वैरत्यर्थम्। ब्रह्मप्रवणमनसो वेदाध्यनरताः परब्रह्मध्यानतत्परा वा। यान् ब्राह्मणान्। गोपादित्यः काश्मीरनृपतिः। मध्यदेशस्थान् यान् गोपादित्यः काश्मीरा-

नानिनायेति भावः । ७४ – येषां ब्राह्मणानाम् । शतमखसखी मिन्द्रतुल्याम् । स्तोमः समूहः । मखपरिचिते यज्ञसम्बन्धिनि । अन्तरिक्षमाकाशम् । नाकः स्वर्गः । शक्र इन्द्रः । परं केवलम् । छायया दरिद्रः कान्तिहीनः । छायया ❀ धूमेन चित्रं विच्छायं जायत इति भावः ❀ । वस्तुतस्तु स्वपदभ्रंशभयात् शक्रस्य वैवर्ण्यम् । ७५ – तेषां ब्राह्मणानाम् । मुक्तिकलशस्तन्नामधेयः । अग्निहोत्रस्य परिशीलनान्नैरन्तर्येणानुष्ठानाज्जातेन । स्वेदाम्भसा घर्मजलेन । ७६ - शङ्केऽहं वेद्मि । पङ्केरुहवसतिना ब्रह्मणा । अन्योन्यं परस्परमीर्ष्या-कलहे चतुरा निपुणाः । याः श्रुतयः । यो मुक्तिकलशः । श्रुतीनां वेदानाम् । ७७ – श्रुतपारदृश्वा शास्त्रपारङ्गतः । अस्य मुक्तिकलशस्य । प्रालेयभूधरो हिमा-लयः । तिमिरच्छलेन पुञ्जीभूतान्धकारव्याजेन । यस्य राजकलशस्य । ७८– अखिलजनताभोगहेतोः निष्प्रतिबन्धं सकलजनोपभोगार्थम् । व्याख्यास्था-नानि शास्त्रव्याख्यानगृहाणि । यस्य राजकलशस्य । मण्डलाग्रो देशः खड्गश्च । कलिस्तुर्ययुगम् । अङ्गरक्षा अङ्गरक्षणसाधनानि । क्षमासारः क्षान्तिधाम, पृथिव्यां श्रेष्ठो वा । सारस्वतेति-सरस्वत्याः सम्बद्धो यो रसस्तस्य निधान-माकरः । श्रुतिर्वेदः । तस्माद्राजकलशात् । महाभाष्यं महर्षिपतञ्जलि-प्रणीतं पाणिनिसूत्रभाष्यम् । व्याख्या व्याख्यानम् । तिलकितं मण्डितम् । ८० – इष्टापूर्तेषु क्रतुकर्मसु खातादिकर्मसु च । गहनं दुष्करम् । उचितेषु कृत्येषु । दृष्टादृष्टानाम् ( ऐहिकामुष्मिकोभयविधानाम् ? ) उपकरणगणानां साधनसमूहानां प्रापणे । यः ज्येष्ठकलशः । नागादेवी बिल्हणजननी । शुभेति कल्याणसमूहभाजनम् । ८१ – त्वङ्गदिति-उल्लसत्कनककान्तिभिः । कार्मणं वशीकरणसाधनम् । लोचनानां जननेत्राणाम् । सूरेर्विदुषः । तस्माज्ज्येष्ठकलशात् । अनभिव्यक्तोऽस्पष्टो मञ्जीराणां नादो यस्याः सा । मौञ्जीबन्धात् यज्ञोपवीतसंस्कारात् । यस्य बिल्हणस्य । ८२ – साङ्गः शिक्षा-दिसहितः । फणिपतिदिशा पतञ्जलिमतानुसारम् । शब्दशास्त्रे व्याकरणे । श्रवणसुभगा कर्णयोर्मनोहारिणी । प्रज्ञा बुद्धिरेव आदर्शो दर्पणः । अस्य बिल्हणस्य । संक्रान्तं प्रतिबिम्बितम् । ८३ – विद्या एव वध्वस्तासाम् । चक्रं मण्डलम् । यस्य बिल्हणस्य । वदनप्रेक्षि मुखापेक्षि । चरणरजसा पादपां-

भ्यो दत्त्वा स्वबाणैः समुद्रमपसार्य नूतनोद्गतभूमावुवासेति पौराणिकमा-ख्यानम्। ९९—खल्वाटत्वं केशहीनत्वम्। घटयन् रचयन्। अम्बुधेः समुद्रस्य। यः सेतुः। लङ्केति—लङ्कानाथेन रावणेन अपहृतायास्तनयायाः सीतायाः पृष्ठे लग्ना। धात्री पृथ्वी। अन्तिके समीपे। परं केवलम्। अस्य बिल्हणस्य। १००—सामान्योर्वीपतिषु तुच्छनृपेषु। असौ बिल्हणः। बुधानां पण्डितानाम्। ककुभि दिशायाम्। यदिति—यस्या दक्षिणदिशो लीलाक्षीणां कामिनीनां कुचतटभुवां स्तनतटस्थलानाम्। गुरुत्वं भारवत्त्व-मुपाध्यायत्वं च। यासां भुवाम्। जृम्भते—उल्लसति। पञ्चबाणः कामः। १०१—नीलच्छत्रं चोन्मदगजघटा च तयोः पात्रमास्पदम्। उत्त्रस्तो भीत-श्चोलश्चोलदेशनृपतिर्यस्मात्तस्मात्। चालुक्येन्द्रात् विक्रमात्। यो बिल्हणः। अत्र दक्षिणस्यां दिशि। विद्यापतित्वं प्रधानपण्डितत्वं, विद्याधिकारित्वम्। अस्मिन् बिल्हणे। तदनु विद्यापतिपदप्राप्त्यनन्तरम्। निबिडेति—निबिडा-श्लेषस्य गाढालिङ्गनस्य हेवाकलीलयौत्सुक्यविलासेन वेल्लितोर्बाह्वोः क्वणिता वलयाः कटकानि यस्याः सा। १०२—दिङ्मातङ्गैराशागजैः। यस्य बिल्हण-स्य। निद्रामुद्राप्रणयिषु सुप्तेषु। षट्पदेषु भ्रमरेषु। तेन बिल्हणेन। इदं विक्रमाङ्काभिधानम्। अव्याजकान्तं निसर्गरम्यम्। कर्णाटेन्दोर्विक्रमस्य। भूषा अलङ्करणम्। १०३—लब्धा मया प्राप्ता। साधुभोग्याः—दानादिना। योग्यैः पण्डितैः। कलहतः शास्त्रार्थविधानात्। गोष्ठीबन्धः शास्त्रविनोदः। सारेति-सारनिष्कर्षे तत्त्वोपलम्भे दक्षया प्रज्ञया बुद्ध्या लब्धा स्तुतिर्यैस्तैः। काश्मीरकैः काश्मीरदेशवासिभिः। मे बिल्हणस्य। १०४—आरुक्षाम वय-मारूढवन्तः। आत्मनि बहुत्वम्। कणिका लेशः। अद्राक्ष्म दृष्टवन्तः। लवा लेशाः। अध्यगीष्महि—अधीतवन्तः। कांश्चिद् विरोधिपण्डितान्। पराजेष्महि पराजितवन्तः। अकार्ष्म कृतवन्तः। अनर्थेति-अनर्थो दुष्कृति-रेव कन्था जीर्णवस्त्रम्। मनः (बिल्हणस्य) चित्तं, कर्तृ। अमर्त्यापगां गङ्गाम्। १०५—मन्दाकिन्या वियद्गङ्गायाः। पवनेति—पवनेन चटुलाश्च-ञ्चला उत्ताला अत्युत्कटा वीचय एव दुकूलं वसनं यस्य तस्मिन्। कूलोत्सङ्गे तटप्रान्ते। योगनिद्राभियोगं ध्यानरतिम्। शेषा उर्वरिताः। परिणतौ वार्द्ध-

क्ये । वासरा दिवसाः । पुण्यभाजां पुण्यशालिनां जनानाम् । शान्तेति–शान्ते शान्तरसमये स्वान्ते चित्ते स्थितो गिरिसुतावल्लभः शिवो येषां तेषाम् । १०६–स्वेच्छेति–स्वेच्छया स्वच्छन्देन भंगुरं विनश्वरं भाग्यमेव मेघस्तस्य तडितो विद्युतः, विशेषणम् । श्रियः सम्पदः । सततस्य सदा शब्दायमानस्य, प्रयाणपटहस्य परत्र यात्राया आनकस्य श्रद्धा । त्राणं शाश्वतत्वम् । यशोमये कीर्तिरूपे । वपुषि शरीरे । वो युष्माकमुर्वीश्वराणाम् । काव्यमेवामृतानि सुधास्तैः । आराध्य संसेव्य । पदे योग्यस्थाने । निर्गर्वं यथा स्यात्तथा । उर्वीश्वरा हे राजानः । १०७–सुकवीति–सत्कविभिः प्रदर्शिते तद्विषयके वा स्नेहबन्धने । भवतां राज्ञाम् । एतदिति–एतेषां सुकवीनां प्रसादात् । तुष्टैः सुकविभिः । बद्धं प्रथितम् । रघुस्वामिनो रामचन्द्रस्य । रुष्टैः कविभिः । हास्यमार्गमुपहासास्पदत्वम् । दशास्यो रावणः । १ सर्गे २७ श्लोकोऽवलोक्यः । १०८–यस्याचलदुहितुः प्रेयसः शिवस्य । स्वेच्छायाः ( स्वच्छन्देन कृतानां ) शबरचरितानां ( पाशुपतास्त्रप्रदानकाले ) किरातलीलानामालोकनेन त्रस्तया । न्यस्तः क्षिप्तः । चूडाशशिकलिकया शेखरचन्द्रकलया । कुरङ्गो लाञ्छनमृगः । व्युत्पत्तिं परिपाकम् । श्रुतीनां वेदानाम् । अचलदुहितुः पार्वत्याः प्रेयान् देवः शिवः । वो युष्माकं सहृदयानाम् ।

इति शम् । श्रीरस्तु । कल्याणमस्तु । समाप्तेयं चरितचन्द्रिकाभिधाना विक्रमाङ्कदेवचरितमहाकाव्यटिप्पणी । श्रीः श्रीः श्रीः ।

विजयादशमी, सं० २००१.

———*———

# विक्रमाङ्कदेवचरितस्य
# श्लोकानुक्रमणी

# विक्रमाङ्कदेवचरितस्य प्रधानानां नाम्नां विषयाणां च

## अनुक्रमणी



* वर्णात्मिका संख्या सर्गमङ्कात्मिका च श्लोकं सूचयति ।

# विक्रमादित्यस्य (षष्ठस्य) नीलगुण्डताम्रशासनम् ।

२५, दिसम्बर १०८७ ई०, ३, सितम्बर ११२३ ई०

( एपिग्राफिया इण्डिका १२ शो ग्रन्थः, १४२ पत्रात्प्रभृति )

ॐ—जयत्याविष्कृतं विष्णोर्वाराहं क्षोभितार्णवम् ।
दक्षिणोन्नतदंष्ट्राग्रविश्रान्तभुवनं वपुः ॥

श्रियमुपहरताद्वः श्रीपतिः क्रोडरूपो
विकटविशददंष्ट्राप्रान्तविश्रान्तिभाजम् ।
अवहददयदंष्ट्राकृष्टविस्पष्टकाण्ड-
प्रतनुबिसजटाग्रग्रन्थिवद् यो धरित्रीम् ।

करिमकरमकरिकाङ्कितजलनिधिरशनां वशीकरोत्ववनिवधूम् ।
त्रिभुवनमल्लक्ष्मापतिरकलङ्कयशोऽम्बुराशिवलयितभुवनः ॥

गद्यम्—स्वस्ति, समस्तभुवनसंस्तूयमानमानव्यसगोत्राणां हारीतिपुत्राणां कौशिकीवरप्रसादलब्धश्वेतातपत्रादिराज्यचिन्हानां सप्तमातृकापरिरक्षितानां कार्तिकेयवरप्रसादलब्धमयूरपिच्छकुन्तध्वजानां भगवन्नारायणप्रसादासादितवर-वराहलांछनेक्षणक्षणवशीकृताऽरातिराजमण्डलानां समस्तभुवनाश्रयसर्वलोकाश्र-यविष्णुवर्द्धनविजयादित्यादिविशेषनाम्नां राजरत्नानामुद्भवभूमिः—वृत्तम्—

कवलितनललक्ष्मीर्दुर्ज्जयौर्जित्यहारी विहतपृथुकदम्बाडम्बरो मौर्यनिर्जित् ।
निजभुजबलभूम्नोत्पाटयन् राष्ट्रकूटान् खिलितकलचुरिश्रीरस्ति चालुक्यवंशः ॥

तज्जेषु राज्यमनुपाल्य गतेषु राजस्वेकान्नषष्टिगणनेषु पुराध्ययोध्यम् ।
तद्वंशजास्तदनु षोडश भूमिपालाः क्ष्मां दक्षिणापथजुषं बिभरांबभूवुः ॥

दुष्टावष्टब्धायां कतिपयपुरुषान्तरान्तरितायां चालुक्यकुलसम्पदि भूय-श्चालुक्यवंश्य एव—

कन्दः कीर्तिलताङ्कुरस्य कमलं लक्ष्मीविलासास्पदम्
वज्रं वैरिमहीभृतां प्रतिनिधिर्देवस्य दैत्यद्रुहः ।

राजासीज्जयसिंहवल्लभ इति ख्यातश्चरित्रैर्निजै-
र्यो रेजे चिरमादिराजचरितोत्कण्ठाः प्रजानां हरन् ॥

यो राष्ट्रकूटकुलमिन्द्र इति प्रसिद्धं कृष्णाह्वयस्य सुतमष्टशतेभसैन्यम् ।
निर्जित्य दग्धनृपपञ्चशतो बभार भूयश्चलुक्यकुलवल्लभराजलक्ष्मीम् ॥

चटुलरिपुतुरगपट्टभटकरटिघटाकोटिघटितरणरागः ।
सुकृतहरचरणरागस्तनयोऽभूत्तस्य रणरागः ॥

तत्तनयः पुलकेशी केशिनिषूदनसमोऽभवद्राजा ।
वातापिपुरीवरपतिरकलितखलकलिकलङ्ककालः ॥

वयमपि पुलकेशिक्ष्मापतिं वर्णयन्तः पुलककलितदेहाः पश्यताद्यापि सन्तः ।
स हि तुरगगजेन्द्रग्रामसारं सहस्रद्वयपरिमितमृत्विक्साच्चकाराश्वमेधे ॥

तत्तनयः — नलनिलयविलोपी मौर्यनिर्वाणहेतुः प्रथितपृथुकदम्बस्तम्बभेदी कुठारः ।
भुवनभवनभागापूरणारम्भभारव्यवसितसितकीर्तिः कीर्तिवर्मा नृपोऽभूत् ॥

तदनु तस्यानुजः—

सर्वद्वीपाक्रमणमहसो यस्य नौसेतुबन्धै-
रुल्लङ्घ्याब्धिं व्यधित पृतना रेवतीद्वीपलोपम् ।
राज्यश्रीणां हठपतिरभूद्यश्च कालच्चुरीणाम्
बभ्रे भूमिं सह स सकलैर्मङ्गलैर्मङ्गलीशः ॥

ज्येष्ठभ्रातुः सति सुतवरेऽप्यर्भकत्वादशक्ते –
र्यस्मिन्नात्मन्यकृत हि धुरं मङ्गलीशः पृथिव्याः ।
तस्मिन्प्रत्यार्पिपदथ महीं यूनि सत्याश्रयेऽसौ
चालुक्यानां क इव हि पथो धर्म्यतः प्राच्यवेत ॥

जेतुर्दिशं विजितहर्षमहानृपस्य दातुर्मनोरथशताधिकमर्थयद्भ्यः ।
सत्यादिसर्वगुणरत्नगणाकरस्य सत्याश्रयत्वमुपलक्षणमेव यस्य ॥

अडमरीकृतदिग्वलयोऽर्हितद्विडमरीपरिगीतमहायशाः ।
मृडमरिष्टभिदं मनसोद्वहन्निडमरिः क्षितिपोऽजनि तत्सुतः ॥

सुतस्तदीयो गुणरत्नशाली भूवल्लभोऽभूद्भुजवीर्यशाली ।
आदित्यवर्माऽर्जितपुण्यकर्मा तेजोभिरादित्यसमानधर्मा ॥

तत्सुतो विक्रमादित्यो विक्रमाक्रान्तभूतलः ।
ततोऽपि युद्धमल्लाख्यो युद्धे यमसमो नृपः ॥

तज्जन्मा विजयादित्यो वीरानेकाङ्कसंगरे ।
चतुर्णां मण्डलानामप्यजयद्विजयोपमः ॥

तद्भवो विक्रमादित्यः कीर्तिवर्मा तदात्मजः ।
येन चालुक्यराज्यश्रीरन्तरायिन्यभूद्भुवि ॥

विक्रमादित्यभूपालभ्राता भीमपराक्रमः ।
तत्सूनुः कीर्तिवर्माऽभून्मृत्प्रासार्दितदुर्जनः ॥

तैलभूपस्ततो जातो विक्रमादित्यभूपतिः ।
तत्सूनुरभवत्तस्माद् भीमराजोऽरिभीमकः ॥

अय्यणार्यस्ततो जज्ञे यद्वंशस्य श्रियं स्वकाम् ।
प्रापयन्निव वंशं स्वं स वव्रे कृष्णनन्दनाम् ॥

अभवत्तयोस्तनूजो विभवविभासी विरोधिविध्वंसी ।
तेजोविजितादित्यः सत्यधनो विक्रमादित्यः ॥

चेदीशवंशतिलकां लक्ष्मणराजस्य नन्दनां श्रुतशीलाम् ।
बोन्थादेवीं विधिवत्परिणिन्ये विक्रमादित्यः ॥

सुतमिव वसुदेवाद्देवकी वासुदेवं गुहमिव गिरिजामिर्देवमर्धेन्दुमौलेः ।
अजनयदथ बोंथाद्देव्यतस्तैलभूपं विभवविजितशक्रं विक्रमादित्यनाम्नः ॥

अरिकुम्भिकुम्भभेदनरिपुदुर्गकवाटभञ्जनप्रभृतिः ।
सहजबलस्य हरेरिव बालक्रीडाभवद्यस्य ॥

किञ्च राष्ट्रकूटकुलसम्बद्धावुभौ –

और्जित्याच्चरणाविव प्रचलितौ साक्षात्कलेः क्रामतः
क्रूरौ बद्धशरीरकौ गुरुजनद्रोहप्ररोहाविव ।
कालात्खण्डितराष्ट्रकूटककुलश्रीवल्लिजाताङ्कुरौ
लूनौ येन सुखेन कर्कररणस्तम्भौ रणप्राङ्गणे ॥

इत्थं पुरा दितिसुतैरिव भूतधात्रीं यो राष्ट्रकूटकुटिलैर्गमितामधस्तात् ।
उद्धृत्य माधव इवादिवराहरूपो बभ्रे चलुक्यकुलवल्लभराजलक्ष्मीम् ॥

भम्मह्रट्टादभवद्भूपालाद्राष्ट्रकूटकुलतिलकात् ।
लक्ष्मीरिव सलिलनिधेः श्रीजाकव्वाह्वया कन्या ॥

चालुक्यवंशाम्बरभानुमाली श्रीतैलभूपाल उपायतैनाम् ।
तयोश्च लोकाभ्युदयाय योगः स चन्द्रिकाचन्द्रमसोरिवासीत् ॥

श्रीतैलभूमिपालात् श्रीजाकव्वा समजीजनत् ।
श्रीमत्सत्याश्रयं स्कन्दमम्बिका त्र्यम्बकादिव ॥

तस्यानुजः श्रीदशवर्मनामा तद्वल्लभा भाग्यवती च देवी ।
तयोरभूद्विक्रमशीलशाली श्रीविक्रमादित्यनृपस्तनूजः ॥

असौ निजज्येष्ठपितुः परोक्षं बभार वाराशिवृतां धरित्रीम् ।
भुजेन केयूरलतामिवोच्चैर्विदारितारातिकदम्बकेन ॥

तदनु तस्यानुजः —

यस्याखिलव्यापि यशोऽवदातमकाण्डदुग्धाम्बुधिवृद्धिशङ्काम् ।
करोति मुग्धामरसुन्दरीणामभूत्स भूयो जगदेकमल्लः ।

सदावनस्थः पटुविक्रमाढ्यो मदान्धगन्धेभघटाविपाटी ।
धरोर्जितप्रस्फुरितप्रभासो रराज योऽसौ जयसिंहराजः ॥

अगमदखिलधात्री येन राजन्वतीत्वम्, निवसति नृपलक्ष्मीर्यस्य शुभ्रातपत्रे ।
स सकलनमितारिक्षोणिभृन्मौलिरत्नद्युतिशबलितपादो गण्डरुल्लाण्डभूपः ॥

विख्यातकृष्णवर्णे तैलस्नेहोपलब्धसरलत्वे ।
कुन्तलविषये नितरां विराजते मल्लिकामोदः ॥

ततः प्रतापज्वलनप्रभावनिर्मूलनिर्दग्धविरोधिवंशः ।
तस्यात्मजः पालयिता धरायाः श्रीमानभूदाहवमल्लदेवः ॥

आत्मावस्थानहेतोरभिलषति सदा मण्डपं मालवेशो
दोलत्तालीवनान्तान्यनुसरति सरिन्नाथकूलानि चोलः ।
कन्याकुब्जाधिराजो भजति च तरसा कन्दरास्ता हिमाद्रे —
रुद्दामा यत्प्रतापप्रसरभरभवोद्भीतिविभ्रान्तचिन्ताः ॥

अम्लानतैलगुणसंग्रहणप्रवृद्धतेजोविशेषदलितद्विषदन्धकारः
अन्वर्थतां समनुसृत्य कविप्रधानैर्यः प्रोच्यते ननु चलुक्यकुलप्रदीपः ॥

औद्धत्ययुक्तान्धकजप्रभावनिर्मूलनोद्दामबलस्य यस्य ।
विराजते निर्जितमीनकेतोर्देवस्य चालुक्यमहेश्वरत्वम् ॥

तस्मादजायत जगज्जनितप्रमोदः श्रृङ्गारवीररसिकः कविलोककान्तः ।
कान्ताविलोलनयनोत्पलचारुचन्द्रश्चालुक्यवंशतिलको भुवनैकमल्लः ॥

यः पत्रं स्फुटपुष्कराक्षरधरं पाणौ कृपाणच्छलाद्
आजन्मप्रतिपन्नदास्यविजयश्रीदत्तमुच्चैर्दधत् ।
साक्ष्यं ग्राहयितुं दिशां परिवृढान् सर्वानिव प्राहिणोत्
प्रत्याशं निजकीर्तिमभ्रतटिनीस्पर्धानुबन्धोद्यताम् ॥

तदनु तस्यानुजः—

आसीत्तेजःकलितकमलोल्लासनप्रौढपाद—
स्पर्शादुच्चैः श्रियमवनिभृच्छेखराणां दधानः ।
ध्वान्तभ्रान्तिं दधदिव दृशोरञ्जनं वैरिवीर—
स्मेराक्षीणां मुहुरपहरन् विक्रमादित्यदेवः ।

भूभारं नमितफणीश्वरं भुजाभ्यां बिभ्राणः पटहपलायितक्षितीशः ।
यश्चोच्चैरपहतनाकिशाखिलीलः प्रख्यातस्त्रिभुवनमल्ल इत्युदारः ॥

यातोऽन्वेष्टुं जनकजनितां वल्लभोदारलक्ष्मीम्
भ्रात्रा सार्द्धं हरिबलयुतः स्वां सुमित्रात्मजेन ।
तीरे सिन्धोर्बहुमुखभयादेत्य वैभीषणश्री—
धाम्ना नेमे द्रविडपतिना यश्च चालुक्यरामः ॥

सर्वाशाविजयप्रयाणसमयज्ञाताखिलोर्वीपथ—
प्रस्थानेव महीमतीत्य विमला यत्कीर्तिरब्धिं गता ।
प्रेक्ष्यस्ते विजयश्रिया परवशो दूरीकरोत्येष माम्
इत्याख्यातुमिवार्णवस्थितिजुषः शौरेस्त्रिलोकीगुरोः ॥

स तु श्रीपृथिवीवल्लभमहाराजाधिराजपरमेश्वरपरमभट्टारकसत्याश्रयकुलतिलकचालुक्याभरणश्रीमत्त्रिभुवनमल्लवल्लभनरेन्द्रदेवः कुशली कुशलिनः सर्वानेव यथासम्बध्यमानमानकान् राष्ट्रपतिविषयपतिग्रामकूटकायुक्तकनियुक्तकाधिकारिकमहत्तरादीन् समादिशत्यस्तु वः संविदितं यथास्माभिश्चालुक्यविक्रमवर्षे द्वादशे अङ्कतोऽपि १२ प्रवर्त्तमानकाले प्रभवसंवत्सरे पुष्यबहुलत्रयोदशीवड्डुवारोत्तरायणसङ्क्रान्तौ बहूनि महादानानि दत्वा तद्दक्षिणाकाले कल्याणपुर-

समावासितनिजविजयस्कन्धावारे पलतपाण्ड्यविज्ञप्त्या द्रविडदेशागतेभ्यो नानागोत्रेभ्यो नानावेदशाखाशास्त्रपारगेभ्यस्त्रिशतसङ्ख्याकेभ्यो ब्राह्मणेभ्यः श्रीमत्त्रिभुवनमल्लदेवेन कोकलिपञ्चशतदेशमध्यस्थितविक्किगसप्तत्यन्तर्वर्त्ती नीरुगुण्डनामा ग्रामः धारापूर्वकमग्रहारीकृत्य दत्तः। पञ्चशतेभ्य एव ब्राह्मणेभ्यः चालुक्यविक्रमवर्षे अष्टाचत्वारिंशे अङ्कतोऽपि ४८ प्रवर्त्तमानकाले शोभाकृत्संवत्सरे भाद्रपदशुद्धश्रवणद्वादश्यां सोमवारे बहूनि महादानानि दत्त्वा तद्दक्षिणाकाले वैजयन्तीपुरसमावासितनिजविजयस्कन्धावारे श्रीकरणाधिकारिसर्वाध्यक्षद्रविडादित्यप्रेरितपलतपाण्ड्यपौत्ररायपाण्ड्यविज्ञप्त्या श्रीमत्त्रिभुवनमल्लदेवेन स एव ग्रामः कृष्णपल्लिकासमेतः तेभ्य एव ब्राह्मणेभ्यः धारापूर्वकं शासनीकृत्य दत्तः। तैरेव ब्राह्मणैः तद्देशस्वामिने पिण्डादानस्वरूपेण सुवर्णशतचतुष्टयं देयम्। सशुल्ककरबाधापरिहारः समस्तादेयसहितो राजकीयानामनङ्गुलिप्रेक्षणीयो निधिनिधानसमेतः सर्वनमस्यः त्रिभोगाभ्यन्तरसिद्धया शासनीकृत्य दत्तः। तस्य ग्रामस्य सीमान्तानि कथ्यन्ते। प्राच्यां दिशि गजपाषाणः ततो खल्वाटपर्वतश्च। आग्नेय्यां दिशि तलेवाग्यग्रामात् पश्चिमासन्नप्रदेशे स्रोतः। कमण्डलुकार्पासग्रामात् पश्चिमासन्नप्रदेशे स्रोतोऽन्तरञ्च। दक्षिणस्यां दिशि तिलकनामग्रामात् उत्तरासन्नप्रदेशे स्रोतः। नैऋत्यां दिशि शैलः। तस्य चोत्तरतो लक्ष्मगेहनामग्रामात् पूर्वतो महिषपाषाणः। पश्चिमस्यां दिशि मधूकवृक्षसरः। ततः पश्चिमोत्तरतः आयस-सार-तिन्त्रिणीकवृक्षश्च। वायव्यां दिशि दीर्घतुङ्गपर्वतः। उत्तरस्यां दिशि स्वर्णखदिरवल्मीकः। ऐशान्यां दिश्यक्षरपाषाणः। इति सीमान्तप्रमाणानि। तत्रस्थभीमेश्वरदेवाय गन्धपुष्पधूपदीपनैवेद्याद्यर्चनार्थम् खण्डस्फुटितजीर्णोद्धारनवसुधाकर्मार्थम् नृत्यगीतवाद्यभोगपादमूलपरिवारार्थम् ब्राह्मणतपस्विभोजनार्थञ्च। आदित्यनामपल्लिका सशुल्ककरबाधापरिहारः समस्तादेयसहितो राजकीयानामनङ्गुलिप्रेक्षणीयो निधिनिधानसमेतः सर्वनमस्यस्त्रिभोगाभ्यन्तरसिद्धया धारापूर्वकं देवभोगार्थं शासनीकृत्य दत्तः। तस्याः पल्लिकायाः सीमान्तानि कथ्यन्ते। प्राच्यामाग्नेय्यां दक्षिणस्यां नैऋत्याञ्च नीरुगुण्डग्रामोक्तसीमेव सीमा। पश्चिमस्यां दिशि नागरसरःसेतुः। वायव्यामुत्तरस्यामैशान्याञ्च चूतह्रदः स्रोतः। इति आदित्यपल्लिकायाः सीमान्तप्रमाणानि। एवं पूर्वप्रसिद्धसीमासमन्वितश्चतुराघाटविशुद्धः स युष्माभिरागामिभिरस्मद्वंश्यैरन्यैश्च भूमिपालैः पालनीयः।

तथा चोक्तं भगवता वेदव्यासेन –

बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥

अपहरणेऽपि च दोषस्तेनैवोक्तः —

स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥

सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥

विन्ध्याटवीष्वतोयासु शुष्ककोटरशायिनः ।
कृष्णसर्पा हि जायन्ते ब्रह्मदेयापहारिणः ॥

रामभद्रेणाप्युक्तम् —

सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान् भाविनः पार्थिवेन्द्रान् भूयो भूयो याचते रामभद्रः ॥

मद्वंशजाः परमहीपतिवंशजा वा पापादपेतमनसो भुवि भाविभूपाः ।
ये पालयन्ति मम धर्ममिमं समस्तं तेभ्यो मया विरचितोऽञ्जलिरेष मूर्ध्नि ॥

मयेदं शासनाधिकारिकाक्षपटलिकमहाप्रचण्डदण्डनायककालिदाससुतविक्रमादित्यानुमत्या । वत्सगोत्रसामवेदिभट्टविलासोपमानार्यमस्वामिसूनुना काश्मीरभट्टमल्लयपण्डितेन दानाधिकारिणा लिखितमिदमिति शुभम् । श्रीशारदायै नमः ॥

# लोहर–वंशः

❀ सिंहराजः ( लोहराधिपतिः )

- ❀ उदयराजः
  - ❀ विग्रहराजः
    - ❀ क्षितिराजः
      - ❀ भुवनराजः
  - संग्रामराजः (दिद्दादत्तकतनयः) (१००३–२८ ई०)
    - हरिराजः (१०२८ ई०)
    - अनन्तः (१०२८–६३ ई०)
      - कलशः (१०६३–८९ ई०)
        - हर्षः (१०८९–११०१)
        - उत्कर्षः (१०८९ ई०)
        - ❀ विजयमल्लः
- दिद्दा (९८०/१–१००३) काश्मीरनृपतिक्षेमगुप्त–(९५०–५८ ई०) पत्नी।

❀ ईदृशचिह्नाङ्कितैर्न शासितं काश्मीरराज्यम् ।

# कल्याण-पश्चिम-चालुक्याः

१. तैलपः ( तैलः, द्वितीयः )
( ९७३–९७ ई० )
राष्ट्रकूटनृपतिकक्क (तृतीय) पुत्रीं जाकब्बामुदवहत् । राष्ट्रकूटान्विजित्य पश्चिमचालुक्य-राज्यलक्ष्मीं पुनरुन्निनाय । 'नूरमडितैलः' 'त्रैलोक्यमल्लः' 'आहवमल्लः' इति च तस्य विरुदान्यासन् ।

२. सत्याश्रयः
(९९७–१००८ ई०)
'इरिविभुजङ्गः' 'सत्तिगः' 'अकलङ्कचरितः' 'आहवमल्लः'
राजराजचोलेन (प्रथमेन) युयुधे ।

दशवर्मा (यशोवर्मा)
भाग्यवती-भागत-पतिः ।

कन्या, पल्लवेरिवि-नोलम्बपत्नी

कुन्दः (कुन्दिगः)
(१०१९-२८-३१ ई०) वर्षेषु वनवासशासकः ।

३. विक्रमादित्यः (पंचमः)
'त्रिभुवनमल्लः' 'विक्रमाङ्कः'
(१००८-१४ ई०)

४. अय्यणः (द्वितीयः)
(१०१४-१५)

कन्या-अक्कादेवी १०१०-५४ ई.
वत्सरेषु किसुकाडप्रदेशं शशास ।
हाङ्गलकादम्बसामन्तपत्नी ।

५. जयसिंहः (तृतीयः)
'जगदेकमल्लः'
चोलराजेन्द्रेण (प्रथमेन)
युयुधे । सुग्गलादेवीमुपयेमे ।

६. सोमेश्वरः (प्रथमः) 'आहवमल्लः' त्रैलोक्यमल्लः'
चोलराजत्रयेण युयुधे । गंगराजपुत्रीं मैलाळदेवीं
पल्लवराजपुत्रीञ्चोदवहत् । 'कोप्पम्' कुडलसंगमम्'
प्रभृतिस्थलेषु युद्धानि । तुङ्गभद्रायां जलसमाधिः ।
(१०४२—३०, मार्च १०६८ ई०)

कन्या—हन्मा (आवल्लादेवी)
सेउणदेशयादव-
भिल्लम (तृतीय) पत्नी ।

७. सोमेश्वरः (द्वितीयः)
'भुवनैकमल्लः'
(३०, मार्च १०६८–७६ ई०)

८. विक्रमादित्यः (षष्ठः)
'त्रिभुवनमल्लः'
'विक्रमाङ्कः'
(१०७६–११२७ ई०)

जयसिंहः (चतुर्थः)
नोलम्बवाडी-वनवासप्रदेशशासकः ।

विष्णुवर्द्धनः
विजयादित्यः

जयकर्णः
'त्रैलोक्यमल्लः'
अल्पायुः ।

९. सोमेश्वरः (तृतीयः)
'भूलोकमल्लः'
(११२७–३८ ई०)

कन्या—मैलाळदेवी
गोपककादम्बजयकेशि (द्वितीय) पत्नी ।

# चोल-प्राच्यचालुक्य-वंशयोरेकीभावः

**चोलवंशः**

क ख
१०. राज. राजराजः ( प्रथमः )
( ९८५–१०१६ ई० )

ग
११. पर. राजेन्द्रः 'गंगैकोण्डचोलः'
(१०१२–४३ ई०)

कुन्दव्वय्यर (कन्या) ⟷ २६. विमलादित्यः (१०११–२२ ई०)

ङ
१२. राज. राजाधिराजः (प्रथमः) 'जयंकोण्डचोलः' (१०१८–५२ ई०)

च
१३. पर. राजेन्द्रदेवः (१०५२–६३ ई०)

छ
१५. राज. वीरराजेन्द्रः (१०६३–७० ई०)

ज
अम्मङ्गदेवी ⟷ २७. राजराजः, नरेन्द्रः (प्रथमः) (१०२२–६३ ई०)

१६. पर. अधिराजराजेन्द्रः (मृत्युः १०७० ई०)

कन्या ⟷ विक्रमादित्यः (षष्ठः) पाश्चात्यचालुक्यवंशीयः (१०७६–११२७ ई०)

**प्राच्यचालुक्यवंशः**

घ
२६. विमलादित्यः (१०११–२२ ई०)

झ
विजयादित्यः (सप्तमः)
(१) वेंगिराजप्रतिनिधिः
(१०६३–७६ ई०)

१४. राजमहेन्द्रः

मधुरान्तकी ⟷ ञ १७. (चोल.) (२८ चालुक्य) राजेन्द्रचोलः (द्वितीयः) राज. कुलोत्तुङ्गचोलः ( प्रथमः ) (१०७०–१११८ ई०)

| | | | |
|---|---|---|---|
| राजराजः ( चोलगंगः )<br>( ४ ) वेंगिराजप्रतिनिधिः<br>( १०८४–८८–९ ई० ) | राजराजः ( मुंमडिचोलः )<br>( २ ) वेंगिराजप्रतिनिधिः<br>( १०७६–७८ ई० ) | वीरचोलः<br>( ३, ५ ) वेंगिराजप्रतिनिधिः<br>(१०७८–८४ ई०)<br>अपिच<br>(१०८८–९–९२–३ ई०) | १८. पर. विक्रमचोलः<br>'अकलङ्कः', 'त्यागसमुद्रः'<br>( १११८–३३ )<br>( ६ ) वेंगिराजप्रतिनिधिः<br>(१०९२–३–१११८ ई०) |

| | |
|---|---|
| ——— | चिह्नमिदं चोलवंशसूचकम् |
| ~~~~~ | „ चालुक्य „ „ |
| ——— | „ तयोरेकीभाव „ |
| ←——→ | „ विवाहसम्बन्ध „ |

क. चोलवंशेऽयं विजयालयात् ( परकेसरिणः ८४६–८० ई० ) दशमो नृपतिरासीत्। २५ जून ९८५–१२ जुलाई ९८५ ई० दिवसयोरन्तरे राज्यारम्भः। ख. चोलवंशनृपतयः एकस्यान्तरेण 'परकेसरी' इति 'राजकेसरी' इति च विरुदं दधिरे। अत्र पर० = परकेसरी, राज० = राजकेसरी, इत्यवगन्तव्यम्। ग. बहुलप्रतापशाली भूपालोऽयं 'पण्डितचोल' 'मदुरान्तक' 'उत्तम' 'मुडिकोण्डचोल' इति विरुदान्तराण्यवहत्। अस्य राज्यारम्भः ३०, मई १०१२ ई०। घ. प्राच्यचालुक्यवंशे कुब्जविष्णुवर्द्धनादयं २६ तमो नृपतिरासीत्। ङ. १०१८ ई० तः १०४३ ई० यावत् स्वपित्रा सह सहशासकत्वेन, ततश्च १०५२ ई० यावत् स्वातन्त्र्येण शशास। २८. मई १०५२ ई० दिवसे 'कोप्पम्' युद्धे वीरगतिं लेभे। च. राजेन्द्रदेवस्य राज्यारम्भतिथिः–२३, मई १०५२ ई०। छ. वीरराजेन्द्रस्य राज्यारम्भः १३, मार्च १०६३ ई० दिवसादनन्तरं वत्सराभ्यन्तरे। ज. एतां प्राच्यचालुक्यवंशजो राजराजः ( प्रथमः ) उपयेमे। तयोस्तनय एव प्राच्यचालुक्यो राजेन्द्रः ( द्वितीयः ) आसीत्। झ. स्वभ्रातृव्य–कुलोत्तुङ्गचोलस्य ( प्रथमस्य ) अधीनतायां वेंगिदेशराजप्रतिनिधिशासकः। ञ. चालुक्यवंशेऽयं २८ तमो नृपतिरासीत्। १०६३ ई० वत्सरादेतच्छासनमारब्धम्। 'करिकालचोल', 'अभय', 'जयधर', 'विरुदराज-भयङ्कर' इति चास्य विरुदान्तराण्यभवन्। चोलवंशबीजमेवास्मिन्नाधिक्यमभजत। निजजनन्यंमङ्गदेवीस्वत्वमिति चोलराज्यं मदीयमेवेत्ययं मेने। परं चोलराज्यपुरुषोत्तराधिकारिभिर्विहिते विरोधेऽयं तैर्युयुधे। चोलेषु पराजितेष्वधिराजराजेन्द्रे च यममन्दिरातिथौ चोलराज्यमयमात्मसाच्चकार, चोलचालुक्यराज्ये चैकीकृत्य कुलोत्तुङ्गश्चोलः ( प्रथमः ) इति विरुदं दधार। अस्य राज्याभिषेकतिथिः २८, जून १०७० ई०। २९, जून १११८ ई० दिवसेऽस्य शासनमन्तं जगाम।

परिशिष्टम् घ.

## समकालं शासितवतां राज्ञां नामावली

| पाश्चात्यचालुक्याः | परमाराः | चोलाः | प्राच्यचालुक्याः |
| --- | --- | --- | --- |
| तैलपः ९७३–९७ ई० | मुञ्जः (९७४–९५ ई०) | राजराजः (१मः)<br>(९८५–१०१६ ई०) | |
| सत्याश्रयः ९९७–१००८ ई० | सिन्धुराजः (९९५–१०१० ई०) | | |
| विक्रमादित्यः (पंचमः) १००८–१४ ई० | | राजेन्द्रचोलः 'गंगैकोण्डचोलः<br>(१०१२–४३ ई०) | विमलादित्यः<br>(१०११–२२ ई०) |
| अय्यणः (२यः) १०१४–१५ ई० | भोजः (१०१०–१०५५) ई० | राजाधिराजः (१०१८–५२ ई०) | राजराजः<br>(१०२२–६३ ई०) |
| जयसिंहः १०१५–४२ ई० | | राजेन्द्रदेवः (१०५२–६३ ई०)<br>वीरराजेन्द्रः (१०६३–७० ई०) | |
| सोमेश्वरः (१मः) १०४२–६८ ई० | | अधिराजराजेन्द्रः (१०७० ई०) | राजेन्द्रचोलः (२यः)<br>(१०६३–७० ई०) |
| सोमेश्वरः (२यः) १०६८–७६ ई० | जयसिंहः (१०५५–६० ई०) | | |
| विक्रमादित्यः (षष्ठः) १०७६–११२७ ई० | उदयादित्यः (१०६०–८७ ई०) | राजेन्द्रचोलः (२यः)–कुलोत्तुङ्गचोलः (१मः)<br>(१०७०–१११८ ई०) | |